अद्वैतसभा - वज्रमहोत्सवे समर्पिता

# ॥ अद्वैतग्रन्थमाला ॥

## प्रथमो भागः

अत्र अद्वैतपराः अद्यावधि अमुद्रिताः त्रिंशद्ग्रन्थाः संयोजिताः


संपादकः—पण्डितराजः पण्डितप्रवरः

S. सुब्रह्मण्यशास्त्री M.A.,

मद्रपुरी



मुद्रणालय : लिबर्टि प्रेस्

प्रकाशकः

S. सुब्रह्मण्यशास्त्री

स्वाम्य अद्वैत समाया एव

१९६०

मूल्यं रू. ५.

## FOREWORD

The public might remember that through the efforts and blessings of His Holiness Sri. Sankaracharya Swamigal of Kamakoti Peetam, the Kumbakonam Advaita Sabha celebrated its Golden Jubilee in 1945 with great enthusiasm and issued three big volumes of essays in Sanskrit Tamil and English by eminent scholars establishing Advaita as the purport of all the Hindu scriptures viz., Vedas, Puranas, Itihasas, Kavyas, Agamas, Darsanas and Tamil Prabandhas, to commemorate the occasion. Again about ten years later in March 1956 when, at the instigation of His Holiness, The Advaita Sabha celebrated its Diamond Jubilee at Kanchi the seat of the great Sri Bhagavatpada, with greater pomp and splendour, His Holiness expressed His desire that among other things like presenting golden bracelets bedecked with diamonds to Pandits, a volume in Sanskrit containing sixty small unpublished original works or commentaries on Sri Bhagavatpada's prakaranas by eminent old authors should be published to commemorate the occasion As the time at our disposal was too short to get it printed in time, His Holiness commanded me to collect such works and publish them in the 'Brhma Vidya' the Sabha's Journal, so that when published, they may be bound and issued under the title of "The Diamond Jubilee Commemoration Volume of The Advaita Sabha." Now as thirty such works have been published we are very glad to present to the world of pandits and scholars the first part of the said commemoration volume The second part will also be issued in due course The astika public in general and Vedic scholars in particular are laid under deep obligation to His Hol Sri Sankaracharya of Kanchi for His steady endeavour in the uplift of Vedas, Veda Bhashyas and Vedanta Sastra In bringing out this volume my debts to His Holiness are great and varied in as much as His Holiness helped me by His valuable advices throughout.

My thanks are due to Sri S. Nilakantan of B G Paul for supplying paper necessary for printing these works and to H H. Anantananda Sarasvati Swami who helped me in selecting the works contained in this volume.

S. SUBRAHMANYA SASTRI,
*Editor 'Brhma Vidya'*

# Introduction

The first eight booklets contained in this volume are said to be from the pen of Sri Sankarabhagavatpada They are very lucid and clear and much resemble the other prakaranas of Sri Sankara and hence Sri Sankara's authorship in regard to these works might be accepted The first treats in a conversation style the path to Moksha The second is the Narasimha Stava claimed by some people as the stotra made by Sri Sankara when returning from *Paralaya Pravesa* The thirds fourth and fifth are the expressions of His experience of Jivan mukti The sixth is Tripuri an exposition of Atman through the three kinds of bodies the gross the subtle and the causal The seventh shows how to lead a spiritual life leading to final release and the eighth is a poem in praise of Sri Mata

*Vedantasamjna Prakaranam* is a small manual of Advaita Vedanta expounding all that is accepted in this Darsana *Dakshinamurthy Vilasa* is a long treatise on the experience of Jivan mukti and means to attain that stage *Brhmajnana Vilasa* resembles the Atma Vidya Vilasa by Sri Sadasivendra both being the utterences in third person of a Jivan mukta

*Sacchidananda Swarupa Vichara* is an attempt at establishing the nature of Reality, Intelligence and bliss for atman by ordinary experience Next comes the commentary of Sri Sankara's Atmabodha by Sri Padmapada, the acharya's direct disciple and the author of Panchapadika

*Vedantasara sarvaswam* is also a small treatise on Advaita by a sanyasin who says that he is the pupil of Madhava sarasvati the author of Sarvadarsana Kaumudi published by Travancore Oriental Mss Libary Then comes *Advaita Pancharatnam* otherwise called *Sopanapanchakam* with an exhaustive commentary by Sri Balakrishnananda Sarasvathi This author may be identified with Balakrishnananda Sarasvathi Abhinava Dravidacharya the author of Sariraka Mimamsa Vartika published in the Calcutta Oriental Series by Sri Anantakrishna Sastri *Viveka Mukura* is a short exposition of Advaita by Nrisimha Bharatisa different from Sri Nrisimha Bharati of Sringeri Mutt Then we have the tika on Shatpadi by Sankarananda thirtha This tika is very valuable in as much as it suggests many meanings for each of the words in every stanza

The tika on Manisha panchakam which follows is also very lucid and informative. The next is *Jignasadhikarana Vichara* useful in debates by Sri Lakshmi Narasimha Sastri of Mysore, son of the Great Satakoti Rama Sastri and brother of the Great Sri Narasimha Bharati Swamigal who adorned the throne of Sringeri. *Guhadhikarana Vichara* which is also useful in debates is by Kasi Timmannachar a Dvaitin who had great affinity towards Advaita and wrote small booklets on it *Tatvamasi Vakyartha Virodha nirasa* is a very useful thesis in establishing the identity of Jiva with Lord by discarding the apparent difference.

*Linga Bhanga Mukti Satakam* is from the pen of Upanishad Brhmendra who flourished in Kanchi in the 17-th century and wrote enlightening commentaries on the 108 Upanishads, the Gitas and Brhma Sutras *Vignana Nouka Tika* is a lucid commentary on Sri Bhagavatpada's *Vignana Nouka*.

*S S Sastri*



# विषयसूचिका

॥ श्रीगजवक्त्राय नमः ॥

॥ श्रीकृष्णपरब्रह्मगुरवे नमः ॥

# ॥ बालबोधसंग्रहः ॥

## ॥ श्रीमच्छङ्कराचार्यविरचितः ॥

अध्यात्मविद्याप्रबोधप्रकारं व्याख्यास्यामः — आधिभौतिकाधिदैविकाध्यात्मिकादितापत्रयाग्निसंतप्तः सकलसाधनोपेतः संसाराद्विरज्य शिष्यस्सद्गुरुं शरणं गत्वा साष्टाङ्गं प्रणिपत्य विज्ञप्तिं करोति — 'भो स्वामिन्, मम संसारनिवृत्तिं कुरु ॥

गुरुरुवाच — 'अरे शिष्य, तव संसारनिवृत्तिः ज्ञानेन भवितव्या। ज्ञानं च श्रवणमननिदिध्यासनैः ब्रह्मसाक्षात्कारो भवति ॥

शिष्यः — भो स्वामिन् श्रवणं नाम किं, मननं नाम किं, निदिध्यासनं नाम किम्? कस्साक्षात्कारः?

गुरुः — भो वत्स, श्रवणं नाम — वेदान्तवाक्यानामुपक्रमोपसंहारतात्पर्यलिंगाना साधनचतुष्टययुक्तस्सन् श्राव्यं श्रवणम्। मननं नाम — श्रुतार्थस्य उपपत्त्यनुपपत्तिभ्यां युक्तिभिरालोचनं मननम्। निदिध्यासनं नाम — मनसि निश्चितार्थस्य तदेकनिष्ठत्वेन संशयविपर्ययत्यागेनावस्थानं निदिध्यासनम्। स एव फलितः साक्षात्कारः। श्रुतिवाक्यप्रमाणम् —

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥'

शिष्य उवाच — भो स्वामिन्, साधनचतुष्टयं नाम किम्?

गुरुः — नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादिषट्कं, मुमुक्षुता च। नित्यानित्यवस्तुविवेको नाम —

'नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतकम्।
एवं यो निश्चयः सम्यक् विवेकोऽस्य नरस्य वै ॥'

जगत्सर्वमनित्यं ब्रह्मैव नित्यमिति नित्यानित्यविवेकः। इहामुत्रार्थफलभोगविरागो नाम —

ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु।
यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥'

इहपरसुखविषयेषु वैराग्यं विरागः । शमदमादिषट्कं नाम, शमो दम उपरतिस्तितिक्षा श्रद्धा समाधानम् ॥

शमो नाम — 'सदैव वासनात्यागः शमोऽयमिति शब्दितः ।'
दमो नाम — 'निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ।'
उपरतिर्नाम —'विषयेभ्यः परावृत्तिः परमोपरतिर्हि सा ।'
तितिक्षा नाम–'सहनं सर्वदुःखानां तितिक्षा सा शुभा मता ।'
श्रद्धा नाम —'निगमाचार्यवाक्येषु भक्तिः श्रद्धेति विश्रुता ।'
समाधानं नाम–'चित्तैकाग्र्यं तु संलक्ष्ये समाधानमिति स्मृतम् ॥'
एतच्छमादिषट्कम् ॥
मुमुक्षुता च — 'संसारबन्धनान्मुक्तिः कथं स्यान्मे कदा विधे ।
इति या सुदृढा बुद्धिर्वक्तव्या सा मुमुक्षुता ॥'

एवं साधनचतुष्टयसंपन्नस्यैव ब्रह्मात्मैक्यज्ञानेऽधिकारः । आत्मैक्यविज्ञानं विचारेण विना न जायते । अतो विचारः कार्यः ॥

शिष्य उवाच — विचारो नाम कः?

गुरुः — अहं कः? इदं सर्वं कथं जातम्? कुत्र वा लयं गच्छति? इति सदा सद्भिर्विचारः कार्यः ॥

शिष्यः —भो स्वामिन्, अहं तु विचारं न जानामि । सन्तः कुत्र सन्ति? को वेद? त्वमेव मां करुणाकटाक्षपोतेन संसारवारिधेः पारं दर्शय । मे त्वमेव गतिः ॥

गुरुः — भो वत्स, मय्येव तव दृढा भक्तिश्चेच्छृणु । त्वं तु देहो न भवसि । कुतः? जडत्वात् तव दृश्यत्वात् । दृश्यादन्यो द्रष्टेति न्यायात् । अमङ्गलत्वाच, अनित्यत्वाच, सविकारत्वाच । अत एव देहस्त्वं न भवसि । त्वं तु चैतन्यमात्रम् ॥

शिष्यः — भो स्वामिन्, अहं देहो न भवामि चेत् देहस्य सुखदुःखं मां बाधते । अतः देह एवाहम् ॥

गुरुः — देहो जडः ।

शिष्यः — कथं जडः? देहस्तावद्बाल्यमारभ्य नित्यं वर्धते; जडस्य वृद्धिर्न संभवति । एवमेव सर्वम् ॥

गुरुः — अरे शिष्य, देहतादात्म्येन तव सुखदुःखं प्रतिभाति । यथा— धनादिकं नष्टं चेद्दुःखं भवति । धनादिकं प्राप्तं चेत् सुखं भवति । तेनैव द्रव्यादिक स्वयं भवति वा । सुखदुःखयोः कारणं भवति । यथा लाभालाभतादात्म्येन सुखदुःखं भासते तथैव देहतादात्म्येन सुखदुःखं प्रतिभासते । यथा द्रव्यादिभ्यः स्वयं भिन्नः तथैव देहात् स्वयं भिन्नः । जडत्वं च शृणु । देहो वर्धते इति कृत्वा देहो जडो न भवति इति यद्वदसि तदसत् । जडस्यापि वृद्धिदर्शनात् । यथा वेदिका मृद्रूपा जडापि मृन्निक्षेपेण कुड्यादिरूपेण वर्धते । किं तावन्मात्रेण चैतन्यं भवति वा? तथैवान्नमयशरीरस्य पुनः पुनरन्ननित्यनिक्षेपेणैव देहो वर्धते, अत एव जडः । अमङ्गलत्वं च शृणु—जन्मकालपरामर्शेऽमंगलत्वं सिद्धमेव तव देहे । दृश्यत्वं कथमिति चेत् मम शरीरे श्यामगौरत्वादिना प्रतीयमाने कृशस्थूलत्वादिभिश्च दृश्यत्वं सिद्धमेव । त्वं तु द्रष्टा । अनित्यत्वं शृणु—जन्ममृत्युयुक्तत्वादनित्यम् ॥ सविकारत्वं च शृणु— बाल्यकौमाराद्यवस्थायुक्तत्वात् सविकारत्वम् । त्वं तु देहाद्यविकारः नित्यश्च । योऽहं बाल्ये क्रीडासक्तो यौवने विषयासक्तः, वार्धक्ये चिन्तायुक्तः । तावत्तावत्सोऽहमित्यनुभवात् ताभिरवस्थाभिर्युक्तस्य अनित्यत्वम् । तस्माद्देहो न भवसि । त्वं चिन्मात्रोऽसि साक्षी च ॥

शिष्यः—भो स्वामिन्, त्वत्प्रसादलेशाद्देहो न भवामीति मम ज्ञानं जातम् । तावता मम को लाभः ?

गुरुः— यदा त्वं पंचीकृतपंचमहाभूतसंभवस्थूलशरीरं न भवसि तदा नामरूपजातिवर्णाश्रमादयस्तव न सन्ति । एतत्सर्वं स्थूलशरीरस्यैव ॥

शिष्यः— भो स्वामिन्, सत्यं त्वदाज्ञया अहं स्थूलदेहो न भवामि । तत्संबन्धा वर्णाश्रमादयः स्त्रीपुत्रपुंसकादयः श्यामगौरत्वादिनामरूपादयो मम न सन्ति त्वत्प्रसादात् । अतः परं इन्द्रियाण्यहम् । इन्द्रियेषु सत्सु पश्यामि शृणोमि स्पृशामि इत्याद्यनुभवाच्च इन्द्रियाण्यहमेव ॥

गुरुः— भो वत्स, इन्द्रियाण्यपि जडानि त्वं न भवसि, पञ्चभूतकार्यत्वात् ॥

शिष्यः — भो स्वामिन्, इन्द्रियाणि जडानि कथं? भूतकार्याणि च कथम्?

गुरुः — भो वत्स, इन्द्रियाण्यात्मानं न जानन्ति । परमपि न जानन्ति प्रदीपवत् । भो श्रोत्र, इदानीं त्वं कुत्र तिष्ठसि इत्युक्ते, भो स्वामिन् अहमत्र तिष्ठामि इति वक्तुमसमर्थम् । एवमेव सर्वाणि करणानि । अत एव जडानि । भूतकार्यं कथमिति शृणु— श्रोत्रेन्द्रियं आकाशकार्यं आकाशाध्यात्मिकगुणशब्दग्रहणे साधर्म्यम् ।

त्वगिन्द्रियं वायुकार्यं वाय्वाध्यात्मिकगुणस्पर्शग्रहणे साधनम्। चक्षुस्तेजसः कार्यं तेजआध्यात्मिकगुणरूपग्रहणे साधनम्। रसनेन्द्रियमपां कार्यं जलाध्यात्मिकगुणरसग्रहणे साधनम्। घ्राणेन्द्रियं पृथ्वीकार्यं पृथिव्याध्यात्मिकगुणगन्धग्रहणे साधनम्। एतानि ज्ञानेन्द्रियाणि पंचभूतसत्वगुणादुत्पन्नानि। अथ कर्मेन्द्रियाणि शृणु—वाक् आकाशकार्यं आकाशाध्यात्मिकगुणशब्दं वदति। पाणीन्द्रियं वायुकार्यं वाय्वाध्यात्मिकगुणं गृह्णाति ददाति। पादेन्द्रियं तेजसः कार्यं तेजआध्यात्मिककार्यं गमनादिकं करोति। गुह्येन्द्रियमपां कार्यं जलाध्यात्मिककार्यं मूत्ररेतउत्सर्गादिकं करोति। गुदेन्द्रियं पृथिवीकार्यं पृथ्व्याध्यात्मिकगुणं पुरीषादिकं करोति। एवं कर्मेन्द्रियाणि पंचभूतरजोगुणेभ्य उत्पन्नानि। पंचभूततमोगुणाद्विषया उत्पन्नाः शब्दस्पर्शरूपरसगन्धाः वचनादानगमनविसर्गानन्दाः। एतानि सर्वाणीन्द्रियाणि पंचभूताध्यात्मिककार्याणि जडानि स्वस्वदेवतानुग्रहेण स्वविषयान् प्रति प्रवर्तन्ते॥

शिष्यः—कस्येन्द्रियस्य किं दैवतम्?

गुरुः—श्रोत्रेन्द्रियस्य दिगधिदैवतम्। त्वगिन्द्रियस्य वायुरधिदैवतम्। चक्षुरिन्द्रियस्य सूर्योऽधिदैवतं। रसनेन्द्रियस्य वरुणोऽधिदैवतम्। घ्राणेन्द्रियस्याश्विनीदेवावधिदैवते। वागिन्द्रियस्याग्निरधिदैवतम्। पाणीन्द्रियस्येन्द्रोऽधिदैवतम्। पादेन्द्रियस्य विष्णुरधिदैवतम्। पाय्विन्द्रियस्य मृत्युरधिदैवतम्। गुह्येन्द्रियस्य प्रजापतिरधिदैवतम्। इन्द्रियाणामधिभूतं शृणु। श्रोत्रेन्द्रियस्य श्रोतव्यमधिभूतम्। नेत्रेन्द्रियस्य द्रष्टव्यमधिभूतम्। त्वगिन्द्रियस्य स्पर्शोऽधिभूतम्। रसनेन्द्रियस्य रसग्रहणमधिभूतम्। घ्राणेन्द्रियस्य गन्धग्रहणमधिभूतम्। वागिन्द्रियस्य वक्तव्यमधिभूतम्। पाणीन्द्रियस्य दातव्यमधिभूतम्। पादेन्द्रियस्य गमनागमनमधिभूतम्। पायोरिन्द्रियस्य विसर्गोऽधिभूतम्। उपस्थेन्द्रियस्य रतिसुखमधिभूतम्। सर्वाणि करणानि स्वस्वदेवतानुग्रहेणैव स्वस्वविषयं जानन्ति। अत एव जडानि। तानि त्वं न भवसि॥

शिष्यः—भो स्वामिन् सत्यं इन्द्रियाणि जडानीति मम ज्ञानं जातम्। अतः परं मन एवाहम्। स्वस्थे मनसि पश्यामि शृणोमि, तदभावे न पश्यामि न शृणोमि। अत एव मन एवाहम्॥

गुरुः—भो वत्स मनः कथं त्वं भवसि। मे मन इदानीं समाधानतया स्थितमित्यनुभवात् मनसो भिन्न एव त्वम्। मनस्तव दृश्यं, मनसस्त्वं द्रष्टा। मनसस्तवाधीनत्वाच्च। अत एव मनो न भवसि॥

शिष्यः—भो स्वामिन्, सत्यं मनो न भवामि । बुद्ध्या निश्चितेऽर्थे मनो धावति । अत एव बुद्धिरेवाहम् ॥

गुरुः—साऽप्यन्तःकरणवृत्तिः । अत एव बुद्धिस्त्वं न भवसि ॥

शिष्यः—भो स्वामिन्, एतत्सर्वमहं न भवामि, मम दृश्यत्वात् । प्राण एवाहम् । प्राणे सति पश्यामि, शृणोमि । प्राणाभावे न पश्यामि, न शृणोमि । अत एव प्राण एवाहमस्मि ॥

गुरुः—भो वत्स, प्राणस्त्वं न भवसि, जडत्वात् ॥

शिष्यः—भो स्वामिन्, प्राणो जडः कथम् ?

गुरुः—शृणु, रात्रौ प्रसुप्तस्य पुरुषस्य वस्तूनि चोरो गृहीत्वा गच्छति । तदानीं प्राणस्तिष्ठत्येव । कथं नावबुध्यते । अत एव जडः ॥

शिष्यः — भो स्वामिन् प्राणो जडश्चेत्, जडशरीरं कथं चेष्टयति, जडस्य चेतनायोगात् ॥

गुरुः—शृणु; जडस्यापि चालकत्वं लोके दृष्टमस्ति । यथा—चण्डमारुतो गृहोपरिस्थिततृणादीन् नभसि भ्रामयित्वा अन्यत्र पातयति । किं तावता वायुश्चेतनो भवति वा । एवं प्राणस्यापि देहचेष्टकत्वम् । अत एव प्राणोपि त्वं न भवसि ॥

शिष्यः—भो स्वामिन्, त्वदाज्ञयैतत्सर्वं अहं न भवामि । तावता मम को लाभः ? ॥

गुरुः—अरे शिष्य, सावधानतया शृणु, । एतत्सर्वं सप्तदशकं लिङ्गशरीरं त्वं यदा न भवसि तदानीं देवतिर्यङ्मनुष्यादिषु जन्मादिकं नास्ति । यथा जानुभग्नपंगोरिव गमनागमनं तत्र नास्त्येव ॥

शिष्यः—भो स्वामिन्, त्वत्प्रसादादेव सत्यम्,

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥

एतत्सर्वमहं न भवामि । तर्हि कोहमिति मामहं न जानामि । कृपया स्वामिना वक्तव्यम् ॥

गुरुः—अरे शिष्य, इदमेव तव कारणशरीरम् । कथमित्युक्ते अरे सर्वं जानासि स्वात्मानमेव न जानामीति वदसि । इदमेव तवाज्ञानं सर्वेषां स्थूलसूक्ष्मशरीराणां कारणत्वात् कारणमित्यभिधीयते । इयमेवाविद्या संसारानर्थदायिनी

ब्रह्मात्मैक्यज्ञानविलया । अस्या निवृत्तिरेव मुक्तिः । मुमुक्षुभिः प्रयत्नैः परिहर्तव्या ॥

शिष्यः — भोः स्वामिन् कथं परिहर्तव्या ॥

गुरुः — अरे शिष्य, त्वमेव मामहं न जानामीति वदसि । तर्हि त्वत्तोऽन्यः कोऽपि वदति वा? वक्ता श्रोता द्रष्टा त्वमेव ॥

शिष्यः — अस्मिन्नर्थे श्रुतिप्रमाणं वर्तते वा?

गुरुः — अरे वत्स, सर्वेषां वेदान्तानां तात्पर्यं अत्रैव । श्रुतिवाक्यं प्रमाणं – नान्योऽतोऽस्ति वक्ता, नान्योऽतोऽस्ति श्रोता, नान्योऽतोऽस्ति मन्ता, नान्योऽतोऽस्ति द्रष्टा चेति, येन वा पश्यति येन वा शृणोतीत्यादिप्रमाणानि बहूनि सन्ति ॥

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः ॥

स्मृतिरपि — 'क्षेत्रज्ञं चापि मां विद्धि' 'सर्वभूतस्थमात्मानं' इति । पुराणं च —

सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरस्स एकः ।
इति मतिरमला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥

एवं विज्ञानेन स्वात्मारामः सन् वर्तिष्यति स ब्रह्म स शिवस्स हरिः सेंद्रः सोऽक्षरः परमः स्वराट् ॥

ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यस्समुद्राश्च स एव सर्वं इदं स्त्यमस्ति च विप्रवर्ये ॥

एतादृशेनानुभवेन शिष्यो मुक्तस्सन् स्वानुभवस्थितिं दर्शयति ॥

नहि पापपदं नहि पुण्यपदं नहि बद्धपदं नहि मुक्तपदम् ।
न हि रिक्तपदं न हि पूर्णपदं किमु रोदिषि मानस सर्वसमम् ॥

अहो अहं नमो मह्यं दक्षो नास्तीति मत्समः ।
असंस्पर्शशरीरेण येन विश्वं चिरं धृतम् ॥

मयि सुखबोधपयोधौ महति ब्रह्माण्डबुद्बुदसहस्रम् ।
मायामयेन मरुता भूत्वा भूत्वा पुनस्तिरोधत्ते ॥

दृश्यमहं कव्यमहं हेयोपादेयभावशून्योऽहम् ।
हरिरहमस्मि हरोऽहं विधिरप्यहमस्मि कारणं तेषाम् ॥

धर्माधर्ममयोऽहं धर्माधर्मादिबन्धरहितोऽहम् ।
धार्मिकजनसुलभोऽहं धन्योऽस्मि धातुरादिभूतोऽहम् ॥

मान्योऽहमस्मि महतां मन्दमतीनाममाननीयोऽहम् ।
मदमानरागमोहितमानसदुर्वासनाङ्कुरापोहम् ॥

नाहं नमामि देवानेते नमस्यन्ति नित्यं माम् ।
मत्तः परतरं नास्ति चिन्मात्रोऽहं सदाशिवः ॥

किमिदं किमस्य रूपं कथमिदमुदभूदमुष्य को हेतुः ।
इति न कदापि विचिन्त्यं चिन्त्यं मयीति धीमता विश्वम् ॥

गुरुकरुणैकनावा प्राक्तनभाग्यानुकूलमारुतया ।
रागद्वेषतरङ्गैः तुङ्गस्संसारसागरस्तीर्णः ॥

शरणं न भवति जननी न पिता न सोदराश्चान्ये ।
शरणं देशिकचरणं नोशिरैर्मम शिरसि नित्यविन्यस्तम् ॥

आस्ते देशिकचरणं निरवधिरास्ते तदीक्षणे करुणा ।
आत्मा निरवधिरास्ते किमतः परमस्य जन्मसाफल्यम् ॥

इदं ज्ञानं परं श्रेष्ठं सतां संमतमादरात् ।
यः शृणोति च मेधावी स मुक्तो नात्र संशयः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छङ्कराचार्यविरचितो
वालबोधसंग्रहः संपूर्णः ॥



॥ श्रीः ॥

श्रीशङ्कराचार्यविरचितः

# श्रीनरसिंहस्तवः ।



श्रीमदकलङ्कपरिपूर्णशशिकोटि-
श्रीधर ! मनोहरसटापटलकान्त ! ।
पालय ! कृपालय ! भवापदि निमग्नं
मामसुरकाल ! नरसिंह ! नरसिंह ! ॥ १ ॥

पादकमलावनतपातकपटानां
पाटनपरावरपते ! पतगकेतो ! ।
पावनपरायण ! पुराण ! परया मां
पाहि कृपयैव नरसिंह ! नरसिंह ! ॥ २ ॥

वारिजविलोचन ! मदन्तिमदशायां
क्लेशविवशीकृतसमस्तकरणायाम् ।
एहि रमया सह शरण्य विहगानां
नाथमधिरुह्य नरसिंह ! नरसिंह ! ॥ ३ ॥

तुङ्गनखपङ्क्तिदलितासुरवरासृक्-
पङ्कनवकुङ्कुमविपङ्किलमहोर ! ।
पण्डितनिधान ! भुवनाधिप ! नमस्ते
पङ्कजनिषण्ण ! नरसिंह ! नरसिंह ! ॥ ४ ॥

मौलिषु विभूषणमिवासुरवराणां
योगिहृदयेषु (च) शिरःसु निगमानाम् ।
राजदरविन्दरुचिरं पदयुगं ते
धेहि मम मूर्ध्नि नरसिंह ! नरसिंह ! ॥ ५ ॥

हाटककिरीटवरहारवनमाला-
तारशनामकरकुण्डलमणीन्द्रैः ।
भूषितमशेषनिलयं तव वपुर्मे
चेतसि निधेहि नरसिंह! नरसिंह ॥ ६ ॥

इन्दुरविपावकविलोचन! रमाया
मन्दिर, महाभुजलसद्वररथाङ्ग! ।
सुन्दर! चिराय रमतां त्वयि मनो मे
नन्दितसुरौघ! नरसिंह! नरसिंह! ॥ ७ ॥

माधव! मुकुन्द! मधुसूदन! मुरारे!
वामन! नृसिंह! शरणं भव ममेति ।
कामद! लपन्नखिलकारण! नयेयं
कालममरेश! नरसिंह! नरसिंह! ॥ ८ ॥

भैरवसुरारिनिधनाय किल पद्म-
श्रीनृहरिकोपदहलानलशमाय ।
श्रीभगवदङ्घ्रिमुनिवागमृतवर्षि-
स्तोत्रमिदमष्टकमभीष्टफलदं नः ॥ ९ ॥

सत्यज्ञानसुखस्वरूपममलं क्षीराब्धिमध्यस्थितं
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम् ।
त्र्यक्षं चक्रपिनाकसाभयकरान् बिभ्राणमच्छच्छविं
छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृसिंहं भजे ॥ १० ॥

नरसुरविदलितदितितनयोरः-
परिपतदसृगरुणीकृतगात्रः ।
हिमवद्गिरिवरगैरिकयुक्तो
नरहरिरहरहरवतु स युष्मान् ॥ ११ ॥

शङ्करेणादरात् प्रोक्तं पदाग (न्त्व ? न्त्र) र्थमुत्तमम् ।
त्रिसन्ध्यं यः पठेत् तस्य श्रीर्विद्याऽऽयुश्च वर्द्धते ॥ १२ ॥

नाहं बिभेमि नरकाद् यमकिङ्करात् वा
नित्यच्युतेरपि निषिद्धनिषेवणाद् वा ।
प्रत्यक्प्रबोधपरिपूर्णसुखैकरूपाद्
यत्त्वात्मनः पृथगिति प्रतिभा ततो भीः ॥ १३ ॥

इति श्रीशङ्करभगवत्पादविरचित. नरसिंहस्तवः संपूर्णः ॥

---

॥ श्रीः ॥

श्रीशङ्कराचार्यविरचितम्

## चिदानन्दात्मकस्तोत्रम् ॥



तदा नैव बालो युवा भोगलोलः
तदा नैव वृद्धो न वाऽतीतकालः ।
न वा साधुशीलो न वाऽसाधुशीलः
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ १ ॥

तदा नैव जीवः शिवो नापि कर्ता
तदा नैव भोक्ता न मर्ताऽनुमन्ता ।
तदा नो विरिञ्चिर्विधिर्नापि विष्णुः
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ २ ॥

तदा नापि बद्धो न मुक्तो न रागी
विरागी न रुद्धी तदा नो वियोगी ।

न भोगी न योगी न संसाररोगी
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ ३ ॥

तदा नापि जाग्रत्सुषुप्तिर्न चास्ति
न वा स्वप्न एषां तुरीयापि काचित् ।
न वा चोन्मनी नागता भान्ति यस्मिन्
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ ४ ॥

तदा नैव सूक्ष्मं नवा स्थूलमेकं
न चाजङ्गमं जङ्गमं कापि किंचित् ।
न कर्माणि धर्मोऽप्यधर्मो न कश्चित्
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ ५ ॥

तदा कामिनी नैव कामी न कामो
न वा क्लीव [पुंस्त्वे] न वर्णाश्रमादि ।
न वा शिष्यवर्गो गुरुर्वा न चास्ते
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ ६ ॥

तदा ना [स] नं प्राणरोधो निरोधो
न चाधारणा नो तथोद्धारणा नो ।
न वा ध्यानमेकं समाधिर्न कश्चित्
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ ७ ॥

तदा नाप्यभेदो न भेदो न बोधो
न चाबोधपक्षो विनोदो न खेदः ।
अहो नो मुकुन्दो न चानन्दकन्दः
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ ८ ॥

तदा न स्मृतिर्निस्मृतिर्नो यहिर्नो
तथा नान्तरं साधको नापि सेव्या ।
असिद्धो न सिद्धो न चासाधुचेष्टः
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ ९ ॥

तदा नैव क्लिष्टो न तुष्टो न किंचित्
न चाकिंचिदेवेति कोटिद्वयेन ।
यथा वस्तुतोऽहं तथेशोऽस्मि सिद्धः
चिदानन्दसिन्धौ यदाहं निमग्नः ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं
चिदानन्दात्मकस्तोत्रं संपूर्णम् ॥

---

॥ श्रीः ॥

श्रीशङ्कराचार्यविरचितं

## सहजाष्टकम् ॥

न वेत्ता न वित्तिर्न वेद्यं विकल्पो
न सोहं न संकल्पलेशोहमात्मा ।
न च ब्रह्म नो धर्म नोऽकर्मकोऽहं
यथाहं तथाहं विकल्पो न कश्चित् ॥ १ ॥

न वक्ता न वाच्यं न चोक्तिर्विरक्ति-
र्न भक्तिर्न चास्तं न लिङ्गं न शक्तिः ।
प्रवृत्तिर्न चाहं निवृत्तिर्न वृत्ति-
र्यथाहं तथाहं विकल्पो न कश्चित् ॥ २ ॥

न नामापि गोत्रं न मित्रं कलत्रं
न पुत्रः पवित्रो न रात्रिर्दिवा वा ।
न मायी न माया न मायाद्वनोऽन्यो
यथाहं तथाहं विकल्पो न कश्चित् ॥ ३ ॥

अनेको न चैको न शोको विवेकः
शुको नो विदेहो न सन्देह एव ।
अनीहो न सेहो न देहः सगेहो
यथाहं तथाहं विकल्पो न कश्चित् ॥ ४ ॥

न नीचो न चोचैर्न पीवा युवा वा
न कृष्णो न रक्तो न पीतः सितो वा ।
न बुद्धिर्न चाधिः समाधिर्न कश्चित्
यथाहं तथाहं विकल्पो न कश्चित् ॥ ५ ॥

न विष्णुर्न जिष्णुर्न शंभुः स्वयंभूः
न देवी न देवो न नारी नरो वा ।
न नो नेति नेतीति वेदैर्निषेध्यं
यथाहं तथाहं विकल्पो न कश्चित् ॥ ६ ॥

न योऽहं न सोऽहं न कोऽहं न चाहं
न रामोऽहमानन्दबोधोऽहमस्मि ।
न चार्द्रं न शुष्कं गतं वह्निनैक्यं
यथाहं तथाहं विकल्पो न कश्चित् ॥ ७ ॥

अचिन्त्यं न चिन्त्यं न चिन्ता यतो वा
यतो वाप्यलक्ष्यं न लक्ष्यं विपक्षम् ।
न देयं न ध्येयं न देहं विदेहं
यथाहं तथाहं विकल्पो न कश्चित् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यविरचितं
सहजाष्टकं संपूर्णम् ॥



|| श्रीः ||

श्रीशङ्कराचार्यविरचितं

# अनुभवोल्लासप्रकरणम् ॥

पुत्रवित्तकलत्रादौ धीविकारे रिपौ सदा ।
ममत्वं परबुद्धिं त्वं उभयं ह्यङ्ग मा कुरु ॥ १ ॥

अनात्मकेष्वहंबुद्धिं देहप्राणेन्द्रियादिषु ।
प्राणान्तकेऽपि साधो त्वं जन्महेतुं हि मा कुरु ॥ २ ॥

परनिन्दास्तुती साधो परद्रव्येऽपि रागिताम् ।
अत्यासक्तिं च सर्वेषु दुष्टसङ्गं च मा कुरु ॥ ३ ॥

प्रमदोल्लासमत्ता ये रागद्वेषानुषंगिणः ।
अहंकाराग्नितप्ताश्च तेषां सङ्गं च मा कुरु ॥ ४ ॥

विद्यायामाश्रमे वर्णे कुले वयसि संपदि ।
कदापि वासनाद्वारा ह्यहङ्कारं च मा कुरु ॥ ५ ॥

एक एव चिदानन्दः सर्वभूतेषु चात्मनि ।
इति तत्त्वं विजानानो वैरं सर्वेषु मा कुरु ॥ ६ ॥

स्वात्मत्वेन जगत्सर्वं भावयन्सर्वदा धिया ।
अखण्डैकचिदाकारे द्वैतबुद्धिं च मा कुरु ॥ ७ ॥

कामक्रोधादिकं सर्वं त्यक्त्वा वासनया सह ।
अन्तश्शीतलया बुद्ध्या सर्वेषु ममतां कुरु ॥ ८ ॥

किं नित्यं किमनित्यं वा किमिदं केन भास्यते ।
कोऽहं वा किं मनश्चेदं विचारं कुरु सर्वदा ॥ ९ ॥

इन्द्रियैस्सर्वकर्माणि क्रियन्ते प्रत्यगात्मनः ।
सन्निधानान्मया नेति बुद्धिं त्वं कुरु सर्वदा ॥ १० ॥

दृश्यं देहादिकं त्यक्त्वा चाहंबुद्धिमनात्मनि ।
निर्गुणं परमास्थाय तन्मयस्सर्वदा भव ॥ ११ ॥

अहंकारादिदेहान्ते कोऽहं स्यामिति चिन्तयेत् ।
अहंशब्दस्य लक्ष्यं यत्तन्मयस्सर्वदा भव ॥ १२ ॥

नित्यमेकं बहिश्चान्तः सर्वभूतेषु चात्मनि ।
ज्ञप्तिमात्रं यथा भाति तन्मयस्सर्वदा भव ॥ १३ ॥

अङ्गावस्थात्रयद्रष्टा चिदानन्दस्वरूपकः ।
एक एव य आभाति तन्मयस्सर्वदा भव ॥ १४ ॥

चराचरात्मकं दृश्यं त्यक्त्वा वासनया सह ।
दृङ्मात्रं यदनुस्यूतं तन्मयस्सर्वदा भव ॥ १५ ॥

नामरूपात्मकं द्वैतं स्थितं त्वयि विजृम्भते ।
तं त्यक्त्वा यदधिष्ठानं तन्मयस्सर्वदा भव ॥ १६ ॥

वृत्तिज्ञानान्यनन्तानि यतोऽब्धेश्शीकरा इव ।
जायन्ते यत्र लीयन्ते तन्मयस्सर्वदा भव ॥ १७ ॥

तरङ्गा इव जीवौघाः चलन्तः चित्सुखार्णवे ।
तत्रैव यन्मया भान्ति तन्मयस्सर्वदा भव ॥ १८ ॥

चित्तवृत्तिप्रसन्नासु पञ्चकोशेष्वनात्मसु ।
यन्मयोऽहं तदन्तस्थः तन्मयस्सर्वदा भव ॥ १९ ॥

अहंकारादिदेहान्ते नाहं कोऽपीति चिन्तिते ।
यन्मयो नाहमित्येषः तन्मयस्सर्वदा भव ॥ २० ॥

देहाद्यभ्यन्तरे तिष्ठन्वर्तन्तःस्थितदीपवत् ।
यदिदं चाखिलं वेत्ति तन्मयस्सर्वदा भव ॥ २१ ॥

रसनादिः परामृष्टः तस्मिन्नेव विलीयते ।
तथैवेदं परामृष्टं त्वय्येवाद्य विलीयते ॥ २२ ॥

तस्मात्सर्वगतं नित्यं सचिदाकाशलक्षणम् ।
ब्रह्मैवाहमिति ज्ञात्वा निर्विकल्पं सुखी भव ॥ २३ ॥

मज्ज्ञानान्तः प्रलीयन्ते सरसीव तटद्रुमाः ।
पंचभूतानि तत्कार्यं इति मत्वा सुखी भव ॥ २४ ॥

ब्रह्मात्मके च चिद्योम्नि ब्रह्मात्मकतयाखिलम् ।
संपश्यन्सततं साधो जीवन्मुक्तसुखी भव ॥ २५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमच्छंकराचार्यविरचितं
अनुभवोल्लासप्रकरणं संक्षेपकृतं समाप्तम् ॥



॥ ॐ ॥

श्रीशङ्करभगवत्पादाचार्यविरचिता

# त्रिपुरी ॥

शब्दस्पर्शरूपरसगन्धाख्यो विषयाः पञ्च, पृथिव्यादयश्च परमात्मनः समुत्पन्नाः। पृथिव्यापस्तेजो वायुराकाशमिन्द्रियाणि, अहंकारो बुद्धिर्महा-

---

॥ श्री ॥

श्री आनन्दगिर्याचार्यविरचित

## ॥ त्रिपुरीविवरणम् ॥

अध्यात्मादिविभेदेन यदविद्या विजृम्भते ।
तद्ब्रह्म नौम्यहं सत्यमानन्दज्ञानमव्ययम् ॥

मुमुक्षूणां मोक्षसाधनसम्यग्ज्ञानमपेक्षमाणानां अनायासेन तत्प्राप्त्यर्थं त्रिपुरीप्रकरणमारभमाणः सुखप्रतिपत्त्यर्थं अध्यारोपापवादन्यायेन तत्त्वमुपदिदिक्षुः अध्यारोपप्रक्रियया प्रथमं सृष्टिमाचष्टे — शब्देति । शब्दादयो गन्धान्ता बुद्धीन्द्रियविषयाः । वक्तव्यादयश्च आनन्दयितव्यान्ताः कर्मेन्द्रियविषयाः । मन्तव्यादयश्च चेतयितव्यान्ताः अन्तःकरणविषयाः । पृथिव्यादयश्च आकाशान्ताः पञ्च महाभूताख्याः स्थूलसूक्ष्मविभागभाजः परस्मादात्मनः सकाशान्मायाशक्तिद्वारा जाता व्यवहारमार्गमवतरन्ति । तत्र शब्दादयः स्थूलास्ततो भौतिकत्वात् भूतद्वारा परस्मादुत्पद्यन्ते । भूतानि पुनरव्यक्तमेव द्वारीकृत्य ततो भवन्तीति विवेक्तव्यमित्यर्थः ॥

साधारण्येन महाभूतानां उत्पत्तिमभिधाय तेषामेव अपञ्चीकृतानामुत्पत्तिमभिप्रेत्याह — पृथिवीति । आकाशमिति । एतद्भूतपञ्चकं अपञ्चीकृतं परमात्मनः

---

India Office Text begins —

यदङ्घ्रिकमलद्वन्द्वं द्वंद्वतापनिवारणम् । तारकं विपदां वृन्दात् तं गुरुं प्रणमाम्यहम् ॥

ज्ञानस्वरूपचिन्मात्रं भेदप्रत्ययवर्जितम् । पूर्णरूपं अनाभासं सर्वाभासं नमाम्यहम् ॥

नव्यक्तम् । तत्र पृथिवी धारणे, आपः पिण्डीकरणे क्लेदने च, तेजः प्रकाशने पचने च, वायुर्व्यूहने, आकाशमवकाशदाने । आकाशमेकलक्षणं, द्विलक्षणो वायु त्रिलक्षणं तेजः आपश्चतुर्गुणाः पंचलक्षणा पृथिवी । शब्दगुणमाकाशम् । परस्परानुप्रवेशेन शब्दस्पर्शगुणो वायुः । शब्दस्पर्शरूपगुणोऽग्निः । शब्दस्पर्शरूपरसगुणा आपः । शब्दस्पर्शरूपरसगन्धगुणा पृथिवी । यत्कठिनं सा पृथिवी । यद्द्रवं तदाप । यदुष्णं तत्तेजः । यत्संसरति स वायुः । यत्सुषिरं तदाकाशम् इत्येतत्स्थूलशरीरं सदसदात्मकम् ॥

---

समुत्पन्नमिति संबन्धः । संप्रति एकादशेन्द्रियाणां अपंचीकृतभूतद्वारेण परस्मादुत्पत्तिमभिप्रेत्योक्तमिन्द्रियाणीति । परमात्मनः समुत्पन्नानीति पूर्ववत् । तत्र श्रोत्रं पादौ च आकाशद्वारेण । त्वक् पाणी च वायुद्वारेण । चक्षुर्नोक्च तेजोद्वारेण । रसनं उपस्थश्च सलिलद्वारेण । घ्राणं वायुश्च पृथिवीद्वारा परस्मादुद्भवति । मनस्तु समुदितभूतपञ्चकद्वारा तस्मादुत्पन्नं । तद्विषयाणां च तत्तदिन्द्रियप्रकृतिद्वारा परस्मादेवोत्पत्तिरिति विवेचनीयम् । अहंकारोपि भूतपञ्चकद्वारा परस्मादेवोत्पद्यत इत्याह — अहंकार इति । अस्मदादिसंबन्धिनी व्यष्टिबुद्धिरपि तथैवेत्याह — बुद्धिरिति । हिरण्यगर्भसंबन्धिनी समष्टिबुद्धिरपि तथैवेत्याह — महानिति । एतेन चित्तोत्पत्तिर्व्याख्याता । उक्तानां भूतभौतिकानामतिसूक्ष्माणां समुत्पत्तौ प्रधानद्वारमनाद्यनिर्वाच्यमज्ञानं कथयति — अव्यक्तमिति । पंचीकृतस्थूलभूतोत्पत्तिमभिप्रेत्य धारणादितत्तत्क्रियानिमित्तत्वेन तत्तद्भूतोत्पत्तिरित्यर्थः ॥

क्रियया भूतानि लक्षयति — पृथिवीत्यादिना । गुणद्वारेणापि भूतानि लक्षयितुं शक्यामीत्याह — आकाशमित्यादिना । लक्षणशब्दो गमकगुणमधिकरोति । तमेव प्रपंचयति — शब्दगुणमिति । परस्परानुप्रवेशेनेति पंचीकरणं सूच्यते । उत्तरत्रापि इदं विशेषणं संबध्यते । यद्यपि शब्दादीनां सूक्ष्माकाशादिभूताभेदाभ्युपगमान्न गुणगुणिभावोऽवकल्पते, तथापि स्थूलेषु भूतेषु तथा प्रथामाश्रित्य गुणगुणिभावाभिधानमविरुद्धम् । यद्यपि पंचीकृतेषु भूतेषु सर्वत्र सर्वे गुणाः संभवन्ति, तथापि तथा प्रतीतिविशेषवशात्तद्व्यवस्थोक्तिरिति भावः । पंचीकृतपंचमहाभूतानि तत्कार्यं च ब्रह्माण्डं सर्वमेतद्वैराजरूपमात्मनः स्थूलं शरीरमित्याह— इत्येतदिति । तस्य कार्यकारणरूपतामाह— सदसदात्मकमिति । कार्यमभिव्यक्तेः सदित्युच्यते । कारणं चानभिव्यक्तेरसदित्याख्यायते । तदुभयात्मकमुक्तं शरीरमित्यर्थः । अथवा सम्यग्ज्ञानमंतरेणानिवृत्तेः सदात्मकं,

मनः संकल्पविकल्पात्मकं चेति । इन्द्रियाणि विज्ञानशक्तयः क्रियाशक्तयश्च । ज्ञानशक्तयः श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमिति पंच बुद्धीन्द्रियाणि । क्रियाशक्तयः वाक्पाणिपादपायूपस्थानि पंच कर्मेन्द्रियाणि । प्राणापानव्यानोदानसमाना इति पंच वायवः । मनो बुद्धिरहंकारश्चित्तमिति अन्तःकरणचतुष्टयम् । चेतयितव्यलक्षणं चित्तम् । अभिमानलक्षणोऽहंकारः । बोद्धव्यलक्षणा बुद्धिः । महान् प्राणो हिरण्यगर्भः परिस्पन्दात्मा सूत्रं वायुरिति एतत्सूक्ष्मशरीरम् । तथाऽव्यक्तमव्याकृतं प्रधानं बीजं क्षेत्रं तम इति सुषुप्तमित्येतदविद्याशरीरम् ॥

---

त्वेन च निवृत्तेरसदात्मकम् । यद्वा कल्पितेन स्वेन रूपेण असदात्मकं, अधिष्ठानरूपेण तु सदात्मकमिति व्याख्येयम् ॥

संप्रति सूक्ष्मशरीरं विवृण्वन्निन्द्रियान्तर्भूतत्वेन सूचितस्य मनसो लक्षणमाह — **मन इति** । अथवा सदसदात्मकमिति सूक्ष्मशरीरान्तर्भूतस्य मनसो लक्षणम् । तद्धयवस्थाद्वयेन सदपि सुषुप्तावसदिष्यते । तस्यैव लक्षणान्तरमाह — **संकल्पेति** । कानि पुनरिन्द्रियाणि इत्याशंक्य, तानि द्वेधा विभजति — **इन्द्रियाणीति** । विज्ञानशक्तिमन्तीन्द्रियाणि विशेषतो निर्दिशति — **विज्ञानेति** । क्रियाशक्तिमन्तीन्द्रियाणि विविच्य कथयति — **क्रियेति** । सप्तदशकलिङ्गसिध्यर्थं क्रियाशक्तिप्रसङ्गात्प्राणादिपंचकमुपन्यस्यति — **प्राणेति** । एवकारपंचदशकमन्तःकरणद्वयं च गृहीत्वा सप्तदशकं लिङ्गं सिध्यतीत्यभिसन्धाय अन्तःकरणं विभजते — **मनो बुद्धिरिति** । तत्र प्रागेव मनसो लक्षितत्वादवशिष्टमहंकारादित्रितयं लक्षयति — **अभिमानेत्यादिना** । बोधशब्देन निश्चयो विवक्ष्यते । चैतन्यलक्षणं तदाभासव्याप्तं तत्प्रधानं तदाकारमिति यावत् । यदुक्तं महानिति, तदिदानीं विवृणोति — **महानित्यादिना** । यद्यपि हैरण्यगर्भी बुद्धिर्महानित्युक्तं तथापि बुद्धिमहतोरभेदमादाय क्रियाशक्तिप्राधान्येन प्राणो महानित्युच्यते । ज्ञानशक्तिप्राधान्येन हिरण्यगर्भः तथा विवक्ष्यते । प्राणशब्दार्थं विविच्य कथयति — **परिस्पन्दात्मेति** । क्रियामात्रस्यात्मा सत्ताप्रदः प्राणशब्दार्थः इत्यर्थः । नच तस्मिन्प्रमाणाभावः । स्थूलप्रपंचविधारणलिङ्गात्तदधिगतेरित्याह — **सूत्रमिति** । प्राणस्य सूत्रत्वेन विधारयितृत्वे 'वायुर्वै गौतम' इत्यादिश्रुतिं सूचयति — **वायुरिति** । अपंचीकृतानि महाभूतानि तत्कार्यं चोक्तं सर्वमात्मनः सूक्ष्मं शरीरमित्याह — **इत्येतदिति** ।

शरीरद्वयकारणं दर्शयन् पूर्वोक्तं प्रपंचयति — **अव्यक्तमित्यादिना** ।

स परमात्मा नित्यशुद्धबुद्धमुक्तस्वभावः आकाशवदवस्थितः 'सदेव सोम्येदं' इत्यादिश्रुत्युक्तः इह प्रविष्टः सर्वभूतेषु स्थित्वा श्रोत्रेण शब्दं प्रतिपद्यते । त्वचा स्पर्शं चक्षुषा रूपं जिह्वया रसं नासिकया गन्धं वाचा वक्तव्यं हस्ताभ्यां ग्रहीतव्यं पद्भ्यां गन्तव्यं पायुना विसर्जयितव्यम् उपस्थेन आनन्दयितव्यम्, मनसा मन्तव्यं, बुद्ध्या बोद्धव्यं, अहंकारेण अहंकर्तव्यम्, चित्तेन चेतयितव्यं तमसा विकारम् प्रतिपद्यते इति सर्वत्र संबध्यते । स आत्मा क्षेत्रज्ञः कर्ता जीवो विज्ञानात्मेति । एतदविद्याशरीरं मणिवदुपाधिविशेषात् । तमेवंविधं मोहशरीरं विदित्वा अकर्तारमात्मानं कर्मणा पापपुण्यात्मकेन न लिप्यते इति ॥

---

'तद्धेदं तर्हि अव्याकृतमासीत्' इति श्रुतिसिद्धं साभासमज्ञानं अव्याकृतमित्युच्यते । तस्यैव प्रविलीयमानसमस्तकार्याश्रयत्वं दर्शयति — **प्रधानमिति** । उत्पत्तिकालेऽपि तस्मादेव सर्वं कार्यमुत्पद्यत इत्याह — **बीजमिति** । स्थितिकालेऽपि तत्रैव, कार्यजातं तिष्ठतीत्याह — **क्षेत्रमिति** । 'नासदासीन्नोसदासीत्' इत्युपक्रम्य 'तम आसीत्' इति श्रुतेः, 'आसीदिदं तमोभूतम्' इति स्मृतेश्च प्रसिद्धमेतदित्याह — **तम इति** । तस्य चेतनापरतन्त्रतया स्वातन्त्र्यं व्यावर्तयति — **इति सुषुप्तमिति** ॥

ननु परमात्मनः सकाशादविद्याद्वारेण स्थूलसूक्ष्मशरीरद्वयलक्षणं जगदुत्पद्यते चेत्तस्याविद्यातद्गुणसंबन्धिनो नित्यशुद्धत्वादिविहतिरित्याशंक्य अध्यारोपितसंबन्धो न वास्तवं रूपं व्याहन्तीति परिहरति — **स परमात्मेति** । यस्य वस्तुतो नास्ति परस्य कार्यकारणात्मकप्रपंचसम्बन्धः, तस्यातिविशदमसंगत्वमित्याह — **आकाशवदिति** । अथवा कार्यकारणसंबन्धो वस्तुतो नास्तीत्यत्र असंगत्वं हेतुमाह — **आकाशवदिति** । ननु परस्य कार्यकारणात्मकद्वैतप्रपंचसंस्पर्शाभावे तस्य भेदेनावस्थानात्स्थाने परित्यक्तमद्वैतमित्याशङ्क्य आरोपितस्याधिष्ठानमात्रत्वावगमाद्वैतमित्याह — **सदेवेति** ॥

नन्वेवमपि परस्य स्वरूपे प्रविष्टत्वाभावात्तदन्तर्गतानां श्रोत्रप्रभृतीनां पृथक्त्वात्कथमद्वितीयत्वमित्याशंक्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिमाश्रित्योत्तरमाह — **स परमात्मेत्यादिना** । तर्हि परमात्मनः तत्र भोक्त्रादिभावेन विभक्तत्वादद्वैतानुपपत्तिरित्याशंक्य 'क्षेत्रज्ञं चापि मां विद्धि' इति श्रुतिमाश्रित्याह — **स आत्मेति** । तस्यैव क्रियाश्रयत्वेन कर्तृत्वं, प्राणानां धारयितृत्वेन जीवत्वं, विज्ञानमन्दिरबुद्ध्युपाधिकत्वेन विज्ञानात्मत्वमित्याह —

अथाध्यात्माधिभूताधिदैवानि वक्ष्ये । श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतम् । त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम् । चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतम् । जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम् । नासाध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतम् । वागध्यात्मं वक्तव्यमधिभूतं अग्निस्तत्राधिदैवतम् । हस्तावध्यात्मं आदातव्यमधिभूतं इन्द्रस्तत्राधिदैवतम् । पादावध्यात्मं गन्तव्यं अधिभूतं विष्णुस्तत्राधिदैवतम् । पायुरध्यात्मं, विसर्जयितव्यमधिभूतम् मित्रस्तत्राधिदैवतम् । उपस्थोऽध्यात्मम् आनन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतम् । मनोऽध्यात्मं, मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम् । बुद्धिरध्यात्मं, बोद्धव्यमधिभूतं, ब्रह्मा तत्राधिदैवतम् । अहंकारोऽध्यात्मं अहंकर्तव्यमधिभूतं, रुद्रस्तत्राधिदैवतम् । चित्तमध्यात्मं, चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतम् । तमोऽध्यात्मं, विकारयितव्यमधिभूतं, ईश्वरः कर्म दैवं तत्राधिदैवतम् । एवमध्यात्माधिभूताधिदैवतं तत्सर्वमुक्तम् ॥

---

कर्तेति । तस्य नानात्वमौपाधिकं स्फटिकादेरिव जपाकुसुमाद्युपाधिकृतं लौहित्यादीत्याह — मणिवदिति । जीवस्योपाधिवशात्कर्तृत्वादिरूपेण स्थितस्य अकर्तृत्वादिरूपपरमात्मभावत्वेन परिज्ञाने पुण्यापुण्यसंस्पर्शाभावान्मुक्तिरेवेति तज्ज्ञानफलं दर्शयति— तं विदित्वेति । अकर्तारमिति च्छेदः ॥

एकस्य पुरस्य तत्प्रतिपत्तिस्थानरूपं पुरान्तरमवतारयति — श्रोत्रमित्यादिना । अध्यात्मं इति । आत्मनि शरीरे विषयत्वेन व्यवस्थितमित्यर्थः । अधिभूतमिति । भूतेषु तत्तदिन्द्रियविषयत्वेनावस्थितम् । दिश इति आकाशाभिमानिनी देवता उच्यते । तत्रत्याध्यात्माधिभूतयोः उक्तिः । अधिदैवमिति । देवतासु मध्ये अधिष्ठात्री देवतेत्यर्थः । मित्रशब्देन प्राणापानवृत्त्योरभिमानिनी देवता गृह्यते । प्रजापतिशब्देन विराडात्मा पितृरूपमापन्नो विवक्ष्यते । ब्रह्मेति हिरण्यगर्भो विराजस्सकाशादान्तरस्सूक्ष्मो देवतात्मा विवक्षितः । रुद्रशब्दो मूर्तिविशेषवचनः । ईश्वरशब्देन सर्वस्योक्तस्य भेदजातस्य कारणमभिलप्यते । अन्यदपि किंचिदनुक्तमध्यात्मादिभेदभिन्नमस्तीत्याशंकामपनुदन्नुपसंहरति — एवमिति ॥

स परमात्मा निर्विकल्पो निरवयवो निर्गुणो निरंजनः सर्वगतः सर्वव्यापी सर्वज्ञः सूक्ष्मो नित्यो विरजोऽक्षरः परं ब्रह्म, 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' 'आत्मैवेदं सर्वं,' 'ब्रह्मैवेदं सर्वं' 'पुरुष एवेदं' 'तेनेदं पूर्णं पुरुषेण सर्वं' इत्येतैः विशेषणैः विशेषितं परं ब्रह्म, तदेवाहमोमिति प्रतिपद्यते नीलमहत्सुगन्ध्युत्पलवत् ॥

शब्दादयः आत्मानं न जानन्ति परस्परमपि, अन्यज्ञातत्वात् बाह्य-

---

यत्रेदं भेदजातं परिकल्प्यते सोऽपि भिन्नस्सन्कल्पितस्स्यादिति शून्यवादिनो दर्शनमाशंक्य ■ किं स्वतो भिद्यते परतो वेति विकल्प्य प्रथमं दूषयति — स परमात्मेति । स्वतो भेदपक्षेऽपि स भेदः स्वरूपगतो वा स्यादवयवद्वारको वा गुणद्वारको वेति विकल्प्याद्यं निरस्यति — निर्विकल्पक इति । द्वितीयं प्रत्याह — निरवयव इति । न तृतीय इत्याह — निर्गुण इति । परतो भेदपक्षं प्रतिक्षिपति — निरंजन इति । न चतुर्थ इत्याह — सर्वगत इति । पृथिव्यादेरिव सर्वगतत्वमौपचारिकमिति शङ्कां शिथिलयति — सर्वव्यापीति । आकाशवदचेतनत्वमाशंक्य विशिनष्टि — सर्वज्ञ इति । तस्य द्विविधेन्द्रियागोचरत्वादपि प्रामाणिको भेदो नास्तीत्याह — सूक्ष्म इति । परमाणुतुल्यतां वारयति — नित्य इति । न च त्रसरेणुव्यतिरिक्तो नित्योऽस्ति परमाणुरिति भावः । सत्वरजस्तमोभिरसंस्पर्शाच्च न तस्मिन्भेदाशङ्केत्याह— विरज इति । कूटस्थत्वाच्च तथेत्याह—अक्षरमिति । ननु ब्रह्मैवंविधमिष्यते, परमात्मा तु कथमित्थं स्यादित्याशंक्याह — परं ब्रह्मेति । अथ कथं यथोक्तं ब्रह्म परमपुरुषार्थतया प्रेप्सितमित्याशंक्याह — विज्ञानमिति । ब्रह्मणो यथोक्तरूपत्वेऽपि प्रत्यगात्मनि किमायातमित्याशंक्याह — तदेवाहमिति । ननूक्तमैक्यज्ञानमनायासेन केनोपायेन स्यादिति चेदोंकाराभ्यासेनेत्याह — ओमिति प्रतिपद्यत इति । अध्यात्मादिना स्थूलादिना च त्रिधोक्तं योजनादिमात्रं कृत्वा तदपि पूर्वपूर्वमुत्तरोत्तरमात्रमापाद्योंकारं कार्यकारणविभागशून्ये प्रतीचि प्रविलाप्य तन्मात्रमोंकारोपलक्षितं सदेवानुसंदध्यादित्यर्थः । कथं पुनः विज्ञानानन्दादिशब्दानां ब्रह्मणि पर्यवसानमित्याशंक्य सामानाधिकरण्यादिद्वारेणेत्युदाहरणेन दर्शयति— नीलमिति । दृष्टान्ते धर्मधर्मिभावे सत्यपि दार्ष्टान्तिके तदभावात्पदानामेकस्मिन्नर्थे पर्यवसायित्वमवसेयम् ॥

तदेवं पुरद्वयं दर्शयित्वा दृष्टृदृश्यविवेकद्वारापि तत्त्वप्रतिपत्तौ संभावयितुं

घटादिवत् । एवं देहेन्द्रियमनोबुद्धिसंघाता आत्मानं न जानन्ति परस्परमप्यन्यदृष्टत्वात्, शब्दादिवत् दृश्यत्वाच्च । शरीरमात्मानं न जानाति घटादिवत् दृश्यत्वाच्च । इन्द्रियाणि आत्मानं न जानंति प्रदीपवद्दृश्यत्वात् । मन आत्मानं न जानाति इन्द्रियवद्दृश्यत्वात् । बुद्धिरात्मानं न जानाति मनोवद्दृश्यत्वात् । अहंकारः आत्मानं न जानाति बुद्धिवद्दृश्यत्वात् । चित्तमात्मानं न जानाति, अहंकारवत् दृश्यत्वात् । सुखदुःखादयो रागादयश्चात्मानं न जानन्ति चित्तवद्दृश्यत्वात् । सुषुप्तौ इन्द्रियमनोबुद्ध्यादीनामभावे शब्दादयो न ज्ञायन्ते, नात्माभावे । तस्मान्नाहं दृश्यो द्रष्टैवाहं सर्वप्रत्ययसाक्षित्वात् ॥

*अपवरकमध्ये प्रदीपवत्स्वभावेनैव प्रकाशयति । यस्मात् गृहप्रविष्टमार्जारान्प्रयत्नाभिमानरहितः प्रकाशयति यथा तथा बुद्धिगृहे ज्ञप्तिस्वरूपः*

---

पुरान्तरं दर्शयति — शब्दादय इति । आत्मानमिति शब्दादिस्वरूपोक्तिः । परस्परमिति । शब्दो रूपं रूपं च शब्दं न जानातीति यावत् । अन्यदृष्टत्वादित्यनेन हेतुः क्रियते । बाह्यस्य शब्दादिसंघातस्य ज्ञातृत्वं निराकृत्याध्यात्मिकस्य निराकरोति — मन इति । शरीरस्य न स्वपरविषये द्रष्टृत्वमित्याह — इन्द्रियाणीति । उभयविषयद्रष्टृत्वाभावं मनसो दर्शयति — मन इति । एवमेव बुद्धिरपीत्यादि व्याख्येयम् । चतुर्विधस्यान्तःकरणस्य द्रष्टृत्वाभावात्तद्वृत्तीनां स्वात्मनि परमात्मनि वा तदभावमभिधत्ते — सुखेति । ननु शब्दादीनां दृश्यमानत्वात्तद्द्रष्टृत्वेन आत्मा चेदिष्यते तर्हि सुषुप्त्यादौ शब्दाद्युपलंभाभावादात्मनोऽपि तदुपलब्धुः असिद्धिरेव स्यात् । आदित्यदर्शनाभावे तत्प्रतियोगिकस्य द्रष्टृत्वस्य प्रतिनिर्देष्टुमशक्यत्वादित्याशंक्य 'अविनाशी वा अरेऽयमात्मा' इत्यादिश्रुतिमाश्रित्य परिहरति — स्वप्न इति । 'स्वयः स्वप्नः' इति श्रुतेः स्वप्नशब्देन सुषुप्तिर्गृह्यते । द्रष्टृदृश्यविवेकमुपपादितमुपसंहरति — तस्मादिति । तत्पदपरामृष्टं हेतुमेव स्पष्टयति — सर्वप्रत्ययेति ॥

प्रत्यगात्मनः सर्वसाधकत्वे तदनुकूलप्रयत्नाभिमानप्रसंगादनिष्टप्रसक्त्यानुपपत्तिरित्याशंक्याह — अपवरकेति । प्रदीपदृष्टान्तं विवृणोति — यथेति । प्रकाशयतीत्यत्र कर्तृत्वेन प्रदीपस्संबध्यते । दार्ष्टान्तिकं व्याचष्टे — तथेति । आत्मा सर्वप्रत्ययप्रयत्नाभिमानरहितः सन्प्रकाशयतीति संबन्धः । ज्ञप्तिस्वरूपं यत् ज्योतिः तत्स्वरूपोऽयमात्मेति आत्मनः स्वयंप्रकाशत्वमुक्तम् । तत्र श्रुतिं प्रमाणयति —

स्वयंज्योतिरात्मा, 'अत्रायं पुरुषस्स्वयंज्योतिर्भवति', 'स्वेन भासा सर्वमिदं विभाति' 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥' इत्येवमादिवचनेभ्यः। बुद्धिवृत्तीनां चक्षुरादिद्वारेणोत्पद्यमानानां रूपाद्याकारप्रत्ययानां सुखदुःखमोहात्मकानां अभ्यन्तरे स्मृतीच्छाप्रयत्नरागद्वेषाभिमानरहितः स्वभावेनैव प्रकाशयति यस्मात्तस्मान्नित्यत्वं शुद्धत्वं बुद्धत्वं विकाररहितत्वं सर्वज्ञत्वं सूक्ष्मत्वमचलत्वं अनामरूपकर्मात्मत्वम्। अशनापिपासाशोकमोहजरामृत्युप्रभृतयः शरीरस्येति 'योऽशनापिपासे जरां मृत्युमत्येति,' 'यदिदं किंचाश्वभ्यः आशकुनिभ्यः आकीटपतंगेभ्यः' प्रकृतेरन्नमिति सिद्धम्। न त्वात्मन इति ॥

---

अत्रेति। स्वप्नावस्था सप्तम्या परामृश्यते। स्वेन भासा प्रत्यगात्मस्वरूपभूतेन ज्ञानेन सर्वमिदमादित्यादि तद्भासकव्याप्त्या स्पष्टं प्रतिभातीत्यर्थः। तत्र तस्मिन्ब्रह्मणि विषये सूर्यो भासकत्वेन न भातीति योजना। एवं न चन्द्रतारकमित्यादि योजनीयम्। इतश्च परमात्मप्रकाशकत्वं न सूर्यादीनामस्ति, तत्प्रकाश्यत्वादित्याह — तमेवेति। अनुगममन्यदनुभाने स्वगतप्रकाशवशादित्याशंक्य आह — तस्येति। 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म,' 'प्रज्ञानघन एव' इत्यादिवचनानि, आदिशब्देन गृह्यन्ते ॥

आत्मनो ज्ञप्तिस्वभावस्य प्रयत्नादिरहितस्य सर्वप्रत्ययसाक्षित्वे फलितमाह — बुद्धिवृत्तीनामिति। अभ्यन्तरे स्थित्वा ता एव बुद्धिवृत्तीरिति शेषः। शुद्धत्वं सर्वबुद्धिसाक्षित्वात्। बुद्धत्वं समस्तजडसाधकत्वेन बोधैकरसत्वात्। सूक्ष्मत्वं साक्षित्वेनोभयनिमेन्द्रियामाह्यत्वात्। अचलत्वं आकाशवदवस्थितत्वात्। नामरूपयोरसाक्ष्यकोटिनिविष्टयोः साक्षिणि संभावनाभावात्। विकाररहितत्वमनामरूपत्वात् इति विवेक्तव्यम्। प्रत्यगात्मनः षड्भिसंबन्धिनो विकाररहितत्वमसिद्धमित्याशंक्याह — अशनेति। आश्रयान्तरगामित्वादशनायादीनामात्मसंबन्धो नास्तीति फलितं वक्तुमितिशब्दः। आत्मनः षड्भिसंबन्धाभावे प्रमाणमाह — योऽशनेति। तमेतमात्मानं वेदितुमिच्छन्तः प्रव्राजिनः प्रव्रजन्तीति सम्बन्धः। आत्मनोऽशनायाद्यभावे कथं प्रसिद्धो भोक्तृभोग्यविभागसंभेदित्याशंक्याह — यदिदमिति। प्रकृतेरिति। अस्मादधस्तात्पदमध्याहर्तव्यम्। प्रकृतिशब्देन प्राणो गृह्यते, तस्यात्तृत्वप्रसिद्धेरिति द्रष्टव्यम्। अनात्मन्येव

जाग्रत्स्वप्नसुषुप्तेषु एक एव आत्मा । जागरिते वैश्वानरः, स्वप्ने तैजसः, सुषुप्ते प्राज्ञः । स एव निर्विशेषस्तुरीयः । स परमात्मा सोऽहमिति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहैवेति ॥

इति त्रिपुरी समाप्ता ॥

---

भोक्तृभोग्यविभागरसाभासस्यान्तःकरणस्य भोक्तृत्वादिति मन्वानो व्यावर्त्यं दर्शयति—**नत्वात्मन इति** । तृतीयपुरसमाप्त्यर्थं इतीत्युक्तम् ॥

शरीरद्वयोपन्यासेनाध्यात्मादिविभागाभिधानेन दृष्टृदृश्यवचनेन च तत्वप्रतिपत्तिप्रकारं व्याख्यायावस्थात्रयद्वारेणापि तत्प्रतिपत्तिप्रकारं व्याचिख्यासुः आत्मनः प्रत्यवस्थं भेदमाशंक्य प्रत्यभिज्ञानमनुरुन्धन्नाह—**जाग्रदिति** । एकत्वे कथं संज्ञाभेदः स्यादित्याशंक्य अवस्थाभेदवशादित्याह—**जागरित इति** । अवस्थासंबन्धिनस्सकाशादन्यस्यैवात्मनो ज्ञेयत्वमाशंक्याह—**स एवेति** । क्रमाक्रमाभ्यामवस्थात्रयमनुभवन्नेवात्मा कार्यकारणात्मकं त्रितयमतीत्य सकलविशेषाभावोपलक्षितस्तुरीयो निरुच्यते । स च सदानन्दैकघनः विज्ञानघातुः इत्यर्थः ॥

शोधितत्वंपदार्थमनूद्य तस्य तत्पदार्थत्वं वाक्यार्थं कथयति—**स परमात्मेति** । संप्रति व्यतिहारविवक्षया परिशोधितं तत्पदार्थमनूद्य तस्य प्रत्यगात्ममात्रत्वं प्रत्याययति—**सोऽहमिति** । इतिशब्देन प्रकरणं परिसमापयन्यथोक्तवाक्यार्थपरिज्ञानादज्ञानतदुत्थानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावेन कृतकृत्यता भवतीति ॥

पुरत्रयपरामर्शो वस्तुतो नानुभूयते ।
यत्र तस्मै नमः कुर्वे पुरुषोत्तममूर्तये ॥

इति श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितं
**त्रिपुरीविवरणं** समाप्तम् ॥



॥ श्रीः ॥

# ॥ दुर्वासनाप्रतीकारदशकम् ॥



प्रातर्वैदिककर्मतस्तदनु सद्वेदान्तसच्चिन्तया
पश्चाद्भारतमोक्षधर्ममननात् वासिष्ठरामायणात् ।
सायं भागवतार्थदिव्यकथया रात्रौ निदिध्यासनात्
कालो गच्छतिति नश्शरीरभरणं प्रारब्धकण्ठार्पितम् ॥ १ ॥

अज्ञानं त्यज हे मनोऽपि च सदा ब्रह्मात्मसंभावनात्
सङ्कल्पान्सकलानपि त्यज जगन्मिथ्यात्वसंभावनात् ।
कामान् साधनसाध्यदुःखनिवहध्यानादजस्रं त्यज
क्रोधं तु क्षमया सदा जहि बलाल्लोभं तु सन्तोषतः ॥ २ ॥

जिह्वोपस्थसुखभ्रमं त्यज मनः पर्यन्तदुःखेक्षणात्
पारुष्यं मृदुभाषणात् त्यज वृथालापश्रमं मौनतः ।
दुःसङ्गं त्यज साधुसङ्गमबलात् गर्वन्तु भङ्गेक्षणात्
निन्दादुःखमनिन्द्यदेवमुनिदुर्निन्दाकथासंस्मृतेः ॥ ३ ॥

निद्रां सात्विकवस्तुसेवकतया स्वप्नं सदा जागरात्
रोगान् जीर्णमिताशनाज्जहि सदा दैन्यं महाधैर्यतः ।
अर्थानर्थपरिग्रहं त्यज वृथासंसर्गसन्त्यागतः
स्त्रीवाञ्छां त्यज दोषदर्शनबलात् दुःखं सुखालोक्षणात् ॥ ४ ॥

दारासक्तिमनादरात् सुतधनासक्तिं त्वनित्यत्वतः
स्नेहं मोहविसर्जनात् करुणया नैष्ठुर्यमन्तस्त्यज ।
औदासीन्यसमाश्रयात् त्यज सुहृन्मित्रादिदुर्वासनाः
सर्वानर्थकरान् दशेन्द्रियरिपूनेकान्तवासाज्जहि ॥ ५ ॥

आलस्यं त्वरया श्रमं शमधिया तन्द्रां समुत्थानतः
भेदभ्रान्तिमभेददर्शनबलात् मिथ्यात्मतां सत्यतः ।

नर्मोक्तिं निजमर्मकर्मकथया द्रोहं स्वसाम्येक्षणात्
आक्रोशं कुशलोक्तितस्त्यज मनश्छिन्ध्यप्रमादाद्भयम् ॥ ६ ॥

भूतार्थस्मरणं वृथाश्रमधिया प्राप्तं तु हानेक्षणात्
भाव्यर्थव्यसनं सदा त्यज मनः प्रारब्धचोद्येक्षणात् ।
शिष्टाशिष्टजनक्रियास्त्यज वृथाकष्टानुसन्धानतः
स्नेहद्वेषकथास्सदा त्यज जने भस्मान्ततासंस्मृतेः ॥ ७ ॥

अध्यात्मानुभवान्मनस्त्यज महत्तापं स्वभावेक्षणात्
वैषम्यं समभावतः परकथाविक्षोभमक्षोभतः ।
धिक्कारादिभवं तु दुःखमनिशं तद्योग्यताभावनात्
तज्जातान्यशुचः क्षमस्व कृपया कर्मक्षयाच्चाहतम् ॥ ८ ॥

आयुर्गच्छति पेटिकाजलमिव त्वक्त्वैव देहं जवात्
गच्छन्तीन्द्रियशक्तयोऽपि कुलटा यद्वन्नरं निर्धनम् ।
प्रज्ञा गच्छति दावदाहसमये श्रेणी मृगीणामिव
ज्ञात्वा सत्वरमाश्रयात्मपदवीं देहं वृथा मा कृथाः ॥ ९ ॥

धैर्यैरावतशान्तिधेनुदमसन्मन्दारवृन्दं सदा
मैत्र्याद्यप्सरसं विवेकतुरगं सन्तोषचिन्तामणिम् ।
आत्मज्ञानमहामृतं समरसं नैराश्यचन्द्रोदयं
वेदान्तार्णवमाश्रयन्ननुदिनं सेवस्व मुक्तिश्रियम् ॥ १० ॥

प्रसादात् दक्षिणामूर्तेः श्रुत्याचार्यप्रसादतः ।
दुर्वासनाप्रतीकारदशकं रचितं मया ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ दुर्वासनाप्रतीकारदशकं संपूर्णम् ।



श्रीशङ्करभगवत्पादैः विरचितः

# श्रीमत्क्रमस्तवः ॥

---

रक्तामृताम्बुनिधिमध्यलसत्प्रवाळद्वीपस्फुरत्परमनन्दनकाननान्तः ।
श्रीवृक्षमूलतलपश्चिमवक्त्ररत्नगेहान्तराद्भुतमहामणिपीठिकायाम् ॥ १ ॥

बिन्दुत्रिकोणवह्निरष्टककोणबाह्यादिकोणदिक्परचतुर्दशकोणयुक्ताम् ।
वृत्ताष्टषोडशदळानतवृत्तलोकभूपूश्चतुर्मुखमहं प्रणमामि चक्रम् ॥ २ ॥

पाशांकुशामृतकपालसुसूलहस्तं हस्त्याननं विविधभूषणनीलदेहम् ।
नित्योत्सवं सकलविघ्नविनाशहेतुं श्रीमद्गणेश्वरमहं प्रणमामि नित्यम् ॥ ३ ॥

पीयूषभाण्डमसिदण्डकपालखण्डचण्डातिचण्डभुजदण्डमतिप्रचण्डम् ।
श्रीकुण्डलद्वयविमण्डितगण्डमीडे नीलं वटुं बटुकनाथमहीन्द्रहारम् ॥ ४ ॥

चञ्चत्कपालसुकृपाणत्रिशूलदण्डमुद्यड्डमड्डमरुमण्डितपाणिदण्डम् ।
नीलाञ्जनप्रचयपुञ्जमिव प्रसन्नं श्रीक्षेत्रपालकममुं शरणं श्रयामि ॥ ५ ॥

चक्रातिचक्रपरिदारितदैत्यचक्रचक्राक्षिकम्बुपरिचुम्बिकरां कुमारीम् ।
दुर्गां निसर्गमुनिनन्दितदुर्गदुर्गसिंहासनोपरिगतां सततं श्रयामि ॥ ६ ॥

पद्मद्वयाभयवरोद्यतपाणिपद्मां पद्मासनेन समलंकृतपादपद्माम् ।
पद्मां सुपद्मवदनां खलु पद्मनाभहृत्पद्ममध्यवसतिं सततं प्रपद्ये ॥ ७ ॥

उद्यत्सुधानिधिसहस्रमरीचिगौरी वागीश्वरी सकलवाङ्मयसागराणाम् ।
कण्ठे सदा लुठतु मे स्फटिकाक्षमालाश्रीज्ञानपुस्तकवराभयशस्तहस्ता ॥ ८ ॥

बन्धूकपुष्पवपुषं मदघूर्णमानं पुण्ड्रेक्षुचापकुसुमेषुकरं वराढ्या ।
यद्बन्धनात्कनककान्तिसमानकान्त्या स्वालिङ्गितं रतिपतिं सततं स्मरामि ॥ ९ ॥

प्रीत्या वशं भुवि वसन्तमहं भवन्तं नृत्यन्तमद्भुतमहोत्सवदं वसन्तम् ।
वन्दे सुनन्दनवने शरदिन्दुकान्तं सन्तानसन्ततिलतासुविकासयन्तम् ॥ १० ॥

भक्त्याश्रिताभयवरोद्यतपाणिपद्मौ देवौ समानरचितासनसन्निविष्टौ ।
द्वारे पुरे परमदैवतदेवतायाः श्रीशंखपद्मकनिधी निदधामि मूर्ध्नि ॥ ११ ॥

चिन्तामणिप्रणयदक्षिणवाण्यभीतिदानोल्लसत्कमलकोमलवामपाणीः ।
रक्तद्युतीः शशिधराः प्रकटाणिमाद्यास्त्रैलोक्यमोहनगताः परिपूजयामि ॥ १२ ॥

रक्तोत्पलामृतकपालधराः कराभ्यां यंशीतमालदलकोमलनीलदेहाः ।
ब्राह्म्यादिका रुचिरभूषणरत्नरम्या मातॄर्द्वितीयचतुरस्रगता भजामि ॥ १३ ॥

पाशाङ्कुशाञ्चितयथायथदक्षवामहस्तानिमुद्रितकरां तरुणारुणाभाम् ।
श्रीमत्तृतीयचतुरस्रगसर्वपूर्वसंक्षोभपूर्वदलदैवतमर्चयामि ॥ १४ ॥

शोणाः सपाशसृणिपाणियुगाभिरामाः कामाद्यकर्षणपराः सुभगाश्च नित्याः ।
गुप्ता कलानिलयाः खलु सर्वशाऽऽशासपूरकषोडशदले परिपूजयामि ॥ १५ ॥

श्रीदेव्यचिन्त्यमहिमा अभिदीप्यमाना रक्ताः सुगुप्ततरनामधरा दयार्द्राः ।
शक्तीरनङ्गकुसुमादितयाष्ट सर्वसंक्षोभणेऽष्टदलके परिपूजयामि ॥ १६ ॥

शोणाः सबाणधनुषः खलु सर्वपूर्वसंक्षोभणादिकचतुर्दशदेवतास्ताः ।
सत्सम्प्रदायविधिना परिपूजयामि सौभाग्यदायकचतुर्दशकोणचक्रे ॥ १७ ॥

शुभ्रा वराभयकराः खलु सर्वपूर्वसिद्धिप्रदा दशदिशोद्भुतशक्तिशक्तीः ।
सर्वार्थसाधकबहिर्दशकोणचक्रे सम्पूजयामि कुलकौलिकयोगिनीस्ताः ॥ १८ ॥

कर्पूरपूररुचिराङ्कधराक्षमालाः श्रीतत्त्वपूजकभृतोऽतिनिगर्भदेवीः ।
सर्वार्थरक्षणकरे दशकोणचक्रे सर्वज्ञिकाप्रथमिका दश पूजयामि ॥ १९ ॥

चापेषुपुस्तकलसत्स्फटिकाक्षमालं बालप्रवालरुचिरं वशिनीप्रधानम् ।
सर्वादिरोगहरचक्रवरे त्रिकोणे वाग्देवताष्टकमहं सरहस्यमीडे ॥ २० ॥

रक्ता वराभयकराः शिरसा दधानाः पाशाङ्कुशेषुधनुरायुधभूषणानि ।
श्रीमत्त्रिकोणबहिरात्मकदेवतास्ता रक्षन्तु सन्ततमनन्तगुणाश्चवत्सः ॥ २१ ॥

श्रीमत्त्रिकोणबहिरात्मकदेवतास्ता देवीः षडङ्गयुवतीः परिपूजयामि ।
कुन्देन्दुकज्जलकठोरपिशङ्गहव्यवाहश्रियोऽभयवरोद्यतपाणिपद्माः ॥ २२ ॥

श्रीमत्त्रिकोणपरमाद्भुतसर्वपूर्वसिद्धिप्रदेऽतिपरमामृतहृव्यदेव्यः ।
कामेश्वरी मम ददातु समस्तकामान् वज्रेश्वरी भगवती भगमालिनी च ॥

श्रीमत्त्रिकोणपुरविस्फुरितां त्रिनेत्रां बालातपारुणतनुं तरुणेन्दुमौलिम् ।
पीयूषभाजनदराङ्कुशपाशहस्तां कामेश्वरीं भगवतीं परिपूजयामि ॥ २४ ॥

पाशांकुशामृतकपालकमातुलुङ्गचापेषुमंगलकरामरुणां त्रिनेत्राम् ।
श्रीमत्त्रिकोणपरदैवतदक्षिणस्थां वज्रेश्वरीं भगवतीं परिपूजयामि ॥ २५ ॥

चन्द्राननां त्रिनयनां तरुणेन्दुमस्तां पाशांकुशाक्षगुणपुस्तकशस्तहस्ताम् ।
श्रीमत्त्रिकोणपरदैवतवामभागे शुभ्रां भजे भगवतीं भगमालिनीं च ॥ २६ ॥

चक्रेऽतिगुह्यपरमाद्भुतसर्वपूर्वानन्दात्मकेऽतिपरमे नवमे तु पूर्वे ।
भक्त्या परापरतरातिरहस्यदेवीं सेवे परापरमेथीं परमेश्वरीं ताम् ॥ २७ ॥

सत्यमजामदरुणाम्बुजवक्त्रबिम्बचुम्बालिकालकुटिलालकपल्लवां ताम् ।
आनन्दसान्द्रकरुणामयसुप्रसन्नलीलातिलोलनलिनोत्पललोचनाढ्याम् ॥

सिन्दूरसुन्दरशरीरविराजमानराजीवदाडिमजपानवबन्धुजीवाम् ।
श्रीमन्महामुकुन्दकोटिमहार्घ्यरत्नसब्रह्मचारिपरमामृतचन्द्ररेखाम् ॥ २९ ॥

सुभ्रूतया विजितरूपपिनाकचापेवीणासनाद्धि विनिवेशितबाणलीलाम् ।
सद्विश्वकर्मपरिसूत्रितनासिकाग्रां पद्मासनां त्रिनयनां तरुणेन्दुमस्ताम् ॥ ३० ॥

ईषद्विकासितमनोहरहासदन्तवासश्रिया जितनवोदितचन्द्ररेखाम् ।
सौन्दर्यदैवतमहामृगनाभिचित्रपत्रांशुमिन्दुकमनीयललाटपट्टाम् ॥ ३१ ॥

लावण्यभाण्डशुभगण्डयुगाभिरामानौपम्यकान्तिचिबुकाभिविराजमानाम् ।
श्रीकुण्डलद्वयविमण्डितगण्डशोभापाण्डित्यखण्डितसुधानिधिमण्डलाभाम् ॥

कर्पूरपूरपरिपूरितचारुनागवल्लीरमार्द्रवपुराक्वाणिभाधरोष्ठीम् ।
ग्रैवेयचुम्बितमणिद्युतिदीप्यमानसच्छायया द्विगुणशोभितकम्बुकण्ठीम् ॥ ३३ ॥

लाक्षारसस्नपितबालमृणालनालीलालयामलरसार्द्रितबाहुवल्लीम् ।
रक्तोत्पलोज्ज्वलदलामलकोमलाभिर्बालप्रवाललालिताङ्गुलिशालिनीसाम् ॥ ३४ ॥

तद्विश्वकर्मपरियन्त्रविनिर्मितश्रीरत्नाङ्गुलीयकनकद्युतिदीप्यमानाम् ।
केनापि कारणवशेन गृहीतचन्द्रपाशाङ्कुशेषुधनुरायुधभूषणां ताम् ॥ ३५ ॥

त्रैलोक्यदुर्लभमहामणिनायकश्रीसंसक्तमौक्तिककल्लोज्ज्वलहारलक्ष्मीम् ।
लावण्यवारिपरिपूर्णसुरेभकुम्भशोभाभिभाविकुचमण्डलपूर्णकुम्भाम् ॥ ३६ ॥

लोकत्रयेऽप्यतिसुदुर्लभसाम्यसौम्यशोभाविभाकरवलित्रयशोभिमध्याम् ।
लावण्यनाभिगह्वनाभिगृहप्रविष्टश्रीमन्महाद्युतिमयीं नवलोमराजीम् ॥ ३७ ॥

चञ्चन्मरीचिनिचयांचितकांचनांचत्कांचीनिकाशिरुचिरत्तविचित्ररत्नाम् ।
श्रीकामकाननसमुद्भवरामरम्भास्तंभाभिभाविसुकुमारतरोरुयुग्माम् ॥ ३८ ॥

वृत्तानुपूर्वविधिदुर्घटसन्निवेशजंघायुगाभिरमणां मणिगूढगुल्फाम् ।
वाचस्पतेरपि वचोरचनाभिशोभिसौन्दर्यगोचरमनोहरपादपद्माम् ॥ ३९ ॥

श्रीब्रह्मविष्णुशिवमौलिलसद्विमानमालोक्यमानवरुणारुणपादपद्माम् ।
श्रीसाधकाय करुणामयसुप्रसन्नहृष्टातिदिव्यवरदानमधः प्रसन्नाम् ॥ ४० ॥

त्रैलोक्यमोहनमयीं परमेश्वरीं तां त्रैलोक्यकारणमयीं परमेश्वरीं ताम् ।
त्रैलोक्यविस्मयमयीं परमेश्वरीं तां चक्रेश्वरीं शुभकरीं परिपूजयामि ॥ ४१ ॥

त्रैलोक्यमोहनसुराब्जकचक्रमेतत्स्थानेऽणिमादिप्रकटादिकसिद्धिदेवीम् ।
श्रीमद्गुरुक्रमसमस्तसमग्रमुद्राः पुष्पैः प्रपूज्य परमेश्वरि तेऽर्चयामि ॥ ४२ ॥

पक्षादिभूतमणिपंचदशीनि यावन्नित्याततिथिक्रममयीं खलु केऽपि धन्याः ।
कामेश्वरीप्रभृतिपंचदशादिनित्यामंत्रैः परापरमयीं परिपूजयामि ॥ ४३ ॥

त्वं गीयसे प्रथमतः त्रिपुरेति मातः पश्चाद्द्वितीयनवमे त्रिपुरेश्वरीति ।
तार्तीयके त्रिपुरसुन्दरिकेति तुर्ये मातः परा त्रिपुरवासिनिका त्वमेव ॥ ४४ ॥

त्वं पंचमे भगवती त्रिपुरा परा श्रीः षष्ठे परा त्रिपुरमालिनिका त्वमेव ।
त्वं सप्तमे भगवती त्रिपुरादिसिद्धा त्वं चाष्टमे भगवती त्रिपुराम्बकेति ॥ ४५ ॥

पूर्णे परापरमये परमेऽतिगुह्ये श्रीमन्महात्रिपुरसुन्दरि च त्वमेव ।
श्रीमन्महात्मकमहाद्भुतचक्रराजे त्वं गीयसे सुकृतिभिः खलु कैश्च देवी ॥ ४६ ॥

आदौ दशाष्टदशषोडश चाष्ट चासि पश्चाच्चतुर्दशदशासि ततो दशाष्टौ ।
पश्चाच्चतुष्टयमसि त्रितयं च षट्कं सप्तोत्तरा शतमयी त्वमसि त्वमेका ॥ ४७ ॥

कामेश्वरीति भगमालिनिकेति नित्यक्लिन्नेति भैरुण्डतासि हिरण्यकेति ।
त्वं वह्निवासिनिरतेति महादिभूतविद्येश्वरीति च तथा शिवदूतिकेति ॥ ४८ ॥

मातः परा त्वरितिका कुलसुन्दरीति नित्याविनित्यपरनीलपताकिनीति ।
त्वं सर्वलोकविजयाखिलमालिकेति ज्वालामयीति निगदन्ति विचित्रकेति ॥

मातस्त्वयाक्षरमनक्षररूपिकायं संसाध्य शुद्धमतयो गणयन्ति नैव ।
श्रीब्रह्मविष्णुशिवताक्ष्यरवीन्द्रचन्द्रयक्षेन्द्रदर्पकगणेश्वरवह्निमुख्यान् ॥ ५० ॥

संपूज्य केपि सकलैर्वरणोपचारैः ग्रन्थिं विभिद्य परमेष्ठिनमुद्वहन्तीम् ।
मारात्मिकां मदनधामनि दीपरूपां जिह्वाग्रतः सुकृतिनः परिपालयन्ति ॥

आधारवारिरुहमध्यलसत्त्रिकोणवामाशिखाग्रजपरां परमाङ्कुराभाम् ।
ज्ञानक्रियेष्टमयि सृष्टिविनाशनाशश्रीब्रह्मविष्णुशिवरूपधरा त्वमेका ॥ ५२ ॥

सृष्टिस्थितिप्रलयकारणकर्तृभूतं वेदान्तवेद्यमजमव्ययमप्रमेयम् ।
अन्योन्यभेदकलहाकुलमानसास्ते जानन्ति किं जडधियस्तव रूपमम्ब ॥ ५३ ॥

स्तोत्रं त्वमेव परमेश्वरि गीयसे चेत् स्तोता त्वमेव परमेश्वरि गीयसे चेत् ।
स्तुत्यं त्वमेव परमेश्वरि गीयसे चेत् किं स्तूयसे खलु तदा परमेश्वरि त्वम् ॥

यः कालकल्पतरुमेतदनन्यबुद्धिः श्रीमत्क्रमस्तवनृपं पठतीह नित्यम् ।
मुक्तिः करे वसति सिद्धिभिरष्टभिर्वा किं तस्य मातरणिमादिभिरल्पिकाभिः ॥

त्वां पूजयेत्क्रमकुलां सकलार्थसिद्धिस्तोत्रं पठिष्यति जनस्त्वयि जातभक्तिः ।
तस्मान्मयापि तव भक्तिरसेन देवि भक्तार्थसिद्धिकररत्नमिदं व्यधायि ॥ ५६ ॥

इति श्रीशङ्करभगवत्पादाचार्यविरचितः श्रीमत्क्रमस्तवः संपूर्णः ॥



# ॥ प्रश्नोत्तररत्नमाला ॥

## ( मणिरत्नमाला )



अपारसंसारसमुद्रमध्ये निमज्जतो मे शरणं किमस्ति ।
गुरो कृपालो कृपया वदैतत् विश्वेशपादांबुजदीर्घनौका ॥ १ ॥

बद्धो हि को यो विषयानुरागी को वा विमुक्तो विषयैर्विमुक्तः ।
को वास्ति घोरो नरकः स्वदेहः तृष्णाक्षयः स्वर्गपदं किमस्ति ॥ २ ॥

संसारहृत्कस्तु निजात्मबोधो को मोक्षहेतुः प्रथितस्स एव ।
द्वारं किमेकं नरकस्य नारी का स्वर्गदा प्राणभृतामहिंसा ॥ ३ ॥

शेते सुखं कस्तु समाधिनिष्ठो जागर्ति को वा सदसद्विवेकी ।
के शत्रवस्सन्ति निजेन्द्रियाणि तान्येव मित्राणि जितानि कानि ॥ ४ ॥

को वा दरिद्रो हि विशालतृष्णः श्रीमांश्च को यस्य समस्ततोषः ।
जीवन्मृतः कस्तु निरुद्यमो यः का वाऽमृता स्यात् सुखदा निराशा ॥ ५ ॥

पाशो हि को यो ममताभिमानः संमोहयत्येव सुरेव का स्त्री ।
को वा महान्धो मदनातुरो यो मृत्युश्च को वाऽपयशः स्वकीयम् ॥ ६ ॥

को वा गुरुर्यो हि हितोपदेष्टा शिष्यस्तु को यो गुरुभक्त एव ।
को दीर्घरोगो भव एव साधो किमौषधं तस्य विचार एव ॥ ७ ॥

किं भूषणाद्भूषणमस्ति शीलं तीर्थं परं किं स्वमनो हि शुद्धम् ।
किमत्र हेयं कनकं च कान्ता श्राव्यं सदा किं गुरुवेदवाक्यम् ॥ ८ ॥

के हेतवो ब्रह्मगतेस्तु सन्ति सत्सङ्गतिः शान्तिविचारतोषाः ।
के सन्ति सन्तोऽखिलवीतरागाः अपास्तमोहाः शिवतत्त्वनिष्ठाः ॥ ९ ॥

को वा ज्वरः प्राणभृतां हि चिन्ता मूर्खो हि को यस्तु विवेकहीनः।
कार्या मया का शिवविष्णुभक्तिः किं जीवनं दोषविवर्जितं यत्॥ १०॥

विद्या हि का ब्रह्मगतिप्रदा या बोधोऽस्ति को यस्तु विमुक्तिहेतुः।
को लाभ आत्मावगमो हि यो वै जितं जगत्केन मनो हि येन॥ ११॥

शूरान्महाशूरतमोऽस्ति को वा मनोजबाणैर्व्यथितो न यस्तु।
प्राज्ञोऽतिधीरश्च समश्च को वा प्राप्तो न मोहं ललनाकटाक्षैः॥ १२॥

विषाद्विषं किं विषयाः समस्ताः दुःखी सदा को विषयानुरागी।
धन्योऽस्ति को यस्तु परोपकारी कः पूजनीयो ननु तत्त्वनिष्ठः॥ १३॥

सर्वास्ववस्थास्वपि किं न कार्यं किं वा विधेयं विदुषा प्रयत्नात्।
स्नेहश्च पापं पठनं च धर्मः संसारमूलं हि किमस्ति चिन्ता॥ १४॥

विज्ञान्महाविज्ञतमोऽस्ति को वा नार्या पिशाच्या न च वञ्चितो यः।
का शृङ्खला प्राणभृतां हि नारी दिव्यं व्रतं किंच निरस्तदैन्यम्॥ १५॥

ज्ञातुं न शक्यं किमिहास्ति सर्वैः योषिन्मनो यच्चरितं तदीयम्।
का दुस्त्यजा सर्वजनैर्दुराशा विद्याविहीनः पशुरस्ति को वा॥ १६॥

वासो न संगः सह कैर्विधेयो मूर्खैश्च पापैश्च खलैश्च नीचैः।
मुमुक्षुणा किं त्वरितं विधेयं सत्सङ्गतिः निर्ममतेशभक्तिः॥ १७॥

लघुत्वमूलं च किमर्थितैव गुरुत्वबीजं यदयाचनं किम्।
जातोऽस्ति को यस्य पुनर्न जन्म को वाऽमृतो यस्य पुनर्न मृत्युः॥ १८॥

मूकोऽस्ति को वा बधिरश्च को वा युक्तं न वक्तुं समये समर्थः।
तथ्यं सुपथ्यं न शृणोति वाक्यं विश्वासपात्रं न किमस्ति नारी॥ १९॥

तत्त्वं किमेकं शिवमद्वितीयं किमुत्तमं सच्चरितं यदस्ति।
किं कर्म कृत्वा न च शोचनीयः कामारिकंसारिसमर्चनाख्यम्॥ २०॥

शत्रोर्महाशत्रुतमोऽस्ति को वा कामः सकोपानृतलोभतृष्णः।
न पूर्यते को विषयैः स एव किं दुःखमूलं ममताभिधानम्॥ २१॥

किं मण्डनं साक्षरता मुखस्य सत्यं च किं भूतहितं तदेव ।
त्यक्त्वा सुखं किं स्त्रियमेव सम्यग्देयं परं किं त्वभयं सदैव ॥ २२ ॥

कस्यास्ति नाशे मनसो हि मोक्षः क्व सर्वदा नास्ति भयं विमुक्तौ ।
शल्यं परं किं निजमूर्खतैव के के ह्युपास्या गुरवश्च वृद्धाः ॥ २३ ॥

उपस्थिते प्राणहरे कृतान्ते किमाशु कार्यं सुधिया प्रयत्नात् ।
हृद्बुद्धिचित्तैस्सुखदं यमघ्नं मुरारिपादांबुजमेव चिन्त्यम् ॥ २४ ॥

के दस्यवस्सन्ति कुवासनाख्याः कश्शोभते यस्सदसि प्रविद्यः ।
कान्तेव का या सुखदा सुविद्या किमेधते दानवशात् सुविद्या ॥ २५ ॥

कुतो हि भीतिः सततं विधेया लोकापवादात् भवकाननाच्च ।
को वास्ति बन्धुः पितरौ च को वा विपत्सहायः परिपालको यः ॥ २६ ॥

बुद्ध्वा न बोध्यं परिशिष्यते किं शिवं प्रशान्तं सुखबोधरूपम् ।
ज्ञाते तु कस्मिन् विदितं जगत्स्यात् सर्वात्मके ब्रह्मणि पूर्णरूपे ॥ २७ ॥

किं दुर्लभं सद्गुरुरस्ति लोके सत्संगतिर्ब्रह्मविचारणा च ।
त्यागो हि सर्वस्य शिवात्मबोधः को दुर्जयः सर्वजनैर्मनोजः ॥ २८ ॥

पशोः पशुः को न करोति धर्मं प्राधीतशास्त्रोपि न चात्मबोधः ।
किं तद्विषं भाति सुधोपमं स्त्री के शत्रवो मित्रवदात्मजाद्याः ॥ २९ ॥

विद्युच्चलं किं धनयौवनायुः दानं परं किंच सुपात्रदत्तम् ।
कण्ठं गतैरप्यसुभिर्न कार्यं किं किं विधेयं मलिन शिवार्चा ॥ ३० ॥

किं कर्म यत्प्रीतिकरं मुरारेः क्वास्था न कार्या सततं भवाब्धौ ।
अहर्निशं किं परिचिन्तनीयं संसारमिथ्यात्वशिवात्मतत्त्वम् ॥ ३१ ॥

कण्ठं गता वा श्रवणं गता वा प्रश्नोत्तराख्या मणिरत्नमाला ।
तनोतु मोदं विदुषां सुरम्या रमेशगौरीशकथेव सद्यः ॥ ३२ ॥

इति श्रीसुकवीन्द्रशङ्करमिश्रविरचिता प्रश्नोत्तररत्नमाला समाप्ता ॥

---

॥ श्रीगणेशाय नमः ॥

# ॥ सच्चिदानन्दभुजङ्गः ॥

यतस्तत्वमस्यादिवाक्योपदेशैः सदा सच्चिदानन्दभावो विभाति ।
स आचार्यवर्यस्स देवास्समस्ता गिरस्तस्य वेदाः पदाब्जे च गङ्गा ॥ १ ॥

प्रबोधान्तवेदान्तयोगान्तपूर्वैः कलान्ताख्यनादान्तसिद्धान्तवादैः ।
चिदानन्दमेकं परंत्वात्मनिष्ठाः स सिद्धो न चेत्किं फलं तैश्च वादैः ॥ २ ॥

क्व जीवस्य वार्ता क्व वा कोशवार्ता क्व भूतानि वेधोमुखा देवताः क्व ।
क्व कैलासवैकुंठसत्यादिलोकाः चिदानन्द एकस्सदाचार्यलक्ष्यः ॥ ३ ॥

चिदानन्दभावे सदाचार्यबुद्धे कुतोऽष्टौ च सिद्धीः कुतो लोकभेदान् ।
कुतो देवसारूप्यलाभादि कांक्षेद्वदेत्तत्समस्तं सदोपाधियुक्तम् ॥ ४ ॥

क्व वा रूप्यशैलः क्व वैकुण्ठदेशः क्व वा सत्यलोकस्तदीशाश्च के वा ।
गुरोस्सत्कृपाबोधितानन्दभावो निजानन्दलेशाश्रितस्तान् जहाति ॥ ५ ॥

समन्ताच्च सत्तास्वरूपेण पूर्णं तदा चित्स्वरूपेण पूर्णं समस्तम् ।
परानन्दपूर्णं च सर्वं यदेतत्ततस्सच्चिदानन्दरूपश्शिवोहम् ॥ ६ ॥

सदेतच्चिदेषा तथानन्द एष ध्रुवं नामभिस्तैः शिवो नामवाच्यः ।
यतः क्लीबनारीपुमाकारतोऽसौ प्रपंचः स्फुरत्यस्य सान्निध्यमात्रात् ॥ ७ ॥

ततो भूस्सुपूर्णा भुवस्तेन पूर्णः स्वरेतेन पूर्णं तथा सर्वलोकाः ।
यतो भूर्भुवःस्वःप्रभृत्याश्रितायास्सदा जीवकोटेर्विलासो विभाति ॥ ८ ॥

यतो भूविकारास्त्वयं देहस्तया येन मद्रूपमाकारि भाति ।
यतश्चन्द्रसूर्यादितेजश्च वातः प्रथात्यतश्चित्समस्तेषु पूर्णा ॥ ९ ॥

परस्त्वन्नकोशस्तनुः प्राणवातात् स वातो मनःप्रेरितोऽज्ञानतस्तत् ।
तदेतच्च विज्ञानमानन्दतुन्नं ततः कोशपंचाश्रितस्सन्निधाने ॥ १० ॥

क्व चान्नाख्यकोशः क्व वा प्राणकोशः क्व वा तौ मनःकोशविज्ञानकोशौ ।
क्व वानन्दकोशान्वमध्यादिशून्ये कथं सच्चिदानन्दरूपेऽङ्ग योगः ॥ ११ ॥

क्व चानादिलिङ्गं क्व वा सूक्ष्मदेहः क्व वा भूतदेहश्चिदानन्दरूपे ।
चिद्रूपः कथं तैस्तैर्योगमेति स्फुरत्स्फाटिकादर्शमेव नीलादिवर्णैः ॥ १२ ॥

घटस्थो मठस्थो बहिष्ठो निरस्थो यथाकाश एकोऽखिलोपाधिमुक्तः ।
तथा ब्रह्मविष्ण्वादिकीटान्तदेहे चिदानन्द एको हि पूर्णो विभाति ॥ १३ ॥

यथाभ्रेषु धावत्सु धावन्निवेन्दुस्तथा देहचेष्टा समारोप्यतेऽस्मिन् ।
यथा निर्मले दर्पणे बिम्बबोधस्तथा शुद्धविज्ञानमध्ये चिदद्धा ॥ १४ ॥

सुखी दुःख्यहं ज्ञान्यथाज्ञानयुक्तः कर्त्रीत्यादिबुद्धेश्च मूलं चिदेव ।
तथा सर्वभावाश्च तत्सन्निधानाच्चिदानन्दपूर्णं यदेतत्समस्तम् ॥ १५ ॥

बहिस्सच्चिदानन्द एषोऽन्तरस्ति क्व वा नास्ति सम्पूर्णता तस्य नित्या ।
ततो बुद्धिचित्तादितन्त्रेषु चेष्टां न कुर्यादयस्कान्तवन्निर्विकारः ॥ १६ ॥

सुषुप्तौ स्वतस्सर्वभावाः प्रलीना यथैव स्वविज्ञानतस्सर्वशान्तौ ।
तदा स्वादनिर्वाच्यसौख्यं स्वनेव स्वसाक्षात्कृतिस्सा परैक्यं तदैक्यात् ॥ १७ ॥

यदोङ्कारजन्यास्समस्ताश्च वर्णा गिरस्तज्जपो नाम मौनं बुधानाम् ।
सदा चित्तनिक्षेपणं नैव भूयात्ततो मौनमश्रामृताब्धिर्धुरं स्यात् ॥ १८ ॥

घटस्थः प्रदीपो घटध्वंसनेन प्रकाशं यथाप्नोत्यसंकोचभावात् ।
यथा देहपाते चिदानन्दमूर्तिर्निरस्ताखिलोपाधिरद्दीप्तिमेति ॥ १९ ॥

किमद्वैतवादैश्च किं द्वैतवादैस्तथा द्वैतकाद्वैतवादैः फलं किम् ।
वृथावार्तयालं चिदानन्दलब्ध्यै सदाचार्यकारुण्यमेवाग्रगण्यम् ॥ २० ॥

परारूपभाक् द्वैतकाद्वैतनिष्ठो महानन्दरूपी विशिष्टाद्वयस्थः ।
चिदाकाशभावेऽखिलोपाधिशून्ये भवेच्छुद्धमद्वैतमेवं त्रिधा तत् ॥ २१ ॥

त्रिधाद्वैतवेत्ता त्रिमूर्तिं विहाय प्रयात्येव सायुज्यमव्यानपेक्षम् ।
कुतो दृक् क्व दृश्यं कुतो ज्ञानवेद्यं कुतोऽहं परस्सर्वशून्ये प्रकारे ॥ २२ ॥

न चाहं न वायो न चाद्वैतभावो न च द्वैतभावो न चाद्यन्तमध्याः ।
न सत्ता न चासत्त्व बोधो न निद्रा शिवानन्दभावे सदोदीयमाने ॥ २३ ॥

शिवानन्दमत्तो न जाने विरिंचं हरिं रुद्रमीशं सदेशं च नित्यम् ।
क देहः क चेतः क बुद्धिः क चाहं क वा प्राणवातः क सर्वेन्द्रियाणि ॥ २४ ॥

मनो दुष्टवाजी प्रधावन् समन्तात् प्रशान्त्याख्यकूपे विवेकात्पपात ।
तदानीमनिर्वाच्यसौख्यारमभारस्तमाक्रामति कास्य शक्तिः प्रयातुम् ॥ २५ ॥

क येडा क वा पिंगला सा सुषुम्ना क वायोर्निरोधः क वाधारषट्कम् ।
सदानन्दलब्धामृतास्वादमत्तो न देहं च जाने न मां नापि सौख्यम् ॥ २६ ॥

चिदानन्दसौख्यानुभूतिः कथं या स्वविद्याविशेषैरधन्योऽभिधाते ।
परस्त्रीरतिं प्राप्य सौख्यानि पण्डः कथं वेत्ति वक्तुं पटुर्वा परेषाम् ॥ २७ ॥

प्रबोधे शिवानन्दसान्द्रे सतीदं शरीरं प्रयात्वापतत्वादधातु ।
तथा बद्ध्यतां वद्ध्यतां वर्ध्यतां वा परैर्दूष्यतां भूष्यतां वात्मनः किम् ॥ २८ ॥

न चर्याक्रियायोगमार्गाश्च सत्याः शरीरं न तत्वानि लोकाश्च भोगाः ।
शिवानन्दबोधः परं सत्यमन्यन्न सत्यं न सत्यं न सत्यं न सत्यम् ॥ २९ ॥

हृदानन्दलाभेन तुष्टं यदीयं स किं ब्रह्मविष्ण्विन्द्रमुख्यान् प्रणौति ।
चिदानन्दलेशो हरिब्रह्ममुख्यः स धन्यस्स धन्यस्स धन्यस्स धन्यः ॥ ३० ॥

य आनन्दयोगेन चत्वारि रूपाण्यरूपाणि तद्वत्ततो रूपरूपम् ।
नवोत्तीर्य तत्त्वानि निष्ठां प्रविष्टस्स योगी स योगी स योगी स योगी ॥ ३१ ॥

सदानन्दचित्तं चिदाकाशमध्ये यथा सांबमूर्तिस्सभायां करोति ।
तथा हृत्प्रकाशे चिदानन्दलीलाविशेषेण देदीप्यते ज्ञानभाजाम् ॥ ३२ ॥

शिवानन्द आदौ ततश्चित्सुपूर्णो तदिच्छाक्रियाज्ञानरूपोऽथ जीवः ।
तिरोधिर्मलश्चेति पञ्चैव रूपं समस्तं शिवानन्दमूलं विभाति ॥ ३३ ॥

हृदा सर्वचिन्तां परित्यज्य जिह्वां प्रवेश्यानिशं तालुरन्ध्रे प्रयत्नात् ।
तदुद्भूतदिव्यामृतास्वादतृप्तस्तृषां च क्षुधान्याधितन्द्रीर्जहाति ॥ ३४ ॥

सुधापानमभ्यासयत्नैर्विनापि प्रभूयात् सदानन्दबोधानुभूत्या ।
किमन्यैस्तु चर्याक्रियायोगमार्गैश्चिदाकाररूपस्य चिन्तोज्झितस्य ॥ ३५ ॥

स पादादिमूर्धान्तमानन्दसान्द्रं सदा भावयन्प्राप्नुयात् सर्वसिद्धिम् ।
तदाहुः परैक्यं मनोन्मन्यवस्थां चिदाकाशभावं तदा जीवमुक्तिम् ॥ ३६ ॥

सदा सर्वभावेषु सक्तः स्वशक्त्या स्वयं सर्वभावेषु सक्तो निसर्गात् ।
तथा सर्वभावस्वरूपं प्रपञ्चे विमुक्तौ न किंचित्स्वकैवल्यमेकम् ॥ ३७ ॥

स्वतश्शून्यतापूर्णमेतत् समस्तं सदानन्दचिच्छक्ति यस्मिन् समेताः ।
विधिर्विष्णुरुद्रौ दिनेशो निशीशस्स्वकृत्यानि कुर्वन्ति यत्सन्निधाने ॥ ३८ ॥

पृथिव्याद्यमेतज्जडं तत्त्वजालं स्वयं तद्वियोगेऽपि योगेप्यशक्तः ।
शिवेच्छावशात् सर्वभावप्रवृत्तिः प्रपञ्चेपि मुक्तौ च जीवोऽस्वतन्त्रः ॥ ३९ ॥

शिवानन्दभावेन तिष्ठन्विमुक्तौ जपध्यानपूजा न कुर्यात्त्यजेन्न ।
स्वतस्सर्वकृत्यानि शान्ति प्रयान्ति क्षणार्धान्न पश्यत्यसौ यत्प्रपञ्चम् ॥ ४० ॥

प्रपञ्चस्थितौ नासज्जति ब्रह्मचिन्ता द्विभापातिदक्षो यथा तद्वदेषः ।
क्षणादिन्द्रियार्थे क्षणाद्वस्तुरूपे प्रधावन् प्रयात्येष काकाक्षिसाम्यम् ॥ ४१ ॥

चिदाद्यैस्समस्तैर्गुणैस्तत्स्वरूपः स्वभावेन मुक्ताखिलोपाधिजालः ।
यथेशस्तथात्मा विमुक्तौ स्वकृत्यं शिवस्यैव कृत्यं परं सत्यमेतत् ॥ ४२ ॥

शिवानन्यभावेन तिष्ठन्नजस्रं सुधामेत्यवस्थास्त्यजेज्जाग्रदाद्याः ।
तथा वज्रकायत्वमाप्नोत्ययत्नात् प्रयात्येष सिद्धीस्तथैवाणिमाद्याः ॥ ४३ ॥

शिवानन्यतां सद्गुरोः प्राप्य धन्यो न वांछामिहामुत्रभोगेषु कुर्यात् ।
तथा योगसिद्धौ स्वदेहस्थितौ वा स्वयं सर्वसंगान् परित्यज्य तिष्ठेत् ॥ ४४ ॥

निधिप्राप्तितस्सर्वसाम्राज्यलाभान्निजेष्टागमाद्या मनःप्रीतिरस्ति ।
अमुष्यानुभूत्या सुखस्यामृताप्तिस्तथा सिद्धयो नित्यतृप्तिश्च भूयात् ॥ ४५ ॥

मुदा सच्चिदानन्दसंज्ञं भुजंगप्रयातं पठेद्यस्तु वेदान्तसारम् ।
स दीर्घायुरारोग्यमैश्वर्यमेति ...................... ॥

इति सच्चिदानन्दभुजंगं संपूर्णम् ॥



॥ श्रीरस्तु ॥

हरिः ओम्

# ॥ अखण्डैकरसवाक्यार्थः ॥



वाक्यार्थो नामाखण्डैकरसः । तद्विषयि अर्थविज्ञानमखण्डैकरसम् । ननु तर्कमीमांसाभ्यां वाक्यस्य संसर्गविशिष्टार्थत्वाङ्गीकारात् कथमखण्डैकरसत्वमर्थ इति चेन्न । तयोस्साकल्येन श्रुत्यर्थविचारजन्यज्ञानाभावात् । तथाहि — 'नात्र काचन भिदा' इत्यादिवाक्येन भेदमात्रस्य निषिद्धत्वात् पारमार्थिकव्यावहारिकप्रातिभासिकभेदत्रयनिषेध एव श्रुतेरर्थः ॥

ननु 'न कदाचिदनीदृशं जगत्' इत्यादिवाक्येन प्रपञ्चमात्रस्य प्रवाहरूपेण सत्यत्वात् कथं भेदमात्रस्य निषिद्धत्वमिति चेन्न । 'अतोऽन्यदार्तम्' इत्यादिश्रुत्या आत्मनः सकाशादन्यस्य सर्वस्य नश्वरत्वात्कथं प्रवाहरूपेण सत्यत्वम् ? किञ्च संसर्गाद्यङ्गीकारे दोष उच्यते । 'गामानय शुक्लां दण्डेन' इत्यादिवाक्ये गोकर्मकानयनक्रियायाः दण्डकरणदेवदत्तकर्तृसम्बन्ध एव वाक्यार्थः प्रतीयते । तद्वदत्रापि वाक्यस्य जीवपरयोस्संसर्ग एव वाक्यार्थः इत्यङ्गीकारे राज्ञः पुरुषः इत्यादिवत् स्वस्वामिभावसम्बन्ध एव वाक्यार्थः स्यात् । एवमङ्गीकारे 'अहं ब्रह्मास्मी'ति भावनयाऽनयोस्संसर्गवचनात् जीवस्य ब्रह्मसम्बन्धित्वं स्यात् । 'नीलं महत् सुगन्धि उत्पलम्' इति वाक्ये नीलत्वमहत्त्वसुगन्धित्ववैशिष्ट्यमुत्पले यथा प्रतीयते तथा अत्रापि वाक्यस्यापि विशिष्टार्थत्वाङ्गीकारे 'ब्रह्माहमस्मी'त्यत्र जीवस्य ब्रह्मान्तःपातित्वं स्यात् । अतः किमिति चेत् विद्वद्भिर्निरस्तत्वात् । विदुषामनुभवमेव दर्शयति —

यदहं त्रिपुरातीतं साक्ष्यवस्थात्रयस्य च ।
तदेव जगतस्साक्षि सच्चिदानन्दलक्षणम् ॥

शरीरत्रयविलक्षणं अवस्थात्रयसाक्षि सच्चिदानन्दरूपं यत् प्रत्यक्चैतन्यं अहन्तास्पदं तस्याध्यस्तदेहादिसम्बन्धाभावे इदन्तास्पदाध्यस्तप्रपञ्चे सुतरां सम्बन्धाभावात् प्रपञ्चमात्रविलक्षणं साक्षि सत्यज्ञानानन्दात्मकं यत् तद्ब्रह्म तदेवाहमस्मीति तादात्म्यमेवेति विदुषामनुभव इति राद्धान्तः । तत्र किं प्रमाणमिति चेत् — श्रुतिरेवेति ब्रूमः । "अभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति" । "ब्रह्म वेद

ब्रह्मैव भवति"। "ब्रह्मविदाप्नोति परम्"। "तरति शोकमात्मवित्"। "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"॥

अभयं सर्वसंसारभयरहितं प्रतिष्ठां सर्वाधारभूतं विन्दते। तद्ब्रह्माहमस्मीति तादात्म्यरूपेण जानीते। अथ सोऽभयं गतो भवति। ब्रह्मरूपमात्रेणावतिष्ठते इत्यर्थः। ब्रह्म वेद ब्रह्म बुबुधे स ब्रह्मैव भवति। ब्रह्मवित्परं परमात्मानमाप्नोति। अधिष्ठानं सत्यज्ञानानन्दस्वरूपं ब्रह्म प्राप्नोतीत्यर्थः। आत्मानं परमात्मानमहमेवेति यो वेत्ति, सः शोकजननमरणप्रवाहरूपदुःखादीन् तरति, अतिक्रामतीत्यर्थः। तस्मिन्परावरे, जीवापेक्षया पराः ब्रह्मविष्णुरुद्रादयः यस्मात्परमात्मनस्सकाशात् अवराः निकृष्टाः गुणादिसंयुक्तत्वात्। तस्मिन् दृष्टे सति, तद्ब्रह्माहमस्मीति तादात्म्यरूपेण सम्यक् साक्षात्कृते सति, भिद्यते हृदयग्रन्थिः, हृदयस्य ग्रन्थिः हृदयग्रन्थिः चिज्जडयोरन्योन्यतादात्म्याध्यासरूपः भिद्यते भेदं प्राप्नोति; अन्योन्यविवेको भवतीत्यर्थः। सर्वसंशयाः बन्धपरिच्छिन्नत्वकिञ्चिज्ज्ञत्वादिगुणविशिष्टस्य जीवस्य मम नित्यमुक्तब्रह्मणा साकं कथं तादात्म्यं घटत इत्यादिसंशयाः छिद्यन्ते छिन्ना भवन्ति। अस्य साक्षात्कारवतः कर्माणि आगामीनि सञ्चितानि वासनानि च क्षीयन्ते क्षीणा भवन्ति। एवमनङ्गीकारे बाधकमस्ति। उदरमन्तरं कुरुते। अथ तस्य भयं भवति। उद् अपि, अरमल्पं स्वल्पमपि अन्तरं भेदं अतादात्म्यं कुरुते मन्यते, अथ तस्य अतादात्म्यज्ञानवतः पुरुषस्य भयं भवति। पूर्ववत्संसारेष्वनुवर्ती भवतीत्यादिश्रुत्या च ब्रह्मणि संसर्गादेर्निषिद्धत्वात् वैशेषिकादीनां एतादृशश्रुत्यर्थरहस्यविचारजन्यज्ञानाभावात्॥

ननु चास्य वाक्यस्य संसर्गवैशिष्ट्यगोचरत्वानङ्गीकारे निरसंबन्धे ब्रह्मणि कथं बोध्यबोधकभावसम्बन्ध इति चेन्न। सम्बन्धत्रयस्य विद्यमानत्वात्। सम्बन्धत्रयं नाम, सामानाधिकरण्यविशेषणविशेष्यलक्ष्यलक्षणभावाः। सामानाधिकरण्यं नाम — भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्॥

नन्विदं वृश्चिकभीत्या पलायमानस्य आशीविषमुखनिपातमनुसरति। कथम्? तत्त्वंपदयोस्सामानाधिकरण्याङ्गीकारे नीलोत्पलमिति वाक्ये भिन्नप्रवृत्तिनिमित्तयोर्नीलोत्पलपदयोरेकस्मिन्नर्थे जलजातवस्तुनीति लक्षणेन च, समानं अधिकरणं ययोस्ते समानाधिकरणे; समानाधिकरणयोर्भावः सामानाधिकरण्यमित्येवं व्युत्पत्त्या च, नीलं च तत् उत्पलं च नीलोत्पलमिति समासेन च यथा संसर्ग एव प्रतीयते, तथा तत्त्वमसिवाक्येऽपि। तथाहि — भिन्नप्रवृत्तिनिमित्तयोस्तत्त्वंपदयोरेकस्मिन्नर्थे मूलप्रकृत्या शबलितचैतन्ये वृत्तिस्सामानाधिकरण्यमिति लक्षणेन च, समानमधिकरणं प्रकृतिविशिष्टचैतन्या-

र्थयोस्तत्त्वंपदयोस्ते समानाधिकरणे, समानाधिकरणयोर्भावस्सामानाधिकरण्यं स्वरूपमित्यनयव्युत्पत्त्या च, जीवश्च ईश्वरश्च जीवेश्वराविति समासेन च संसर्ग एव स्यात् ॥

एवं पदार्थयोर्विशेषणविशेष्यभावसम्बन्धाङ्गीकारे नीलोत्पलमिति वाक्ये नीलमित्यत्र श्वेतादिव्यावृत्तिः प्रतीयते । उत्पलमित्यत्र पटादिव्यावृत्तिः प्रतीयते । यथा नीलमित्युक्ते, घटो वा पटो वेति संशयो जायते । तद्व्यावर्तकत्वेन उत्पलपदस्य प्रवृत्तिः । उत्पलमित्युक्ते श्वेतो वा रक्तो वेति संशयो जायते । तद्व्यावर्तकत्वेन नीलपदस्य प्रवृत्तिः । तथा तत्त्वमसिवाक्येऽपि जीवेश्वरयोर्विशेषणविशेष्यत्वाङ्गीकारेऽपरोक्षस्वरूपकिञ्चिज्ज्ञत्वादिगुणविशिष्टत्वंपदार्थः जीवः परोक्षस्वरूपसर्वज्ञत्वादिगुणविशिष्टतत्पदार्थादीश्वरात् भिन्नो भवतीति वा वैपरीत्येन वाङ्गीकारे विशिष्टत्वमेव स्यादिति चेदुच्यते । एवंविधदूषणादि वाच्यार्थे संभवति, न तु लक्ष्ये । 'सोऽयं देवदत्तः' इत्यत्र तच्छब्दार्थतत्कालविशिष्टदेवदत्तस्य इदंशब्दार्थैतत्कालविशिष्टदेवदत्तस्य च एकस्मिन् पिण्डे तात्पर्येण सम्बन्धसामानाधिकरण्यम् । एवं तत्त्वमसिवाक्येऽपि परोक्षस्वरूपसर्वज्ञत्वादिविशिष्टचैतन्यस्य तत्पदार्थस्य अपरोक्षस्वरूपकिञ्चिज्ज्ञत्वादिविशिष्टचैतन्यस्य त्वंपदार्थस्य च एकस्मिन्नर्थे तदनुगतशुद्धचैतन्ये तात्पर्येण सम्बन्धसामानाधिकरण्यम् ॥

एवं सामानाधिकरण्यसम्बन्धं प्रतिपाद्य विशेषणविशेष्यभावसम्बन्धो निरूप्यते—तथाऽत्रैव वाक्ये तच्छब्दार्थे तत्कालविशिष्टदेवदत्तस्य इदंशब्दार्थे एतत्कालविशिष्टदेवदत्तस्य चान्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावसम्बन्धः । सोऽयमिति वाक्ये विशेषणरूपे स इति पदे विद्यमानं तद्देशत्वादिकं विशेष्यरूपे अयं इति पदे विद्यमानं एतद्देशत्वादिकं व्यावर्तयति, तथाऽत्रापि वाक्ये तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य च त्वंपदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावः । तत्त्वमसीत्यत्र विशेषणरूपे तत्पदे विद्यमानं सर्वज्ञत्वादिकं विशेष्यरूपे त्वंपदे विद्यमानं किञ्चिज्ज्ञत्वादिकं व्यावर्तयति । त्वं तदसीत्यत्र विशेषणरूपत्वंपदे विद्यमानं किञ्चिज्ज्ञत्वादिकं विशेष्यरूपतत्पदे विद्यमानं सर्वज्ञत्वादिकं व्यावर्तयति ।

उक्तार्थे सम्मतिमाह—

अहमर्थो विशेष्योऽत्र तत्प्राधान्यप्रसिद्धितः ।
तत्प्राधान्यप्रसिद्ध्यर्थं ब्रह्मार्थस्तु विशेषणम् ॥

सचिदर्थो विशेष्योऽत्र तत्प्राधान्यप्रसिद्धितः ।
तत्प्राधान्यप्रसिद्ध्यर्थं प्रत्यगर्थो विशेषणम् ॥

एवं विशेषणविशेष्यभावसम्बन्धं निरूप्य लक्ष्यलक्षणभावसम्बन्धो निरूप्यते— यथा तच्छब्देदंशब्दयोर्वा विरुद्धतत्कालैतत्कालविशिष्टत्वादिपरित्यागेनाविरुद्धेन देवदत्तेन सह लक्ष्यलक्षणभावः, तथात्र तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावसंबन्ध इति ॥

इति अखण्डैकरसवाक्यार्थप्रकरणं समाप्तम् ॥
ॐ तत् सत् ॥

---

श्रीगुरुब्रह्मणे नमः ॥

## ॥ तत्त्वानुभवप्रकरणम् ॥

प्रत्यगात्मा परं ज्योतिः परमानन्दचिद्घनः ।
अहं नाहं न देहादि शिवोऽनन्तोऽहमद्वयः ॥ १ ॥

न स्त्री न षण्ढो न पुमान् जडो नाहं मृषात्मकः ।
व्यक्तं नाहं न चाव्यक्तं तदाधारोऽहमद्वयः ॥ २ ॥

सर्वोपाधिविनिर्मुक्तः सजातीयादिवर्जितः ।
अहमेव परं ब्रह्म ब्रह्मैवाहमतोऽद्वयः ॥ ३ ॥

सर्वाधारस्सर्वगतः सर्वज्ञस्सर्वतो विभुः ।
सर्वोऽहमेव सर्वेशो मत्तो नान्योऽस्ति किंचन ॥ ४ ॥

एकमेवाद्वितीयोऽहं द्वैतवद्भामि मायया ।
तन्निवृत्तावहं स्वस्थोऽविद्यया द्वैतकल्पना ॥ ५ ॥

मां विना जगदन्यत्र सच्चिदानन्दलक्षणम् ।
असज्जडादिरूपस्य भानाभाने कुतो द्वयम् ॥ ६ ॥

सतो मम कुतोऽसत्त्वं चितो जाड्यं कुतो मम ।
सुखस्य मे कुतो दुःखमन्तोऽनन्तस्य मे कुतः ॥ ७ ॥

मायाविद्याविहीनस्य सर्वज्ञत्वादि मे कुतः ।
एकस्यैवाद्वितीयस्य सजातीयादि मे कुतः ॥ ८ ॥

विकल्पितैः परिच्छेदो देशकालादिभिर्मम ।
परिपूर्णस्य नित्यस्य निर्द्वैतस्य कथं भवेत् ॥ ९ ॥

कुत्राधारः प्रतिष्ठा वा कुत्र वा वाहनादिकम् ।
वेदिकादि कथं स्थानमनाधारस्य मे कुतः ॥ १० ॥

किं पुरं किं वनं वृक्षमूलं देवालयः कुतः ।
अगादिः को गुहादिश्चाखण्डस्यास्य हि मे कुतः ॥ ११ ॥

पुरस्थितः कुतो वान्यः बहिरन्तः कुतो मम ।
ऊर्ध्वं चाध कुतो मध्यं परिपूर्णस्य मे कुतः ॥ १२ ॥

आतपः कः कुतश्शीतं ज्योत्स्ना वा मे कुतस्तमः ।
पंकः कः पृथिवी कोग्निश्चिदाकारस्य मे भवेत् ॥ १३ ॥

कायः को माल्यवस्त्रादि का भूषा किं विलेपनम् ।
अलंकारः कथं शोभा निराकारस्य मे कुतः ॥ १४ ॥

को लाभः संशयः को मे को विचारः कुतो भयम् ।
परितापः कुतो दुःखमानन्दाब्धेः कथं भवेत् ॥ १५ ॥

आधिः को मे कुतो व्याधिर्विनाशः को मदः कुतः ।
कोऽभिमानः कुतोऽसूया को विहीनस्सुखात्मनः ॥ १६ ॥

कोपः को मे कुतस्तापः कुत्रेच्छा को विभोर्मदः ।
विकारः कोऽविकारो वा निर्विकल्पस्य मे कुतः ॥ १७ ॥

किं मे रूपं कुतो नाम बाल्यादिर्वा मृषात्मकः ।
वर्णः को नीलरक्तादिरदेहस्यास्य मे कुतः ॥ १८ ॥

ज्वरः को मे कुतः पथ्यो भेषजं किं कुतो भिषक् ।
नित्योपवासपथ्यादिर्निरपेक्षस्याधिजः ॥ १९ ॥

किं शासनं कुतो दैन्यं का बाधा रोदनं कुतः ।
वनिः कुतः कुतो मृत्युरनाद्यस्यामृतस्य मे ॥ २० ॥

वेदः कुतः कुतश्शास्त्रं जातकर्मादिकं कुतः ।
धर्मार्थादिः कुतस्सर्वः चेत्यजो मे कुतश्चितः ॥ २१ ॥

शिखा वा चोपवीतं मे का संध्या किं प्रदक्षिणम् ।
नमस्कारः कथं स्तोत्रममूर्तस्य विभोः कुतः ॥ २२ ॥

कार्यकारणहीनस्य नित्यबोधसुखात्मनः ।
निरुपाधेर्मृषोपाधेर्ब्रह्मणो मे कथं भवेत् ॥ २३ ॥

आत्मा लभ्यः स्वयं तस्मादन्यदेहात्मवेदिनः ।
ह्यस्य चात्मा कुतोऽलभ्यस्त्वयमन्यो भवेत्कथम् ॥ २४ ॥

भानोः सुगन्धदुर्गन्धौ भास्यजौ भासके कथम् ।
पश्यतः कथमात्मानं पुण्यपापे तथाक्षजे ॥ २५ ॥

लौकिको वैदिकः को वा व्यवहारोऽथ तान्त्रिकः ।
साक्ष्यधर्मोऽखिलोऽयं हि साक्षिणो मे कथं भवेत् ॥ २६ ॥

गतिवद्रज्जुसर्पस्य स्थाणुचोरजभीतिवत् ।
अज्ञस्य सत्यवत्सर्वं जगत् ज्ञस्यैव भाति मे ॥ २७ ॥

कस्सम्बन्धश्शुक्तिकादेरध्यस्तरजतादिना ।
असता जगता को मे सम्बन्धः स्यात्सतस्तथा ॥ २८ ॥

शुक्तिं विना महासिन्धौ पतन्तो वर्षबिन्दवः ।
अमुक्ताफलतां यान्ति यथा तत्पतनं वृथा ॥ २९ ॥

वर्तमाना महाशास्त्रे ह्यात्मज्ञानं विना जनाः ।
तद्वन्मुक्तिं न यान्त्येव तस्मिंस्तद्वर्तनं वृथा ॥ ३० ॥

जलं विना यथा मत्स्यो न सुखं याति सर्वतः ।
आत्मज्ञानं विना मोक्षो नोपायैरखिलैस्तथा ॥ ३१ ॥

माता मानं च मेयं च त्रिपुटी द्वैतरूपिणी ।
निराकारे परानन्दे मृषा भाति खनीलवत् ॥ ३२ ॥

अखण्डसच्चिदानन्दस्वरूपे स्वप्रभे शिवे ।
को जीवः किं जगद्वेशो ब्रह्मणि स्यात् कुतोऽद्वये ॥ ३३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीमन्नारायणेन्द्रयोगिशिष्य
श्रीमद्गोविन्देन्द्रयतिवर्यविरचितं
तत्वानुभवप्रकरणं संपूर्णम् ॥
श्रीगुरुब्रह्मार्पणमस्तु ॥

---

॥ श्रीगणेशाय नमः ॥ ॥ श्रीसरस्वत्यै नमः ॥

# ॥ वेदान्तसंज्ञाप्रकरणम् ॥

श्रीमद्गुरोः पादयुगं नत्वा तस्य प्रसादतः ।
वेदान्तसंज्ञाः प्रत्येकं निरूप्यन्ते यथामति ॥

'अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते' इति वृद्धवचनम् । अध्यारोपो नाम वस्तुन्यवस्त्वारोपः । वस्तु सच्चिदानन्दात्मकं ब्रह्म, अवस्तु अज्ञानादितज्जन्यसकलजड-समुदायस्वरूपो महाप्रपंचः । प्रपंचद्वयं, अज्ञानद्वयं, सूक्ष्मशरीरद्वयं, स्थूलशरीरद्वयं, शक्तिद्वयं, निश्चयसद्वयं, संशयद्वयं, असंभावनाद्वयं, विपरीतभावनाद्वयं, प्रज्ञाद्वयं, समाधिद्वयं, ब्रह्मत्रयं, जीवत्रयं, शरीरत्रयं, अवस्थात्रयं, करणत्रयं, कर्मत्रयं, पुण्य-कर्मत्रयं, पापकर्मत्रयं, मिश्रकर्मत्रयं, प्रारब्धत्रयं, प्रतिबन्धत्रयं, कारणत्रयं, संबन्धत्रयं, तापत्रयं, अधिभूतादित्रयं, कारणत्रयं, गुणत्रयं, कालत्रयं, मूर्तित्रयं, मात्रादित्रयं, प्रपंचत्रयं, लोकत्रयं, ज्ञानप्रतिबन्धकत्रयं, वासनात्रयं, ज्ञानादित्रयं, हेत्वादित्रयं, प्राणायामत्रयं, आप्त्यादित्रयं, तादात्म्यत्रयं, ईषणात्रयं, सुषुप्त्यादित्रयं, वर्तमान-प्रतिबन्धचतुष्टयं, पुरुषार्थचतुष्टयं, शब्दप्रवृत्तिनिमित्तचतुष्टयं, वर्णचतुष्टयं, आश्रम-चतुष्टयं, साधनचतुष्टयं, अनुबन्धचतुष्टयं, अन्तःकरणचतुष्टयं, संकल्पादिचतुष्टयं, वेदचतुष्टयं, प्रमाणचतुष्टयं, विघ्नचतुष्टयं, मैत्र्यादिचतुष्टयं, भूतग्रामचतुष्टयं, ब्रह्मविदादि-चतुष्टयं, कोशपंचकं, ज्ञानेन्द्रियपंचकं, शब्दादिपंचकं, कर्मेन्द्रियपंचकं, वचनादि-पंचकं, प्राणादिपंचकं, उपवायुपंचकं, कर्मपंचकं, सूक्ष्मभूतपंचकं, स्थूलभूतपंचकं,

यमपंचकं, नियमपंचकं, भूमिकापंचकं, प्रलयपंचकं, भ्रमपंचकं, निवर्तकदृष्टान्तपंचकं, दृष्टान्तपंचकं, ख्यातिपंचकं, समाधिषट्कं, अरिषट्कं,? अरिषड्वर्गः, षड्भावविकाराः, षट्कौशिकाः, षडूर्मयः, षड्विधलिङ्गानि, षडवस्थाः, षट् शास्त्राणि, षट् सूत्राणि, षडङ्गानि, षट्कर्माणि, षट् प्रमाणानि, शमादिषट्कं, सप्तावस्थाः, सप्त चैतन्यानि, भूरादिसप्तकं, अतलादिसप्तकं, सप्त भूमिकाः, पुर्यष्टकं, प्रकृत्यष्टकं, अष्टांगानि, अष्टाङ्गं, नवविधसंसारः, देवतापंचदशकं, अरण्यादिपंचदशकं, रागादिषोडशकं, षोडशकं लिङ्गं, सप्तदशकं लिङ्गं, नवदशकं लिङ्गं, चतुर्विंशतितत्त्वानि, षट्त्रिंशत् तत्त्वानि, षण्णवतितत्त्वानि, परमहंससन्न्यासद्वयं, विद्वत्सन्न्यासद्वयं, निग्रहद्वयं, अहंकारद्वयं, आनन्दत्रयं, कर्मत्रयं, जाग्रत्त्रयं, स्वप्नत्रयं, सुषुप्तित्रयं, आत्मत्रयं, सन्न्यासचतुष्टयं, भूमिकाचतुष्टयं, युक्तिचतुष्टयं, अजिह्वादिषट्कं, मौनादिसप्तकं, नाडिकादशकं, नाडीदेवतादशकं, अष्टान्तरंगमदाः, षट् बहिर्मदाः, अष्टमूर्तिमदाः, अष्ट पाशाः, सप्त धातवः, सप्त व्यसनानि, षट् भ्रमाः, पंच क्लेशाः, आध्यात्मिकतापद्वयं, स्वर्गलोकनामत्रयं, पंचसप्ततिगुणाः, रूपषट्कं, स्पर्शचतुष्टयं, शब्दद्वयं, रसषट्कं, गन्धद्वयं, नव वर्णाः, ऐश्वर्यादिषट्कं, उत्पत्त्यादिषट्कं, नादादित्रयं, इत्येताः संज्ञाः शास्त्रैरुदाहृताः स्थिताः । ताः प्रत्येकं निरूप्यन्ते ॥

सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि अहमज्ञो मोहितोऽहमित्यनुभवगम्याद्यावरणेन व्यपदेशरूपमज्ञानं मूलकारणत्वात्सत्त्वरजस्तमोगुणानां साम्यावस्थारूपत्वाच्च मूलप्रकृतिः प्रलयदशायामव्यक्तं अव्याकृतं महासुषुप्तिः कूटवन्निर्विकारेण तिष्ठतीति कूटस्थं, ज्ञानं विना न क्षरतीत्यक्षरमिति व्यपदिश्यते। स्थूलसूक्ष्मकारणप्रपञ्चानां समष्टिः महाप्रपञ्चः । बाह्यप्रपञ्चः आन्तरप्रपञ्च इति प्रपञ्चद्वयम् । पृथिव्यादिपञ्चभूततज्जन्यब्रह्माण्डतदन्तर्भूतोपर्युपरिविद्यमानभूर्भुवस्सुवर्महर्जनस्तपस्सत्यनामकाऽधोऽधोविद्यमानातलवितलसुतलतलातलमहातलरसातलपातालनामकचतुर्दशभुवनतन्निष्ठजरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधभूतग्रामसमुदायः यथायोग्यं विविधनामरूपगुणधर्मशास्त्राश्रयः बाह्यप्रपञ्चः । संकल्पाद्यन्तःकरणवृत्त्यवस्थासमतद्व्यापारतदभिमानिविश्वतैजसप्राज्ञाः समाधिमूर्छागरद्वयं कामक्रोधाद्यरिषड्वर्गः साधनचतुष्टयं अन्नमयादिपञ्चकोशशरीरादित्रयं जन्मास्तीत्यादिषड्भावविकारत्वङ्मांसादिषट्कौशिका अशनापिपासादिषडूर्मिश्रोत्रादिज्ञानेन्द्रियपञ्चकं, वागादिकर्मेन्द्रियपञ्चकं प्राणादिवायुपञ्चकं मनआद्यन्तःकरणचतुष्टयं सत्त्वादिगुणत्रयं सुखदुःखज्ञानाज्ञानरागद्वेषभेदभयादिचतुष्टयं यमाद्यष्टाङ्गं प्रत्यक्षादिप्रमाणचतुष्टयं रोगारोग्यादिसमुदायः यथायोग्यं विविधनामरूपगुणधर्मशास्त्राश्रयः आन्तरप्रपञ्च इति विवेकः ॥

समष्ट्यज्ञानं व्यष्ट्यज्ञानमित्यज्ञानद्वयम् । अज्ञानस्य समष्ट्यभिप्रायेणैकत्वव्यपदेशः । व्यष्ट्यभिप्रायेण नानात्वव्यपदेशः । समष्ट्यज्ञानमीश्वरोपाधिः उत्कृष्टोपाधितया विशुद्धसत्वप्रधानस्वरूपा माया अखिलकारणत्वात्कारणशरीरं आनन्दप्रचुरत्वात्कोशवदात्मनः आच्छादकत्वाच्च आनन्दमयकोशः सर्वोपरमत्वात्सुषुप्तिः । अत एव समष्टिस्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते । व्यष्ट्यज्ञानमपि प्राज्ञोपाधिः निकृष्टोपाधितया मलिनसत्वस्वरूपा अविद्या अहंकारादिकारणत्वात्कारणशरीरं आनन्दप्रचुरत्वात्कोशवदात्मन आच्छादकत्वादानन्दमयकोशः सर्वोपरमत्वात्सुषुप्तिः । अत एव व्यष्टिस्थूलसूक्ष्मशरीरलयस्थानमिति चोच्यते ॥

समष्टिसूक्ष्मशरीरं व्यष्टिसूक्ष्मशरीरमिति सूक्ष्मशरीरद्वयम् । अखिलसूक्ष्मशरीरं एकबुद्धिविषयत्वात् स्थूलप्रपंचापेक्षया सूक्ष्मत्वाच्च समष्टिसूक्ष्मशरीरं, हिरण्यगर्भोपाधिः, विज्ञानमयादिकोशत्रयं, जाग्रद्वासनामयत्वात्स्वप्नः । अत एव समष्टिस्थूलप्रपंचलयस्थानमिति चोच्यते । अखिलसूक्ष्मशरीरं अनेकबुद्धिविषयत्वात्स्थूलप्रपंचापेक्षया सूक्ष्मत्वाच्च व्यष्टिसूक्ष्मशरीरं, तैजसोपाधिः, विज्ञानमयादिकोशत्रयं, जाग्रद्वासनामयत्वात्स्वप्नः । अत एव व्यष्टिस्थूलप्रपंचलयस्थानमिति चोच्यते । समष्टिस्थूलशरीरं व्यष्टिस्थूलशरीरमिति स्थूलशरीरद्वयम् । जरायुजाण्डजस्वेदजोद्भिज्जाख्यं चतुर्विधं सकलं स्थूलशरीरं, वनवज्जलाशयवद्वा एकबुद्धिविषयत्वात्सूक्ष्मशरीरापेक्षया समष्टिस्थूलशरीरं, विराडुपाधिः, अन्नविकारत्वात्कोशवदात्मनः आच्छादकत्वाच्चान्नमयकोशः, स्थूलभोगायतनत्वाज्जाग्रदिति चोच्यते । पूर्वोक्तचतुर्विधस्थूलशरीरं सकलं वृक्षवज्जलवद्वा अनेकबुद्धिविषयत्वात्सूक्ष्मशरीरापेक्षया स्थूलत्वाच्च व्यष्टिस्थूलशरीरं विश्वोपाधिः आत्मनः कोशवदाच्छादकत्वादन्नविकारत्वाद्धेतोरेव अन्नमयः कोशः स्थूलभोगायतनत्वाज्जाग्रदित्युच्यते ॥

आवरणशक्तिः विक्षेपशक्तिरिति शक्तिद्वयम् । अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोर्भेदं वा स्वात्मानलोकनित्यबुद्धिं अखण्डसच्चिदानन्दस्वरूपं वा आवृणोतीति आवरणशक्तिः । विविधस्वरूपेण भासनं विक्षेपशक्तिः । अनर्थनिवृत्तिः आनन्दावाप्तिश्चेति निःश्रेयसद्वयम् ॥

प्रमाणगतसंशयः प्रमेयगतसंशयश्चेति संशयद्वयम् । तथाहि–श्रुतिभिः किं बोध्यते उत सिद्धं ब्रह्म प्रतिपाद्यते इत्येवंरूपा चित्तवृत्तिः प्रमाणगतसंशयः । ब्रह्म जगत्कारणम्, उत प्रधानादिकमित्येवंरूपा चित्तवृत्तिः प्रमेयगतसंशयः । प्रमाणगता असंभावना प्रमेयगता असंभावना इत्यसंभावनाद्वयम् । प्रमाणं सिद्धार्थविज्ञापन-

प्रमाणान्तरगम्यत्वेन श्रुतिः सिद्धब्रह्मप्रतिपादिका कथं भवेत्? फलाभावान्न भवत्येवेति निश्चयात्मिका चित्तवृत्तिः प्रमाणगता असंभावना । ब्रह्मणः जगद्विलक्षणत्वेन क्षितत्वा-ज्जगत्कारणत्वं कथं संभवति? न संभवत्येवेति निश्चयात्मिका चित्तवृत्तिः प्रमेयगता असंभावना । प्रमाणगतविपरीतभावना, प्रमेयगतविपरीतभावना चेति विपरीतभावना-द्वयम् । ब्रह्मणः सिद्धत्वेन श्रुतीनां तत्प्रतिपादकत्वे निष्फलत्वप्रसंगाच्छ्रुतयः कर्मपरा एवेति निश्चयः प्रमाणगतविपरीतभावना । तन्तुपटयोः कार्यकारणयोः सारूप्यं दृश्यते । अतः जगद्ब्रह्मणोः सारूप्याभावाज्जगत्कारणं प्रधानादिकमेवेति निश्चयः प्रमेयगतविपरीत-भावना ॥

एवमान्तरे; तथाहि — जगदन्तःपातिनोऽपि जगद्विलक्षणब्रह्मत्वमस्ति न वेति प्रत्यगात्मविषयकसंशयः । कर्तृत्वाद्यनेकधर्मविशिष्टस्य मम अकर्तृब्रह्मस्वरूपत्वं कथं भवेत्? न भवत्येवेति निश्चयात्मिका चित्तवृत्तिः प्रत्यगात्मविषयकाऽसंभावना । यद्यकर्ताऽहं तर्हि शास्त्रैर्मयि कथं त्वया कर्म कर्तव्यं इति कर्मोपदेशः? अतः कर्तैवेति निश्चयात्मिका चित्तवृत्तिः प्रत्यगात्मविषयिणी विपरीतभावना । स्थितप्रज्ञा अस्थित-प्रज्ञेति प्रज्ञाद्वयं । संप्रज्ञातसमाधिः असंप्रज्ञातसमाधिश्चेति समाधिद्वयम् ॥

एकमेवाद्वितीयं ब्रह्म समष्टिस्थूलसूक्ष्मकारणशरीरोपाधिकतया विराट् हिरण्यगर्भ ईश्वर इति चोच्यते । एतदेव ब्रह्मत्रयम् । ब्रह्म ईश्वरः साक्षी परमात्मा कूटस्थः अक्षरं जगदधिष्ठानं जगन्निषेधावधिभूतमिति च व्यवह्रियते । बृहत्वाद्बृंह-णत्वाद्वा ब्रह्म । बृहत्त्वं व्यापकत्वं, बृंहणत्वं जगद्वृद्ध्यादिहेतुत्वमिति विवेकः ॥

समष्टिस्थूलशरीरोपाधिकचैतन्य, विविधं राजमानत्वाद्विराट्, विश्वनरेष्वहं-मित्यभिमानित्वाद्वैश्वानरः, विशेषेण भासमानत्वाद्वैराज इति च व्यपदिश्यते । समष्टिसूक्ष्मशरीरोपाधिकचैतन्यं ज्ञानशक्तिमत्वाद्धिरण्यगर्भः, मणिसूत्रवत्समस्तप्रपंचानु-स्यूतत्वात्सूत्रात्मा, क्रियाशक्तिमत्वात्प्राण इति च व्यपदिश्यते । समष्ट्यज्ञानोपाधिक-चैतन्यं समस्तप्राणिनियामकत्वादीश्वरः, समस्तप्राणिहृदयनिष्ठत्वे सति समस्तप्राणिकर्म-प्रेरकत्वादन्तर्यामी, नामरूपरहितत्वादव्याकृतः, सकलाज्ञानतत्कार्यावभासकत्वाज्जग-त्कारणं, केनापि प्रमाणेन न व्यज्यत इति अव्यक्तमिति च व्यपदिश्यते ॥

एक एव प्रत्यगात्मा व्यष्टिस्थूलसूक्ष्मकारणशरीरोपाधिकत्वेन विश्वः तैजसः प्राज्ञ इति च व्यपदिश्यते । एतदेव जीवत्रयमिति व्यवहारः, प्रत्यगात्मा, शरीर-त्रयाधिष्ठानं जीवसाक्षी, स्वाध्यस्तान्यपदार्थान्साक्षाद्वृत्तिव्यवधानं विना अपरोक्षेण ईक्षते

प्रकाशयतीति साक्षीत्यर्थः । कूटस्थः, न क्षरतीत्यक्षरः, चित्, चैतन्यं चितिरिति पर्यायः, प्रातिलोम्येनाञ्चतीति प्रत्यक् । तथाहि — प्रातिलोम्येनानृतजडदुःखात्मकाहंकारादिभ्यो विलक्षणत्वेन सच्चिदानन्दात्मकतया अञ्चति प्रकाशत इति प्रत्यक् । तथा च अहंकारो नात्मा, देहो नात्मा, इन्द्रियाण्यनात्मानः, इत्येवं निष्कृष्टाहंकारादिचैतन्यं प्रत्यगित्यर्थः । शरीरद्वयोपादानव्यष्ट्यज्ञानकल्पनाधिष्ठानत्वात् शरीरत्रयाधिष्ठानं, कूटवन्निर्विकारेण तिष्ठतीति कूटस्थः इति विवेकः ॥

व्यष्टिस्थूलशरीरोपाधिक आत्मा स्थूलसूक्ष्मकारणशरीरादिसमस्तशरीराभिमानित्वाद्विश्वः, सूक्ष्मशरीरमपरित्यज्य स्थूलशरीरप्रवेष्टृत्वाच्च विश्वः समस्तव्यवहारकर्तृत्वाद्व्यावहारिकः, चिद्वदवभासमानत्वे सति चिल्लक्षणरहितत्वाच्चिदाभास इति च व्यपदिश्यते । व्यष्टिसूक्ष्मशरीरोपाधिक आत्मा, तेजोमयान्तःकरणवृत्तिविशिष्टत्वात्, तेजसि वासनायामहंममाभिमानितया सुप्तो भवतीति व्युत्पत्तेश्च तैजसः, प्रतीतिकालमात्रे विद्यमानत्वात्प्रातिभासिकः, अज्ञानकार्यनिद्राशक्तिकल्पितत्वात्स्वप्नकल्पित इति च व्यपदिश्यते । व्यष्ट्यज्ञानोपाधिकतया अनतिप्रकाशत्वात्प्रज्ञारूपचैतन्यप्रधानपुरुषत्वाच्च प्राज्ञः, अवस्थात्रयानुस्यूततया विद्यमानत्वात्पारमार्थिकः, अविद्याहंकारदेहाद्युपाधिपरिच्छिन्नत्वेन भासमानत्वादवच्छिन्न इति व्यपदिश्यते ॥

स्थूलसूक्ष्मकारणशरीराणि शरीरत्रयम् । जाग्रत्स्वप्नसुप्तावस्था इत्यवस्थात्रयम् । मनोवाक्कायानि त्रिविधकरणानि । पुण्यपापमिश्रकर्माणि कर्मत्रयम् । पुण्योत्कर्षपुण्यमध्यमपुण्यसामान्यानीति पुण्यकर्मत्रयम् । पुण्योत्कर्षरूपकर्मणः हिरण्यगर्भशरीरप्राप्तिः फलम् । पुण्यमध्यमरूपकर्मणः इन्द्रादिशरीरप्राप्तिः । पुण्यसामान्यरूपकर्मणः यक्षरक्षआदिशरीरप्राप्तिः फलम् । पापोत्कर्षपापमध्यमपापसामान्यानीति पापकर्मत्रयम् । पापोत्कर्षस्य परतापकरगुच्छगुल्मवृश्चिकयूकवनमक्षिकादिशरीरप्राप्तिः फलम् । पापमध्यमस्य आम्रपनसनारिकेलमहिषाश्वगर्दभादिशरीरप्राप्तिः फलम् । पापसामान्यस्य गोगजाश्वत्थतुलस्यादिशरीरप्राप्तिः फलम् । मिश्रोत्कर्षमिश्रमध्यममिश्रसामान्यानीति मिश्रकर्मत्रयम् । मिश्रोत्कर्षस्य निष्कामकर्मानुष्ठानादिनिर्विकल्पकसमाधिपर्यन्तयोग्यशरीरप्राप्तिः फलम् । मिश्रमध्यमस्य स्वाश्रमोचितकाम्यकर्मयोग्यशरीरप्राप्तिः फलम् । मिश्रसामान्यस्य चण्डालव्याधादिशरीरप्राप्तिः फलम् । मनोवाक्कायभेदेन कामादिप्रेरितमनोवाक्कायकृतकर्मोत्कर्षादिभेदेन च तत्कर्म तत्फलं चानेकविधमिति ज्ञातव्यम् ।

इच्छाप्रारब्धं अनिच्छाप्रारब्धं परेच्छाप्रारब्धमिति प्रारब्धत्रयम् । भूत-

प्रतिबन्धवर्तमानप्रतिबन्धागामिप्रतिबन्धाश्चेति ज्ञानप्रतिबन्धकत्रयम् । श्रवणमननादिकाले सर्वजडवस्तुसाक्षात्कारो भूतप्रतिबन्धः । पापकर्मजनितः कार्योन्नेयः वर्तमानप्रतिबन्धः । एकस्मिन्पुरुषे दयाविश्वासादिदृढासक्तिजनको यः प्रारब्धशेषः स आगामिप्रतिबन्धः । स तु जडभरतादिषु प्रसिद्धः । आरम्भपरिणामविवर्ताः कारणत्रयम् । संयोगः समवायः आध्यासिकतादात्म्यं इति सम्बन्धत्रयम् । अथवा कार्यकारणभावः विषयविषयिभावः आधाराधेयभावश्चेति सम्बन्धत्रयम् । अथवा पदयोः सामानाधिकरण्यं पदार्थयोः विशेष्यविशेषणभावः प्रत्यगात्मलक्षणे लक्ष्यलक्षणभावश्चेति संबन्धत्रयम् । लक्षण तत्वमस्यादिवाक्यमित्यर्थः । आध्यात्मिकं, आधिभौतिकमाधिदैविकं चेति तापत्रयम् । अध्यात्ममधिभूतमधिदैवतमिति अधिभूतादित्रयम् । सत्वरजस्तमांसीति गुणत्रयम् । भूतभविष्यद्वर्तमानकालाः कालत्रयम् । ब्रह्मविष्णुमहेश्वराः मूर्तित्रयम् । ज्ञाता ज्ञानं ज्ञेयमिति ज्ञात्रादित्रयम् । एतदेव त्रिपुटीत्युच्यते । त्रयाणां पुटानां प्रकाराणा ज्ञात्रादीनां समाहारः त्रिपुटीत्यर्थः । स्थूलप्रपंचः सूक्ष्मप्रपंचः कारणप्रपंचश्चेति प्रपंचत्रयम् । पातालमर्त्यस्वर्गाः लोकत्रयम् । तदेव जगत्त्रयमिति चोच्यते । संशयोऽसम्भावना विपरीतभावना चेति ज्ञानप्रतिबन्धकत्रयम् । लोकवासना देहवासना शास्त्रवासना चेति वासनात्रयम् ॥

श्रवणमनननिदिध्यासनानि श्रवणादित्रयम् । सर्वसंशयनिवर्तकं श्रवणम् । मननमसंभावनानिवर्तकम् । निदिध्यासनं तु विपरीतभावनानिवर्तकमिति विवेकः । ज्ञानं वैराग्यमुपरतिश्चेति ज्ञानादित्रयम् । हेतुस्वरूपकार्याणि हेत्वादित्रयम् । ज्ञानस्य हेतुः श्रवणादित्रयम् । अहं देहेन्द्रियाद्यतिरिक्तः साक्षी, प्रतीयमानप्रपंचोऽप्यसत्य इति दृढनिश्चयः ज्ञानस्य स्वरूपम् । अनात्मन्यात्मबुद्ध्यभावः ज्ञानस्य कार्यमिति विवेकः । वैराग्यस्य हेतुः विषयेषु दोषदृष्टिः, वान्ताशनवद्धेयताबुद्धिः स्वरूपं, पुनरासक्त्यभावः कार्यमिति विभावनीयम् । वैराग्यस्यावधिः ब्रह्मलोकतृणीकारः । अज्ञानकाले देहादावात्मत्वविषयिणी दृढबुद्धिर्यथा तथा तदप्रतीतिपूर्वकमहं ब्रह्मेति दृढनिश्चयः बोधस्यावधिः । सुषुप्तिवत्समस्तवस्तुविस्मृतिरुपरतेरिति विज्ञेयम् । प्राणनिग्रहोपाया रेचकपूरककुंभकाः प्राणायामत्रयम् । नेत्रयमीध्यमाग्रपटुत्वाध्यादित्रयम्? सहजतादात्म्य कर्मतादात्म्यं भ्रान्तिजन्यतादात्म्यमिति (अहंकारस्य चिच्छाया, देहसाक्षि) तादात्म्यत्रयम् । पुत्रैषणा वित्तैषणा लोकैषणा चेति ईषणात्रयम् । ईषणा अभिमानः । सुषुप्तिमूर्च्छासमाधयः सुषुप्त्यादित्रयम् ॥

विषयासक्तिः, प्रज्ञामान्द्यं, कुतर्कः, विपर्ययदुराग्रहश्चेति ज्ञाने वर्तमानप्रति-

बन्धचतुष्टयम् । विषये रूढा सक्तिः विषयासक्तिः । बोधितस्यार्थस्य बुद्ध्या अग्रहणं प्रज्ञामान्द्यम् । प्रतिपादितस्यार्थस्य विपरीतग्रहणं कुतर्कः । अहं श्रोत्रियः पण्डितोऽहं विरक्तोऽहमिति देहेन्द्रियादावात्मबुद्धिः विपर्ययदुराग्रहः । शमादिषट्केन विषयासक्तेर्निवृत्तिः । श्रवणेन प्रज्ञामांद्यस्य, मननेन कुतर्कस्य, निदिध्यासनेन विपर्ययदुराग्रहस्य चेति विवेकः । धर्मार्थकाममोक्षाः पुरुषार्थचतुष्टयम् । जातिगुणक्रियासंबन्धाः शब्दप्रवृत्तिनिमित्तचतुष्टयम् । शब्दप्रवृत्तिनिमित्तानां तेषां ब्रह्मण्यभावान्न तस्मिञ्छब्दप्रवृत्तिरिति विभावनीयम् । ब्रह्मक्षत्रियवैश्यशूद्रा इति वर्णचतुष्टयम् । ब्रह्मचर्याश्रमः गृहस्थाश्रमो वानप्रस्थाश्रमो यत्याश्रमश्चेत्याश्रमचतुष्टयम् । नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमादिषट्कसंपन्मुमुक्षुत्वं चेति साधनचतुष्टयम् । विषयप्रयोजनसंबन्धाधिकारिण इत्यनुबन्धचतुष्टयम् । मनोबुध्यहंकारचित्तान्यन्तःकरणचतुष्टयम् । संकल्पाध्यवसायाभिमानानुसंधानानि संकल्पादिचतुष्टयम् । संकल्पवृत्तिरूपेण परिणतमन्तःकरणं मनः । मननात्मकं वा मनः, संकल्पहेतुर्वा मनः । निश्चयाख्यवृत्तिरूपेण परिणतमन्तःकरणं बुद्धिः । निश्चयात्मिका वा बुद्धिः, निश्चयहेतुर्वा बुद्धिः । अभिमानवृत्तिरूपेण परिणतमन्तःकरणं अहंकारः । अभिमानात्मको वा अभिमानकरो वा । पूर्वोत्तरानुसन्धानरूपवृत्तिमदन्तःकरणं चित्तम् । अनुसन्धानात्मकं वा अनुसन्धानकरं वा । ऋग्यजुःसामाथर्वण इति वेदचतुष्टयम् । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणचतुष्टयम् । लयविक्षेपकषायरसास्वादाः समाधिविघ्नचतुष्टयम् । मैत्रीकरुणामुदितोपेक्षाः मैत्र्यादिचतुष्टयम् । जरायुजाण्डजस्वेदजोद्भिज्जाश्चेति भूतग्रामचतुष्टयम् । ब्रह्मविद्वरवरीयोवरिष्ठा इति ब्रह्मविदादिचतुष्टयम् ॥

अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पंच कोशाः । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि ज्ञानेन्द्रियपंचकम् । शब्दस्पर्शरूपरसगन्धाः शब्दादिपंचकम् । वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपंचकं । वचनादानगमनविसर्गानन्दाः वचनादिपंचकम् । प्राणापानव्यानोदानसमानाः पंच प्राणाः । नागकूर्मकृकरदेवदत्तधनंजयाः पंचोपप्राणाः । नित्यनैमित्तिकप्रायश्चित्तकाम्यनिषिद्धानि कर्मपंचकम् । नित्यान्यकरणे प्रत्यवायसाधनानि संध्यावन्दनादीनि । नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि । प्रायश्चित्तानि पापक्षयसाधनानि कृच्छ्रचान्द्रायणादीनि । काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि । निषिद्धानि नरकाद्यनिष्टसाधनानि ब्रह्महत्यादीनीति विवेकः । शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्राणि सूक्ष्मभूतानि । पंचीकृतानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि पंच स्थूलभूतानि । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः पंच यमाः । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि पंच नियमाः ॥

क्षिप्तं मूढं विक्षिप्तं एकाग्रं निरुद्धमिति पंच भूमयः। आसुरसंपल्लोक-शास्त्रदेहवासनासु वर्तमानं चित्तं क्षिप्तभूमिका । निद्रातन्द्रादिग्रस्तं चित्तं मूढभूमिका। ध्यानयुक्तं चित्तं क्षिप्ताद्विशिष्टतया विक्षिप्तभूमिका। तत्र क्षिप्तमूढयोः समाधित्वशंकैव नास्ति। विक्षिप्ते तु समाधित्वशंका, तदितरभूमिकाद्वयं समाधिः। एकाग्रे मनसि संभूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभि-मुखीकरोतीति संप्रज्ञातो योगः एकाग्रभूमिका । सर्ववृत्तिनिरोधरूपाऽसंप्रज्ञातसमाधिः निरुद्धभूमिका। नित्यप्रलयः, 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इति ब्रह्मणः एकस्मिन्नहनि चतुर्दशमनूनां चतुर्दशेन्द्राणां चाधिपत्ये एकस्यापगते अन्यस्य प्राप्ते सति आधिपत्याभ्युपगमकालपर्यन्तं तस्मिन्समये चतुर्दशावांतरप्रळया इत्युच्यन्ते । तेषां नैमित्तिकप्रळया इत्यपि संज्ञा, मन्वन्तरप्रळय इति च । एतेषु युगप्रळयानामंतर्भावः। ब्रह्मणः सुषुप्तिः दैनंदिनप्रळयः। ब्रह्मणो नाशावस्था ब्रह्मप्रळयः । तदानीमाकाशादि-प्रपञ्चरहितं सदज्ञानमात्रं वर्तते । ब्रह्मप्रळयस्य महाप्रळय इति संज्ञा । तत्वज्ञानात् आत्यन्तिकप्रळयः, तत्समयेऽज्ञानस्य सर्वात्मनाऽभावादिति पंच प्रळयाः॥

जीवात्मा परमेश्वराद्भिन्नः, आत्मनि प्रतीयमानं कर्तृत्वादिकं वास्तवं, शरीरावच्छिन्नात्मा संगी, जगत्कारणत्वेन ब्रह्मणो विकारित्वं, कारणाद्भिन्नस्य प्रपंचस्य सत्यत्वमिति पंच भ्रमाः। बिम्बप्रतिबिम्बदृष्टान्तेन भेदभ्रमो निवर्तनीयः। स्फटिकलोहित-दृष्टान्तेन पारमार्थिककर्तृत्वभ्रमो निवर्तनीयः । घटाकाशमठाकाशदृष्टान्तेन संगीति भ्रमो निवर्तनीयः । रज्जुसर्पदृष्टान्तेन जगत्कारणेऽपि ब्रह्मणि विकारित्वभ्रमो निवर्तनीयः। स्वर्णरुचकलोहकटाहादिदृष्टान्तेन कारणाद्भिन्नत्वेन प्रतीयमानप्रपंचस्य सत्यत्वभ्रमो निवर्तनीयः इति पंचभ्रमनिवर्तकदृष्टान्तपंचकम् । ब्रह्मणि जगद्भासत इत्यत्र, शुक्तौ रजतं, रज्जौ सर्पः, स्थाणौ पुरुषः, गगने नीलत्वादि, मरुमरीचिकायां जलमिति दृष्टान्त-पंचकम् । आत्मख्यातिरसत्ख्यातिरन्यथाख्यातिरख्यातिरनिर्वचनीयख्यातिः इति पंच-ख्यातयः॥

दृश्यानुविद्धः शब्दानुविद्धश्चेति द्विविधः । दृश्येन मिश्रो दृश्यानुविद्धः। शब्दमिश्रः शब्दानुविद्धः । एकस्मिन्वस्तुमात्रत्वेन चित्तस्य तदाकारवृत्तिविशेषावस्था संप्रज्ञातसमाधिः। स च सविकल्प इति चोच्यते। स च पुनर्दृश्यानुविद्धः, शब्दानु-विद्ध इति द्विविधः इति विवेकः। वृत्तिमति अखण्डे तन्मात्रत्वेनोपसंहृत्य वृत्तिमच्चित्तस्य प्रयत्नपूर्वकं वस्तुमात्रत्वेनावस्थानमसंप्रज्ञातसमाधिः। स एव निर्विकल्प इति गीयते। दृश्यानुविद्धशब्दानुविद्धनिर्विकल्पकसमाधय एव बाह्याभ्यन्तरभेदेन षट् समाधय इति

व्यवह्रियन्ते । कामक्रोधलोभमोहमदमात्सर्याण्यरिषड्वर्गः । जायते अस्ति वर्धते परिणमते अपक्षीयते विनश्यतीति षड्भावविकाराः । त्वङ्मांसरुधिरमेदोमज्जास्थीनि षट्कोशाः । जरामरणक्षुत्पिपासाशोकमोहाः षडूर्मयः ॥

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥" इति षड्विधलिङ्गानि । उपक्रमोपसंहारावेकं लिङ्गम् । अद्वितीयात्मप्रतिपादकत्वात्सृष्टेः पूर्वं नामरूपरहितं सत्तामात्रं जगदिति छान्दोग्ये षष्ठप्रपाठकप्रकरणे 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुत्या प्रतिपादनमुपक्रमः । प्रतीयमानं सर्वमिदं जगत्पूर्वोक्तसत्स्वरूपमेव नान्यदिति 'ऐतदात्म्यमिदं सर्वं' इति श्रुत्या अन्ते प्रतिपादनं उपसंहारः । प्रकरणप्रतिपाद्यस्य तन्मध्ये नवसंख्याकोपदेशेन प्रतिपादनमभ्यासः । प्रमाणानां मध्ये लक्षणया 'तन्त्वौपनिषदं पुरुषं पृच्छामि' इति उपनिषत्प्रमाणेन गम्य आत्मा नेतरेणेति विवेकोऽपूर्वता । प्रारब्धक्षयपर्यन्तं देहेन्द्रियादौ मिथ्याप्रतीतेः प्रारब्धस्य निरशेषतोऽपक्षये मिथ्यात्वप्रतीतिपूर्वकमद्वितीयात्मस्वरूपेणावस्थानस्य च 'आचार्यवान्पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इत्यादिश्रुत्या प्रतिपादनं फलम् । प्रकरणप्रतिपाद्यस्य 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति' इत्यादिश्रुत्या प्रशंसनमर्थवादः, स्वार्थे तात्पर्याभावात् । यथा घटशरावादीनां मृदभिन्नत्वं, स्वर्णजन्यकटकमकुटादीना च स्वर्णाभिन्नत्वं तथा कारणजन्यजगतः कारणाभिन्नत्वमिति वाचारंभणमित्यादिश्रुत्या प्रतिपादिता युक्तिरुपपत्तिः ॥

शिशुत्वबाल्ययौवनकौमारतारुण्यवार्धक्यानि षडवस्थाः । पूर्वमीमांसोत्तरमीमांसाशब्दतर्कसांख्ययोगाः षट् शास्त्राणि । आश्वलायनापस्तम्बबोधायनकात्यायनसत्याषाढवैखानसाः षट् सूत्राणि । शिक्षाकल्पव्याकरणनिरुक्तज्योतिषछन्दांसि षडङ्गानि । स्नानसंध्या जपो होमः देवतार्चनातिथ्यवैश्वदेवाः षट् कर्माणि । पूर्वोक्तप्रमाणचतुष्टयमनुपलब्धिरन्यथानुपपत्तिरिति षट् प्रमाणानि । शमो दम उपरतिस्तितिक्षा समाधानं श्रद्धेति शमादिषट्कम् ॥

अज्ञानमावरणं विक्षेपः परोक्षमपरोक्षमनर्थनिवृत्तिरानन्दावाप्तिश्चेति सप्तावस्थाः । आवरणं द्विविधं—न भाति कूटस्थ इत्यभानावरणम् । असतोऽभानान्नास्ति कूटस्थ इति असदावरणमिति । परोक्षज्ञानादसदावरणनिवृत्तिः । अपरोक्षज्ञानादभानावरणनिवृत्तिः । ततो विक्षेपनिवृत्तिः, ततोऽनर्थनिवृत्तिः आनन्दावाप्तिश्च भवतीति विभावनीयम् । शुद्धमीश्वरचैतन्यम् ।

मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ।
मायासम्बन्धतश्चेशो जीवोऽविद्यावशात्तथा ॥

अन्तःकरणसम्बन्धात्प्रमातेत्यभिधीयते ।
तथा तद्वृत्तिसंबन्धात्प्रमाणमिति कथ्यते ॥

अज्ञातमपि चैतन्यं प्रमेयमिति कथ्यते ।
तथा ज्ञातं च चैतन्यं फलमित्यभिधीयते ॥

भूर्भुवस्स्वर्महर्जनस्तपस्सत्यमिति भूरादिसप्तकम् । अतलवितलसुतलतलातलमहातलरसातलपातालान्यतलादिसप्तकम् ।

"ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥

सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥"

इति सप्तभूमिकाः । भूमिका नाम चित्तस्य अवस्थाविशेषः । अत्र भूमिकात्रयं ब्रह्मविद्यासाधनमेव, न तु ब्रह्मविद्यायांटावन्तर्भावः, भेदसत्यत्वबुद्धेरनिवृत्तत्वात् । यश्चतुर्थभूमिकां प्राप्तः स ब्रह्मविदित्युच्यते । पञ्चमभूमौ निर्विकल्पः । तदा स्वयमेव व्युत्तिष्ठति सोऽयं योगी ब्रह्मविद्वरः षष्ठभूमौ पार्श्वस्थबोधितो व्युत्तिष्ठति, सोऽयं ब्रह्मविद्वरीयान् । तदेतद्भूमि सुषुप्तिरिति चाभिधीयते । असंप्रज्ञातप्रतिपादकानि योगशास्त्राणि सप्तमभूमिं प्राप्ते योगिन्येव पर्यवस्यन्ति । सोऽयमीदृशो योगी व्युत्थानरहितः निर्विकल्पकसमाधिस्थः परमहंसः सप्तमभूमौ ब्रह्मविद्वरिष्ठ इत्युच्यते ॥

'ज्ञानेन्द्रियाणि खलु पंच तथापराणि कर्मेन्द्रियाणि मनआदिचतुष्टयं च ।
प्राणादिपंचकमथो वियदादिपंच कामश्च कर्म च तमः पुनरष्टधा पूः' ॥

इति पुर्यष्टकम् । कामोऽभिलाषः । कर्म च त्रिविधं । तमः अज्ञानं, एतेषां पुर्यष्टकमिति संज्ञा इति भावः ॥

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा" ॥

इति प्रकृत्यष्टकम् । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः अष्टांगानि । निर्विकल्पकसमाधेरिति केचित् । अस्मिन्पक्षेऽङ्गघटितसमाधिशब्देन सविकल्पकाख्यसमाधिरुच्यते । संप्रज्ञातसमाधेरेतान्यंगानीति केचित् । अस्मिन्पक्षे अंगघटितसमाधिः

संप्रज्ञाताद्भिन्न इति मंतव्यम्, अङ्गाङ्गिनोः भेदस्यावश्यकत्वात् । तथाच विच्छिद्य विच्छिद्य प्रत्ययावृत्तिर्ध्यानं, सावधानेनाविच्छिद्याविच्छिद्य प्रत्ययावृत्तिः अङ्गघटित-संप्रज्ञाताख्यसाधनसमाधिः, निरवधानेन अविच्छिद्याविच्छिद्य प्रत्ययावृत्तिरङ्गिस्वरूपा-संप्रज्ञाताख्यसाध्यसमाधिरिति भेदः त्रयाणां विषयैक्येऽपि चित्तपरिपाकतारतम्येनांगी-करणीयः । करचरणादिसंस्थाविशेषलक्षणानि पद्मकस्वस्तिकादीन्यासनानि । इन्द्रियाणां स्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः । अद्वितीयवस्तुनि अन्तरिन्द्रियधारणं धारणा ॥

दर्शनं स्मरणं केलिः कीर्तनं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ॥

अष्टाङ्गं; रागपूर्वकस्त्र्यादिविषयकं ज्ञानं दर्शनम् । रागपूर्वकपरिहासादिव्यवहारः केलिः । स्त्र्यादेरनुरागपूर्वकं सौन्दर्यादिवर्णनं कीर्तनम् । रागपूर्वकं रहसि संभाषणं गुह्यभाषणम् । स्त्र्यादिविषयकदृढेच्छाविशेष इयं ममास्त्विति संकल्पः । अनया रमे इति निश्चयो ऽध्यवसायः । रागपूर्वकस्त्र्यादिविषयकानुभवविशेषः क्रियानिर्वृत्तिः । ज्ञानं ज्ञाता ज्ञेयं भोक्ता भोग्यं भोगः कर्ता करणं क्रिया इति नवविधः संसारः इत्येकः पक्षः । पक्षान्तरं च वर्तते, तथाहि—पंच महाभूतानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च प्राणादिपंचकं मनआदि-चतुष्टयं स्थूलशरीरमेकं विविधकर्माणि अवस्थात्रयं एतेषां कारणीभूतमज्ञानं चेति नवविधः संसारः ।

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ।
तथा चन्द्रश्चतुर्वक्त्रो रुद्रः क्षेत्रज्ञ ईश्वरः ॥

इति अधिष्ठानदेवतापंचदशकम् । अस्थिचर्मस्नायुमज्जामांसस्नायुकशोणितश्लेष्मासृक्शिरा-विण्मूत्रवातपित्तान्यस्थ्यादिपंचदशकम् । एतत्पंचदशसमुदायात्मकं स्थूलशरीरं ज्ञातव्यम् । रागद्वेषकामक्रोधलोभमोहमदमात्सर्येर्ष्यासूयादंभदर्पाहंकारेच्छाभक्तिश्रद्धा इति रागादि-षोडशकम् । एतेषां मध्ये भक्तिश्रद्धे मुक्तिहेतुः । इच्छा तु मुक्तिहेतुर्बन्धहेतुश्च भवति, अन्ये तु बन्धहेतव एवेति विवेकः । कर्मेन्द्रियपंचकं ज्ञानेन्द्रियपंचकं प्राणादिपंचकं अन्तःकरणं चेति षोडशकं लिङ्गमित्येके । इदमेव सूक्ष्मशरीरमिति वेदितव्यम् ।

पंचप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपंचीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥

इति सप्तदशावयवकं लिङ्गमित्येकः पक्षः । चित्ताहंकाराभ्यां सहितं पूर्वोक्तं नवदशकं लिङ्गमिति पक्षान्तरम् । ज्ञानेन्द्रियपंचकं कर्मेन्द्रियपंचकं प्राणादिपंचकं शब्दादिपंचकं मनआदिचतुष्टयं इति चतुर्विंशतितत्वानीति केचित् । पंचीकृतभूतानि पंच, शरीरत्रयं अवस्थात्रयं अज्ञानं च पूर्वोक्ततत्वैस्सह षट्त्रिंशत्तत्वानीति केचित् । षड्भावविकाराः षडूर्मयः, षट्कौशिकाः, अरिषड्वर्गः, जगत्त्रयं गुणत्रयं कर्मत्रयं वचनादिपंचकं, संकल्पादिचतुष्टयं मैत्र्यादिचतुष्टयं, दिग्वातार्काद्यधिष्ठानदेवताः अज्ञानाधिष्ठानदेवता-व्यतिरिक्ताश्चतुर्दश, पूर्वोक्तैस्तत्वैस्सह षण्णवतिरिति केचित् ॥

विविदिषासन्यासो विद्वत्सन्यासश्चेति परमहंससन्यासद्वयम् । जातरूपधरः कमण्डलुधारीति विद्वत्सन्यासद्वयम् । क्रमनिग्रहो दृढनिग्रहश्चेति निग्रहद्वयम् । सामान्याहंकारो विशेषाहंकारश्चेति अहंकारद्वयम् । ब्रह्मानन्दो विषयानन्दो वासनानन्दश्चेति आनन्दत्रयम् । निजानन्दमुख्यानन्दात्मानन्दयोगानन्दाऽद्वैतानन्दानां ब्रह्मानन्देऽन्तर्भावः । आगामिसंचितप्रारब्धानि कर्मत्रयम् । प्रारब्धकर्मणः फलभोक्तुरामरणपर्यन्तं कृतं पुण्यपापरूपं कर्मागामीत्युच्यते । जन्महेतुभूतं स्थितं पूर्वजन्मकृतकर्म संचितमित्युच्यते । शरीरारंभकं कर्म प्रारब्धमिति भेदः । जाग्रज्जाग्रज्जाग्रत्स्वप्नः जाग्रत्सुषुप्तिरिति जाग्रत्त्रयम् । स्वप्नजाग्रत्स्वप्नस्वप्नः स्वप्नसुषुप्तिश्चेति स्वप्नत्रयम् । सुषुप्तिस्वप्नः सुषुप्तिजाग्रत् सुषुप्तिसुषुप्तिरिति सुषुप्तित्रयम् । ज्ञानात्माहंकारात्मा शान्तात्मा चेति आत्मत्रयम् । कुटीचकः बहूदकः हंसः परमहंसश्चेति सन्यासचतुष्टयम् । तत्वविदोऽपि वासनाक्षयाया-स्त्वेवासंप्रज्ञातसमाध्यपेक्षा । तस्य च समाधेः गवाश्वादिष्विव वाङ्निरोधः प्रथमभूमिः । बालमूकादिष्विव निर्मननत्वं द्वितीया । तमिव अहंकाराहित्यं तृतीया, सुषुप्ताविव महत्तत्वराहित्यं चतुर्थभूमिकेति भूमिकाचतुष्टयम् । तदेतद्भूमिकाचतुष्टयमभिप्रेत्य शनैश्शनैरित्युक्तं भगवता ॥

> अध्यात्मविद्याधिगमः साधुसंगम एव च
> वासनानां परित्यागः प्राणस्पन्दनिरोधनम् ॥

इति युक्तिचतुष्टयम् । चित्तक्षये एकैव युक्तिः साधनमित्यर्थः । पूर्वस्मिन्दार्ढ्याभावे उत्तरस्मिन् साधने प्रवृत्तिरिति विज्ञेयम् ॥

> अजिह्वः पंडकः पंगुरन्धो बधिर एव च ।
> मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥" इत्यजिह्वादिषट्कम् ॥

> "अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ।
> शतवर्षां च यो दृष्ट्वा निर्विकारस्स पण्डकः ॥" इति पण्डकलक्षणम् ॥

"मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निस्पृहत्वं समत्वं च सप्तैतान्येव दण्डिनः ॥" इति मौनादिसप्तकम् ॥

"इडा च पिङ्गला चैव सुषुम्ना च ततः परम् ।
गान्धारी हस्तिजिह्वा च पूषा चैव पयस्विनी ।
लकुहालंबुसा चैव शंखिनी दशनाडिकाः ॥"

इति नाडिकादशकम् । इडा चन्द्रनाडी, पिंगला सूर्यनाडी, सुषुम्ना मध्यनाडी, गान्धारी दक्षिणनेत्रिका, हस्तिजिह्वा वामनेत्रिका, पूषा दक्षिणकर्णिका, पयस्विनी वामकर्णिका, लकुहा गुदनाडी, अलंबुसा मेढ्रनाडी, शंखिनी नाभिनाडीति विवेकः । हरिब्रह्मरुद्रेन्द्रवरुणेशयमोद्भवपृथिवीसूर्यचन्द्राः क्रमान्नाडीनां दश देवताः । धनिनी स्थितिनी कृतिनी वर्तिनी क्रोधिनी मोहिनी अविचारिणी वादिनीत्यष्टांतरङ्गमदाः ॥

कुलं शीलं धनं चैव रूपं यौवनमेव च ।
विद्या राज्यं तपश्चैव इत्येते षड्बाह्यमदाः ॥

पृथिवी सलिलं पावकः शशी पवनः अंबरं रविरात्मेत्यष्ट मूर्तिमदाः । पृथिवीमदाविर्भावे जीवस्तमोगुणभरितः वस्त्रादीच्छावान् । सलिलमदाविर्भावे संसारभरितः ममेदमावश्यकमिति चिंतायुक्तो भवति जीवः । पावकमदाविर्भावे कामरसभरितो वनितासंभोगेच्छया तदनुकूलव्यापारवान् जीवो भवति । शशिमदाविर्भावे चिंताभरितः कारिष्यमाणं कार्यं भविष्यति वा, कृतं चेदन्यथा भविष्यति वेति संशयात्तूष्णीं स्थितो भवति क्षणमात्रं जीवः । पवनमदाविर्भावे प्रयाणभरितः परदेशेच्छावान्भवति । आकाशमदाविर्भावे वाहनभरितः गजाश्वादीच्छावान्, सूर्यमदाविर्भावे क्रोधाग्निभरितः इदं संहर्तव्यमितीच्छावान् । आत्ममदाविर्भावेऽहंकारभरितः विद्याभिः मम समः को वेति प्रज्ञावान्भवति जीव इति विवेकः ॥

घृणा शंका भयं लज्जा जुगुप्सा चेति पंचकम् ।
कुलं शीलं च वृत्तं चेत्यष्टौ पाशाः प्रकीर्तिताः ॥ इत्यष्ट पाशाः ।

रसो रुधिरमांसे च मेदोमज्जास्थिरेतसी ।
सप्तधातुरयं युक्तः सर्वदेहसमाश्रयः ॥

इति सप्त धातवः । भुक्तमन्नं रसात्मकतया सप्तदिनानन्तरं परिणतं सत् रस इत्युच्यते । एवं सर्वत्र रुधिरात्मकतयेत्यादि - ज्ञेयम् । तनुव्यसनमनोव्यसनधनव्यसनराज्य-

व्यसनविश्वव्यसनोत्साहव्यसनसेवकव्यसनानीति सप्त व्यसनानि । तनुव्यसनोद्भवे शरीरं कृशं जातमिति जीवः खिन्नो भवति । मनोव्यसनोद्भवे चौर्यपरेच्छादिमान् जीवो भवति । विश्वव्यसनोद्भवे गृहक्षेत्रादिसंपादनेच्छावान्भवति । उत्साहव्यसनोद्भवे पुत्रकलत्रादीच्छावान्भवति । सेवकव्यसनोद्भवे परराष्ट्रगमनसकलधर्मपोषणरतो भवति । शेषं स्पष्टार्थम् ॥

कुलगोत्रजातिवर्णाश्रमनामभेदेन षड्भ्रमाः । मालवकर्णाटकद्राविडभेदाभिमानव्यवहारः कुलभ्रमः । विश्वामित्रादिव्यवहारो गोत्रभ्रमः । ब्रह्मक्षत्रवैश्यशूद्रभेदाभिमानो जातिभ्रमः । अष्टादशवर्णेषु अहं श्रेष्ठ इत्यभिमानव्यवहारः वर्णभ्रमः । शेषं स्फुटम् । अविद्यास्मितारागद्वेषाभिनिवेशाः पंच क्लेशाः । अथवा अविद्याऽस्मिताऽसूयास्पर्धाभिनिवेशाः पंच क्लेशाः । मलमूत्रादिवेष्टितस्थूलशरीरमेवाहमित्यभिमानः अविद्या । एवंविधतापत्रयेण दुःखानुभव अस्मिता । रागादिभिः परिभवानुभव एवासूया । सज्जनदर्शने द्वेषबुध्या निषेधनमेव स्पर्धा । लोकरञ्जनाय तत्तदुत्तमकर्मोद्योगयशादिधारणमेवाभिनिवेश इति विभावनीयम् । मनस्तापः शरीरताप इति आध्यात्मिकतापद्वयम् । ज्वरगुल्ममूलादिदोषसंपादिततापः शारीरः । असूयामदमात्सर्यादिसंपादितचित्तव्याकुलतैव मानसः ताप इति विभावनीयम् । क्षयतापोऽतितापः साहसपतनताप इति स्वर्गलोकतापत्रयम् । यथा स्वार्जितधनक्षयेन मनोविचारात्मकतापः, तथा पुण्यकर्मक्षये पुनः पतनभीतिजन्यताप एव क्षयतापः । स्वर्गलोकगमनसमये स्वाधिकवरदेवतास्थापितलोकदर्शनमेवातितापः । पुण्यकर्मक्षयानन्तरं तत्रत्यसुरादिभिः मुद्गरमुसलप्रहारेणैव कंपितसर्वांगपतनं स्वर्गलोके साहसपतनताप इति बोध्यम् ॥

अथ पंचसप्ततिगुणाः कथ्यन्ते —

अस्थिमांसत्वचो नाडी रोम चेनेति पंचकम् ।
पंच क्षितिगुणाः प्रोक्तास्थैत्रांशाः प्रकीर्तिताः ॥

श्लेष्म मूत्रं तथा स्वेदः शुक्लं शोणितमेव च ।
अपां पंचगुणाः प्रोक्तास्थैत्रांशाः प्रकीर्तिताः ॥

क्षुधा तृषा तथा निद्रा ह्यालस्यं मैथुन एव च ।
अग्नेः पंचगुणाः प्रोक्तास्थैत्रांशाः प्रकीर्तिताः ॥

धावनं चलनं चैवाकुंचनं च प्रसारणम् ।
वियोगश्चेति विज्ञेया वायोः पंचगुणा इति ।

रागद्वेषौ भयं लज्जा मोहश्च नभसस्तथा ।
इति पंच गुणाः प्रोक्तास्तथैवांशाः प्रकीर्तिताः ॥

तथा च पृथिव्याः शब्दस्पर्शरूपरसगन्धात्मकपंचगुणकत्वेन शब्दादिपंचगुणसंबन्धिनः पृथिव्यां पंचविंशतिगुणाः प्राप्ताः, एकैकस्य शब्दगुणादेः श्लोकोक्तपंचविशेषगुणकत्व-कथनात् । तथाच अपां विंशतिगुणाः, अग्नेः पंचदश गुणाः, वायोः दश गुणाः, आकाशस्य पंच गुणाः, इत्याहत्य पंचसप्ततिगुणा इति सुधीभिर्विभावनीयम् ॥

श्वेतपीतरक्तहरितकृष्णमांजिष्ठभेदेन रूपं षड्विधम् । शीतोष्णमृदुकठिनभेदेन स्पर्शश्चतुर्विधः । अक्षरानक्षरभेदेन शब्दो द्विविधः । मधुराम्लतिक्तकटुकषायलवण-भेदेन रसः षड्विधः । सुगन्धदुर्गन्धभेदेन गन्धो द्विविधः । प्राणः इंद्रनीलवर्णः, अपानः हरितवर्णः, व्यानः कपिलवर्णः, उदानः तडिद्वर्णः, समानो नीलवर्णः, नागवायुः पीतवर्णः, कूर्मः श्वेतः, कृकरः आंजनः, देवदत्तः स्फटिकवर्णः, धनजंयः इन्द्रनीलवर्णः इत्याहत्य नव वर्णाः ॥

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ॥" इत्यैश्वर्यादिषट्कम् ।

"उत्पत्तिं निधनं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

इत्युत्पत्त्यादिषट्कम । नादबिन्दुकलाः नादादित्रयम् । संवृत्ते गलविवरे यत्कण्ठनिनादन-करणं स नादः, अनुस्वारो बिन्दुः, नादैकदेशः कलेत्यर्थः । तथा चासन्नाद्वितीय-ब्रह्मप्रतिपादके वेदान्तशास्त्रे वृद्धवचनमनुसृत्याध्यारोपवशात् संज्ञाः सन्तीति प्रतिपादितम् । संप्रति अपवादो निरूप्यते । अधिष्ठानमात्रपर्यवशेषणमपवादः । तथाच सर्वप्रपंचरहितं ब्रह्माहमस्मीति प्रत्यगभिन्नब्रह्मज्ञानान्मुक्तिरिति सिद्धम् ॥

इति वेदान्तसंज्ञाप्रकरणम् ॥



श्रीगुरुभ्यो नमः ॥

# ॥ श्रीदक्षिणामूर्तिविलासः ॥

## श्रीवासुदेवानन्दसरस्वतीविरचितः ॥



ब्रह्माण्डदेवालयमध्यसंस्थं पिण्डाण्डगर्भालयचित्तपीठे ।
विभासमानं सततं स्वकीयं चैतन्यलिङ्गं शिवमाश्रयामः ॥ १ ॥

मत्प्राक्तनमहाभाग्यकल्पपादपसत्फलम् ।
प्रत्यग्रूपं परानन्दं दक्षिणामूर्तिमाश्रये ॥ २ ॥

ये वेदमणिसंरुद्धप्रणवोन्नतपीठके ।
ताभ्यां श्रीदक्षिणामूर्तिपादुकाभ्यां नमो नमः ॥ ३ ॥

देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिने-
त्येवं प्राञ्जलिना मया प्रविलये स्वप्नोत्थितं शंसितुः ।
यस्य श्रीकरुणाकटाक्षविभवात्प्राप्तात्मविद्योऽस्म्यहं
तं वन्दे मुनिवन्दनीयचरणं श्रीदक्षिणास्यं गुरुम् ॥ ४ ॥

ब्रह्मविद्यासंप्रदायश्रीगुरुभ्यो निरन्तरम् ।
नमो नमस्सूत्रकृद्भ्यो भाष्यकृद्भ्यो नमो नमः ॥ ५ ॥

नमो वार्तिककारेभ्यष्टीकाकृद्भ्यो नमो नमः ।
नमः श्रीभामतीकृद्भ्यो ब्रह्मविद्भ्यो नमो नमः ॥ ६ ॥

अद्वितीयापरिच्छिन्नसच्चिदानन्दमूर्तये ।
दक्षिणामूर्तिरूपाय महामेव नमो नमः ॥ ७ ॥

श्रीदक्षिणामूर्तिदीक्षापात्रेणानेन धीमता ।
श्रीदक्षिणामूर्तिदीक्षाविलासोऽयं वितन्यते ॥ ८ ॥

श्रीदक्षिणामूर्तिदीक्षाविलासो रचितो मया ।
मुमुक्षुभिरयं सम्यग्वीक्षणीयो मुहुर्मुहुः ॥ ९ ॥

दक्षिणामूर्तिदेवस्य प्रसादात्स्वगुरोरपि ।
वेदान्तारामसंचारात्सत्संगादपि तर्कतः ॥ १० ॥

यन्निश्चितं मया तत्त्वं तदेतच्चिन्तयाम्यहम् ।
मोक्षसाम्राज्यसिध्यर्थं सावधानमनाः शृणु ॥ ११ ॥

ब्रह्माण्डे कोऽहमस्मीति मत्स्वरूपे विचिन्तिते ।
मायामयत्वाद्ब्रह्माण्डं नाहमस्मि न संशयः ॥ १२ ॥

दृश्यत्वाद्भौतिकत्वाच्च जरामरणवत्त्वतः ।
स्वमातृपितृसाध्यत्वाद्देहो नाहं न संशयः ॥ १३ ॥

दृश्यत्वाद्वायुरूपत्वात्क्षयातिशयवत्त्वतः ।
क्षुत्पिपासादिमत्त्वाच्च प्राणो नाहं न संशयः ॥ १४ ॥

दृश्यत्वाच्चपलत्वाच्च मायामयशरीरतः ।
शोकमोहादिमत्त्वाच्च मनो नाहं न संशयः ॥ १५ ॥

दृश्यत्वान्मायिकत्वाच्च श्रद्धायज्ञादिधर्मतः ।
यज्ञादिधर्मकर्तृत्वाद्बुद्धिर्नाहं न संशयः ॥ १६ ॥

दृश्यत्वादतिमूढत्वात्प्रियमोदादिमत्त्वतः ।
सुखलेशविशिष्टत्वादज्ञानं नाहमस्मि हि ॥ १७ ॥

नाहं देहो न मे देहो देहद्रष्टाऽस्मि केवलम् ।
नाहं प्राणो न मे प्राणो प्राणद्रष्टाऽस्म्यहं शिवः ॥ १८ ॥

नाहं मनो मनो नो मे मनोद्रष्टाऽस्मि केवलम् ।
नाहं बुद्धिर्न मे बुद्धिः बुद्धिद्रष्टाऽस्मि केवलम् ॥ १९ ॥

नाहमज्ञानरूपोऽस्मि न ममाज्ञानसंगतिः ।
तद्भ्रान्तिबाधाधिष्ठानं साक्ष्यहं केवलं शिवः ॥ २० ॥

अन्योऽन्यव्यतिरेकत्वाद्दृश्यत्वान्मायिकत्वतः ।
अवस्थात्रितयं नाहं तत्साक्षी केवलः शिवः ॥ २१ ॥

देहप्राणमनोबुद्धिकारणानि जडानि हि ।
तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः ॥ २२ ॥

नासत्योऽसत्यसाक्षित्वान्न जडो जडसाक्ष्यहम् ।
न दुःखं दुःखसाक्षित्वात्सत्यज्ञानसुखात्मकम् ॥ २३ ॥

सर्वाधिष्ठानरूपत्वात्सन्मात्रः केवलोऽस्म्यहम् ।
चिन्मात्रस्सर्वसाक्षित्वात्सुखं प्रेमास्पदत्वतः ॥ २४ ॥

अहमेव परं ब्रह्म ब्रह्माहं परमं पदम् ।
इति ज्ञात्वा विमुक्तोऽस्मि ह्यहं ब्रह्मेति शाश्वतः ॥ २५ ॥

त्वमेव परं ब्रह्म ब्रह्म त्वं परमं पदम् ।
इति ज्ञात्वा विमुक्तः स्यात्तत्त्वमस्यादिशासनात् ॥ २६ ॥

स्तम्बादिविधिपर्यन्ते भूतग्रामे प्रकाशते ।
या चितिस्तदहं ब्रह्म प्रज्ञानमिति शाश्वतः ॥ २७ ॥

देहाद्यज्ञानपर्यन्ते स्वनात्मत्वेन निश्चिते ।
यन्नित्यं ब्रह्म तदहमहमात्मेति शाश्वतः ॥ २८ ॥

तत्त्वमस्यस्म्यहं ब्रह्म ब्रह्मात्माऽयमसंशयः ।
प्रज्ञानं ब्रह्म चेत्युक्तं यदद्वैतं तदस्म्यहम् ॥ २९ ॥

योऽत्र ब्रह्म परं वेद श्रुत्याचार्यप्रसादतः ।
स ब्रह्मैव भवेन्नूनं ब्रह्म वेदेति शाश्वतः ॥ ३० ॥

ब्रह्मवित्परिपूर्णोऽथ भासते दृश्यरूपतः ।
अतस्सर्वमिदं ब्रह्म ब्रह्मैवेदमिति श्रुतेः ॥ ३१ ॥

आत्मचैतन्यमेवेदं भासते दृश्यरूपतः ।
आत्मैवेदमतस्सर्वमात्मैवेदमिति श्रुतेः ॥ ३२ ॥

देहादिपंचकोशस्थैर्न लिप्तोऽहं शुभाशुभैः ।
पृथिव्यादिगतैर्धर्मैः लिप्यते नाम्बरं यथा ॥ ३३ ॥

सच्चिदानन्दरूपोऽहं न तप्तोऽहं कदाचन ।
तापैस्सांसारिकैस्सर्वैरातपैरम्बरं यथा ॥ ३४ ॥

सर्वावभासकं सत्यं सर्वमूर्तान्तरस्थितम् ।
सर्वदुःखैर्न लिप्तोऽहं न लिप्यत इति श्रुतेः ॥ ३५ ॥

सर्वाधारो निराधारः चिदाकाशोऽस्मि केवलम् ।
आकाशवत्सर्वगत आकाशवदिति श्रुतेः ॥ ३६ ॥

बिम्बानन्दात्मभूतस्य ममैवानन्दलेशतः ।
आनन्दवन्ति भूतानि मात्राण्येवेति शास्त्रतः ॥ ३७ ॥

मीना इवावभासन्ते यत्र सूर्येन्दुतारकाः ।
तत्रात्मबुद्धियुक्तस्य किं ममोपास्यमिष्यते ॥ ३८ ॥

ब्रह्मादिदेहान्मण्डूकान्मनुते यत्र संस्थितः ।
तत्र स्थितस्य धीरस्य किं प्राप्यमवशिष्यते ॥ ३९ ॥

यत्रैकस्था विराजन्ते देवास्सर्वे महेश्वराः ।
तत्रात्मबुद्धियुक्तस्य किं ममोपास्यमिष्यते ॥ ४० ॥

यद्विज्ञाय महात्मानो न पतन्ति पुनर्भवे ।
तत्रात्मबुद्धियुक्तस्य क बन्धो मे क मुक्तता ॥ ४१ ॥

प्रचण्डा यत्र नन्दन्ति बिम्बानन्दात्मनिर्वृताः ।
बुद्धिपौरुषनिर्हीनाः अर्भकास्तत्कथं विदुः ॥ ४२ ॥

अहो मशकलोमाग्रलम्बमानरजःकणान् ।
इन्द्रादीन्मन्यते यत्र स्थितस्तत्केन माव्यते ॥ ४३ ॥

अहो सर्षपवद्भान्ति यत्र ब्रह्माण्डकोटयः ।
तत्रात्मबुद्धियुक्तस्य महिमा केन वर्ण्यते ॥ ४४ ॥

यस्मिन्नानन्दसरसि शिवविष्ण्वभिधानकम् ।
रमते हंसमिथुनं सोऽस्मि मे पश्य कौशलम् ॥ ४५ ॥

एकात्मभावनामात्रादनेकक्लेशसंक्षयात् ।
स्वानन्दे सुस्थितोऽस्म्यद्य ह्यत्युग्रं पश्य मे तपः ॥ ४६ ॥

अस्तुवन्ननमस्कुर्वन्ननिन्दन्यं च कचन ।
ऐकात्म्ये सुस्थितोऽस्म्यद्य ह्यत्युग्रं पश्य मे तपः ॥ ४७ ॥

देहात्मभ्रममुत्सृज्य परिपूर्णात्मदर्शनात् ।
विदेह इव तिष्ठामि ह्यत्युग्रं पश्य मे तपः ॥ ४८ ॥

एतावन्मात्रके देहे तिष्ठन्ब्रह्माण्डमण्डपम् ।
आपूर्योपरिस्थितो भामि ह्यत्युग्रं पश्य मे तपः ॥ ४९ ॥

लोकेऽस्मिन्दह्यमानेऽपि देहेऽस्मिश्छेदितेऽपि वा ।
मम लोमापि न छिन्नं ह्यत्युग्रं पश्य मे तपः ॥ ५० ॥

पतेद्वा लोष्टवत्काय तिष्ठेद्वा क्लिष्टवत्क्वचित् ।
कालभक्षकचैतन्यरूपिणः क्वास्ति मे क्षतिः ॥ ५१ ॥

देहात्मभ्रमसंक्षुब्धैर्जनैस्सह वसन्नपि ।
अभिन्नात्मैकनिष्ठोस्मि पश्य धैर्यं महाद्भुतम् ॥ ५२ ॥

अतिसंकटकालेऽपि तत्वनिम्यचिदम्बरम् ।
न विस्मरति मे चित्त पश्य धैर्यं ममाद्भुतम् ॥ ५३ ॥

आबालपण्डितैस्सर्वैस्सत्यवद्दृश्यते जगत् ।
नास्तीत्येव मया त्यक्तं पश्य धैर्यं ममाद्भुतम् ॥ ५४ ॥

पश्यन्तं पूर्णमात्मानं प्रणष्टाज्ञानकश्मलम् ।
न स्पृशन्ति मुनिं दोषाः महाग्निमिव मक्षिकाः ॥ ५५ ॥

कर्माराध्याश्च ये देवाः ये चोपास्याः पुरा मया ।
तेषामध्यात्मभूतस्सन्नुपास्यो निश्चितोऽस्म्यहम् ॥ ५६ ॥

श्रेयश्च प्रत्यवायं च वरणाकरणोद्भवम् ।
ज्ञात्वा मया क्रियास्त्यक्ताः पश्य धैर्यं ममाद्भुतम् ॥ ५७ ॥

अकर्त्रात्मैकरूपस्य वैदिकं कर्म जानतः ।
अज्ञाधिकारि देवेभ्यः किं भयं निर्भयस्य मे ॥ ५८ ॥

अज्ञैकशरणा देवाः स्वकीयं मन्त्रजानतः[1] ।
मम भीताः पलायन्ते गरुडस्येव पन्नगाः ॥ ५९ ॥

वैदिकं मंत्रजानन्तं[2] अज्ञाहं कर्मचोदना ।
त्यजत्यज्ञानगणिका कुष्ठोपस्थेव कामिनी ॥ ६० ॥

वेदातीतस्य विदुषः श्रुतिमूर्ध्नि प्रनृत्यतः ।
शिष्टेभ्यश्श्रुतिदासेभ्यः किं भयं निर्भयस्य मे ॥ ६१ ॥

अहं कर्तेति दुर्बुद्धिं न कुर्यान्मोहतोऽपि वा ।
यदि कुर्यात्प्रमादेन पतत्येव न संशयः ॥ ६२ ॥

नाहं कर्तेति सद्बुद्धिं सदा कुर्याद्विचारतः ।
यदि कुर्याद्विचारेण मुक्त एव न संशयः ॥ ६३ ॥

एवं स्थिते परे तत्वे विश्वनिश्वासपूरके ।
अकर्त्रात्मैकरूपेऽस्मिन्वृथा माया विजृम्भते ॥ ६४ ॥

अकार्यकरणव्यग्रं कुर्वाणान्कार्यलंपटान् ।
दुष्टशिष्टजनान्माया वंचयत्यनिशं वृथा ॥ ६५ ॥

जपहोमपराः केचिच्छिलामृद्दारुपूजकाः ।
क्षपयन्ति वृथा कालं मायया वंचिता नराः ॥ ६६ ॥

अश्वत्थपिचुमन्दांश्च ह्यन्योन्योद्दामकामुकाः ।
विसृज्य लज्जां विभ्रान्त्या वृक्षान्मूढा उपासते ॥ ६७ ॥

शिलामृद्दारुचित्रादिदेवतादर्शनोत्सुकाः ।
शीतवातातपश्रान्ताः पर्यटन्त्यपरे महीम् ॥ ६८ ॥

---

1., 2. अत्र समासश्चिन्त्यः ।

केचित्पशून्निहिंसन्ति स्वार्थं भूतनिहिंसकाः ।
श्रुतेर्निवृत्तितात्पर्यमजानन्तोऽल्पबुद्धयः ॥ ६९ ॥

विप्रहोपासनाः केचिन्नामकीर्तनतत्पराः ।
श्रौतस्मार्तपराः केचित्तत्त्वं कोऽपि न विन्दति ॥ ७० ॥

अधीत्य वेदशास्त्राणि क्षुदरोपस्थलम्पटाः ।
पतन्ति वनितापीडादुर्बेल्ताः कामलम्पटाः ॥ ७१ ॥

दिवा कर्मपरा मूढाः पवित्राङ्गुल्यो भृशम् ।
रात्रौ दुर्मलभाण्डस्त्रीकामलम्पटतत्पराः ॥ ७२ ॥

नानुष्ठानविधिं मूढाः नोपासनविधिं विदुः ।
चरन्ति स्त्रीनिम्नद्वाररक्षासफलजीविताः ॥ ७३ ॥

स्मरन्तस्सस्पृशन्तश्च पश्यन्तश्च परस्परम् ।
नयन्ति पशुवत्कालं नास्तिकाः कामलम्पटाः ॥ ७४ ॥

स्रवन्मलपरिक्लिन्नं नवद्वारातिदारुणम् ।
कामिनीकायनरकं नाश्रयेद्ब्राह्मणः क्वचित् ॥ ७५ ॥

कक्षोपस्थशिरोनासाकेशसंकटसंकटम् ।
कामिनीकायदुर्वृक्षं नाश्रयेद्ब्राह्मणः क्वचित् ॥ ७६ ॥

मज्जेद्ध्यानले वापि पतेद्वा दुर्मलाघटे ।
न स्त्रीदुर्मलगात्रं तु संस्पृशेद्ब्राह्मणः क्वचित् ॥ ७७ ॥

वितस्तिमात्रां रज्जुं वा कण्ठे बध्वा तनुं त्यजेत् ।
न स्त्रीकण्ठसमाश्लेषमाकाङ्क्षेद्ब्राह्मणः क्वचित् ॥ ७८ ॥

अकीर्त्यङ्कुरदुर्बीजं कीर्तिवल्लिपरश्वधम् ।
पापपायः प्रपावृक्षं स्त्रीसङ्गं वर्जयेद्बुधः ॥ ७९ ॥

अन्तस्तापकरीं पुंसां बहिश्शीतकरीमिव ।
ललनां राजयक्ष्माभां श्रेयोर्थी दूरतस्त्यजेत् ॥ ८० ॥

पुरुषोच्छिष्टपर्णानि चालयन्तीमितस्ततः ।
चण्डवातोपमां कान्तां वर्जयेन्मतिमान्नरः ॥ ८१ ॥

स्त्रीसंगात्संकटं प्राप्ता रामरावणवासवाः ।
अतः स्त्रीसंगतिं धीरस्त्यजेत्कुक्षिमलं यथा ॥ ८२ ॥

सर्वदुर्मलमावालं गर्वानर्थकरण्डकम् ।
स्त्रीपिण्डं पिण्डभुक्सेव्यं न सेवेत बुधः कचित् ॥ ८३ ॥

विकारसूकराकीर्णां दोषकौलेयकावृताम् ।
कामिनीकायचण्डालवाटिकां ब्राह्मणस्त्यजेत् ॥ ८४ ॥

भ्रूविक्षेपादिचपलैर्नयनैर्नरकोन्मुखाः ।
पश्यन्तीतस्ततो भीताः ललनां पुरुषाधमाः ॥ ८५ ॥

मलमूत्रपरिक्लिन्ने स्त्रीबिले कामलंपटाः ।
रमन्ति ये नमस्तेभ्यस्साहसं किमतः परम् ॥ ८६ ॥

एवं स्त्रीलम्पटास्सर्वे पुत्रलालनतत्पराः ।
लौकिकं वैदिकं कर्म कुर्वन्तस्संसरन्त्यहो ॥ ८७ ॥

ब्राह्मणाः पशवः केचिद्ब्रह्मभूतमकल्मषम् ।
ज्ञानिनं न सहन्ते स्म राजहंसं बका इव ॥ ८८ ॥

अज्ञानमलपाक्रान्ता मूढास्त्वज्ञाननिर्मलम् ।
नांगीकुर्वन्त्यहो धीराः सूकरा इव चन्दनम् ॥ ८९ ॥

कलौ विज्ञानदौर्बल्यं प्रलपन्त्यात्मघातिनः ।
शिखिनो मुण्डिनो वापि दूरतस्तान् शववत्त्यजेत् ॥ ९० ॥

न तरंति प्रिया नावारूढास्संसारसागरम् ।
तृणस्तम्बाप्लवारूढा यथागाधतरङ्गिणीम् ॥ ९१ ॥

सत्यमेकं महात्मानं हृदयमेकमसत्तथा ।
अज्ञात्वायाप्यहो कष्टं संसरन्त्यतिदुःखिताः ॥ ९२ ॥

पुरुषापसदा एनमपश्यन्तो गतिं पराम् ।
इमं दोषं च चण्डाला इव सर्वानुपासते ॥ ९३ ॥

तान् दृष्ट्वा निपतेद्धोरे कामसर्पादिसंकटे ।
विषयापदसंकीर्णे कर्ममार्गे नरः क्वचित् ॥ ९४ ॥

वेदान्तमधुरालापशालिमोक्षाध्वसंकुले ।
विद्वान्मत्तगजाक्षुण्णे ज्ञानमार्गे चरेन्नरः ॥ ९५ ॥

अहो चण्डालरण्डेव विद्यानिर्जयतत्परा ।
भ्रामयत्यनिशं घोरा मर्त्येशानिव वेषधृत् ॥ ९६ ॥

तामविद्याविषलतां समूलां हेलया बुधः ।
संछिद्य ज्ञानखड्गेन पूर्णात्मा राजते ततः ॥ ९७ ॥

स्वभावात्कष्टदीनानां न सुखं कर्मयज्ञतः ।
दीनानामथ धीराणां सुखं विज्ञानयज्ञतः ॥ ९८ ॥

निवृत्तिभार्यासंयुक्तः संजातज्ञानपुत्रकः ।
दृढसद्गुणकोशास्सन्ब्राह्मणस्सत्कुलोद्भवः ॥ ९९ ॥

श्रद्धासद्धनसंपूर्णः दक्षो वेदान्ततत्त्ववित् ।
स्वकर्तव्येष्वप्रमत्तः धृत्युत्साहसमन्वितः ॥ १०० ॥

वैराग्याक्रोधसन्तोषक्षमाशौचदयार्जवम् ।
जितेन्द्रियत्वमेकान्तशीलत्वं च विचारणा ॥ १०१ ॥

एवं दशविधज्ञानयज्ञायुधसमन्वितः ।
सर्वोऽयवसच्छिद्यकृतसर्वोपचारतः ॥ १०२ ॥

दोषक्लेशश्रवोवेगश्मश्रुपापनखानि च ।
मनोदशनमालिन्यमपाकृत्य महामतिः ॥ १०३ ॥

गुरुसद्भक्तिगंगाम्भःस्नाननिर्धूतकल्मषः ।
धृत्वा यो वसनं धैर्यं नैष्कर्म्यं चोत्तरीयकम् ॥ १०४ ॥

ब्रह्मचर्योपवीतस्सन् सम्यक्प्रज्ञाशिखो मुनिः ।
कृतार्थतीर्थाचमनसाधनत्वसमन्वितम् ॥ १०५ ॥

शरीरयज्ञशालायामात्माग्न्याधानदीक्षितः ।
ज्ञानयज्ञं प्रकुर्वीत ब्राह्मणो मोक्षकामतः ॥ १०६ ॥

पञ्चकोशविचाराख्यामन्त्रारम्भणरूपिणीम् ।
इष्टिं प्रथमतः कुर्वन्क्रमात्सर्वं समापयेत् ॥ १०७ ॥

अज्ञानपशुमालभ्य तद्वपारूपिणीं च यः ।
देहात्मभ्रान्तिमात्माग्नौ जुहुयात्तत्त्वविन्मुनिः ॥ १०८ ॥

अज्ञानपशुसंभूतं रागद्वेषाज्यमिश्रितम् ।
दृश्याभिधं हविश्शेषं चिरकुक्षौ भक्षयेन्मुनिः ॥ १०९ ॥

अविद्याधेनुसंभूतविषयाभिधसर्पिषा ।
मिश्रं बुद्धिसमिद्धोममात्माग्नौ पाचयेन्मुनिः ॥ ११० ॥

उपासनाविधिस्वाहाकारं कुर्वन्महामतिः ।
कर्मकाण्डं वषट्कृत्य स्वात्माग्निं तर्पयेन्मुनिः ॥ १११ ॥

सर्वात्मभावसत्पुण्यदीक्षावभृथमाचरेत् ।
स्वपादभक्तदीनेभ्यो दद्याद्विज्ञानदक्षिणाम् ॥ ११२ ॥

ब्राह्मणस्तपसा दीप्तो महान्तं यज्ञमाश्रितः ।
इहेह ज्ञानयज्ञेन रमते मुक्तिरम्भया ॥ ११३ ॥

शरीरयज्ञशालां तां प्रदहेत् ज्ञानवह्निना ।
प्रारब्धदीनविप्राय दद्यात्ता धीरधीर्मुनिः ॥ ११४ ॥

स्वतो नान्यदुपासीत शिवमात्मेति चिन्तया ।
किं कार्यं किमुपास्यं वा ब्राह्मणस्य विजानतः ॥ ११५ ॥

किं कृत्वा श्रेय आप्नोति किमकृत्वा भयं व्रजेत् ।
सर्वोपास्यः शिवोस्मीति स्थितश्चेद्ब्राह्मणः स्वयम् ॥ ११६ ॥

ईश्वरादिविराडन्तं विश्वं नास्तीति भावयेत् ।
विशिष्टमातृपितृजो यदि स्याद्ब्राह्मणः स्वयम् ॥ ११७ ॥

न सत्यं भावयेद्विश्वं दृश्यमानविवर्जितः ।
रसनां सर्पवत्पश्येद्यदीच्छेत्सुखमात्मनः ॥ ११८ ॥

जाग्रतं विभ्रमं सर्वं स्वप्नवद्भावयेद्धिया ।
आत्मानं सत्यमीक्षेत यदीच्छेच्छ्रेय आत्मनः ॥ ११९ ॥

इदंबुद्धिश्च बाह्यार्थेष्वहंबुद्धिस्तथात्मनि ।
प्रसिद्धा सर्वजन्तूनां विवादोऽत्र न कश्चन ॥ १२० ॥

भ्रान्ता अपि न कुर्वन्ति विवादं चात्मगोचरम् ।
स चात्मा नित्य इत्येव वैदिकानां मतं ध्रुवम् ॥ १२१ ॥

जगन्मिथ्यात्वमप्येतत्स्वप्नदृष्ट्यैव बोध्यते ।
साक्षित्वमात्मनश्शुक्तिदृष्ट्यैव प्रमितं तथा ॥ १२२ ॥

परप्रेमास्पदत्वेन परमानन्दरूपता ।
भेदशून्यत्वमप्यस्य व्योमदृष्टान्तसंमतम् ॥ १२३ ॥

इति तत्वमनालोच्य बह्वश्शोकसागरे ।
मग्नाश्चेद्ग्रन्थतत्वज्ञास्ततो दुःखतरं नु किम् ॥ १२४ ॥

पश्यन्तोऽद्वैतमात्मानमात्मारामा जितेन्द्रियाः ।
जगन्मिथ्येति निश्चित्य नृत्यन्ति श्रुतिमस्तके ॥ १२५ ॥

निधाय निश्चितालोचाटनं बोधमन्त्रतः ।
एकान्ते ब्राह्मणो नित्यं रमते मुक्तिरम्भया ॥ १२६ ॥

जगदादिर्जगद्रूपः जगदन्तास्मि केवलम् ।
मृत्यूपसेचनो नूनं यस्य ब्रह्मेति शासनः ॥ १२७ ॥

न विधिप्रतिषेधाभ्यां बध्यते स्वात्मतत्ववित् ।
न बध्यते कदाचिद्धि मत्तेभो बिसतन्तुभिः ॥ १२८ ॥

स्वभावविमलो धीरो दुःखपङ्कमलं स्पृशन् ।
कुलाये कीटवच्चित्रैस्संसरन्स्वं स्वतत्त्ववित् ॥ १२९ ॥

विचारकुशलब्रह्मशास्त्रसद्गुरुशिक्षितः ।
सर्वोपरि प्रकाशेत शाणोल्लिखितरत्नवत् ॥ १३० ॥

मानापमाननिर्मानः तेजस्वी तपसा ज्वलन् ।
एकरूपो विभासेत दीपवत्सर्वभासतः ॥ १३१ ॥

संस्कारोपाधिधिक्कारो बिम्बानन्दात्मनिर्वृतः ।
एकरूपो भवेद्विद्वान्हेमतामरसं यथा ॥ १३२ ॥

तापत्रयाग्निसन्तप्तो देही तत्संगिसंग्यपि ।
निर्दुःखो विचरेद्विद्वाञ्छीतलश्चन्द्रबिम्बवत् ॥ १३३ ॥

निषेधविधिसंत्यक्तो जनसङ्गविवर्जितः ।
नित्यतृप्तश्चरेद्विद्वानुत्सृष्टवृषभो यथा ॥ १३४ ॥

लौकिकैर्वैदिकैर्वापि संस्कारैः परिवर्जितः ।
उदासीनश्चरेद्विद्वान् शिरोविभ्रष्टकेशवत् ॥ १३५ ॥

वासनारसनिर्हीनस्संत्यक्ताज्ञानबन्धनः ।
निरालंबश्चरेद्विद्वान्वृक्षविभ्रष्टकेशवत् ॥ १३६ ॥

पवित्रेष्वपवित्रेषु देहेष्वापूर्य संस्थितः ।
निर्लेपो निरुपाधिस्सन् व्योमवद्भासते बुधः ॥ १३७ ॥

अज्ञानविपदुर्वृक्षविभ्रष्टः स्वात्मभूतले ।
निर्मूढरसन्मुनिस्तिष्ठेत्तरुविभ्रष्टकाष्ठवत् ॥ १३८ ॥

सर्वाधिष्ठानभूतस्सन्मिथ्याविश्वावभासकः ।
मिथ्याभूतमिदं सर्वं संपश्येन्मरुवारिवत् ॥ १२९ ॥

शृण्वन्नानाविधाकारान् शब्दान्वर्णानितस्ततः ।
निर्विकारमना विद्वान्विचरेद्बधिरो यथा ॥ १४० ॥

स्पृशन्नानाविधाकारान्स्पर्शान्सर्वानितस्ततः ।
निर्विकारो निरासक्तो वायुवद्विचरेद्बुधः ॥ १४१ ॥

पश्यन्नानाविधाकारान्विषयान्वनितादिकान् ।
निर्विकारस्तद्दृष्टिस्सन् गजवद्विचरेद्बुधः ॥ १४२ ॥

गृह्णन्नानाविधाकारान्रसान्सर्वानितस्ततः ।
निर्विकारो निरीहस्सन्सूर्यवद्विचरेद्बुधः ॥ १४३ ॥

जिघ्रन्नानाविधाकारान्गन्धान्सर्वानितस्ततः ।
अनासक्तमना विद्वान्विचरेद्भ्रमरो यथा ॥ १४४ ॥

अर्धोन्मीलितदृष्टिस्सन्क्षुद्रदृष्टिविवर्जितः ।
गंभीरहृदयो विद्वान्विचरेन्मत्तदन्तिवत् ॥ १४५ ॥

अर्चितः कुसुमैर्वापि क्षिप्तोऽङ्गारकणैरपि ।
एकरूपो बुधस्तिष्ठे पाषाणप्रतिमादिवत् ॥ १४६ ॥

उपलभ्यमपि या कामं मन्यु वाप्यतिभीषणम् ।
पूर्णदृष्टिर्महाधीरस्सहेतामृतवद्बुधः ॥ १४७ ॥

संपूर्णकान्तरूपस्सन्नानोपाधिवशादहम् ।
नानारूपो विभामीह चालिन्यातपदीप्तिवत् ॥ १४८ ॥

निन्दितो वन्दितो वापि पूजितस्ताडितोऽपि वा ।
क्षमयात्मरतिर्विद्वान्विचरेत तरुर्यथा ॥ १४९ ॥

आत्मारामः पूर्णकामस्तुष्टो विष्यात्मनिष्ठया ।
एकान्ते रमते विद्वान्कामिनीसक्तकामिवत् ॥ १५० ॥

निःस्पृहस्य प्रशान्तस्य चिन्मात्रानन्दात्मदर्शिनः ।
विदुषो राजते चित्तं विमलं गाङ्गवारिवत् ॥ १५१ ॥

संप्राप्तान्विषयान्सर्वानुत्सृज्य विषयातिगे ।
प्रत्यङ्मुखे सुस्थितोऽस्मीत्युपं पश्य मे वपुः ॥ १५२ ॥

प्रध्वस्तकर्मनिगळः प्रणष्टविषयस्पृहः ।
ब्राह्मणो रमते धीरः शृंखलामुक्तसिंहवत् ॥ १५३ ॥

न वेदान्न च शास्त्राद्वा न मूढालापतोऽपि वा ।
बिभेति तत्वविद्धीरः सिंहो हस्तिरवादिव ॥ १५४ ॥

सर्वभूतात्मभूतस्सन् सर्वानन्दावलोकनात् ।
नित्यतृप्तो भवेद्विद्वान्पुत्रराज्यान्वितो यथा ॥ १५५ ॥

स्वकार्यं काष्ठवत्पश्येन्मृत्युवत्परयोषितः ।
अमेध्यवत्परद्रव्यं कष्टं कर्म परित्यजेत् ॥ १५६ ॥

न कुर्यादिन्द्रियप्रीतिं न मनो वर्धयेद्बुधः ।
क्षुद्रोगं प्रशमं कुर्याद्भिक्षौषधनिषेवणात् ॥ १५७ ॥

भूतवत्पातयेद्देहं कर्माधीनगतिं बुधः ।
एतदर्थं मनस्तापं न कुर्यात्तु कदाचन ॥ १५८ ॥

परकीयानि दुःखानि स्वकीयानि विभावयेत् ।
ततो निवर्तते द्वेषः स्वस्मिन्निव परेष्वपि ॥ १५९ ॥

सुखानि परकीयानि स्वकीयानि विभावयेत् ।
ततो निवर्तते रागः सिद्धेच्छाया अनुद्भवात् ॥ १६० ॥

ज्ञाताहं सर्वलोकस्य पिण्डब्रह्माण्डरूपिणः ।
अतोऽहं सर्वसंपूर्णो व्यापको द्वैतवर्जितः ॥ १६१ ॥

जगज्ज्योतिरमूर्तं यज्जरामरणवर्जितम् ।
परिच्छेदत्रयोन्मुक्तं तद्ब्रह्माद्वयमस्म्यहम् ॥ १६२ ॥

चिदाकाशमहाकाशकल्पनिष्पापमव्रणम् ।
अनन्यपूर्णं पूर्णं यत्तद्ब्रह्माद्वयमस्म्यहम् ॥ १६३ ॥

अरूपं सर्वरूपावभासकं शून्यसाक्षि यत् ।
सर्वबुद्धिगुहाज्योतिस्तद्ब्रह्माद्वयमस्म्यहम् ॥ १६४ ॥

पिपीलिकादिब्रह्मान्तं मङ्गोगायतनं वपुः ।
कुतो द्वैतावकाशो मे स्वदेहावयवे यथा ॥ १६५ ॥

घटादिषु यथा तुल्या मच्चैतन्यावभासता ।
तथा देहेऽपि सा तुल्या क रागावसरो मम ॥ १६६ ॥

चित्स्वरूपः प्रकाशात्मा मनोवाचामगोचरः ।
अहमेको विभामीह प्रासादस्थप्रदीपवत् ॥ १६७ ॥

पिपीलिकादिब्रह्मान्तप्राणिभिश्चेष्टितानहम् ।
भासयन्भामि विश्वात्मा मध्याह्नार्कप्रकाशवत् ॥ १६८ ॥

चराचरजगज्जालविचित्रकलनाश्रयः ।
गन्धर्वनगराधारव्योमवद्भाम्यनाश्रयः ॥ १६९ ॥

न तमोऽहं न वा तेजः तमस्तेजःप्रकाशकः ।
नाप्यहं दृश्यमखिलं सर्वदृश्यावभासकः ॥ १७० ॥

न जगन्न मनो देहः परमार्थनिरूपणे ।
यदेवास्ति तदस्मीति विस्वरोऽस्मीह सांप्रतम् ॥ १७१ ॥

ब्रह्माण्डभाण्डमध्येऽहं पूर्णज्योतिर्महाकृतिः ।
निरपायो विभामीह कुंभान्तस्स्थप्रदीपवत् ॥ १७२ ॥

ब्रह्माण्डबाह्यदेशेऽपि परिपूर्णैकचिद्रसः ।
अक्षुद्रोऽहं विभामीह मग्नकुंभमहाब्धिवत् ॥ १७३ ॥

ब्रह्माण्डभाण्डरूपोऽहं चैतन्यानन्दसन्मयः ।
एक एव सदा भामि घटकुड्येषु सूर्यवत् ॥ १७४ ॥

यथा घटादिना सङ्गो ह्याकाशस्य न विद्यते ।
तथानेन शरीरेण मम सङ्गो न विद्यते ॥ १७५ ॥

तरङ्गबुद्बुदाकारैर्यथा भाति महोदधिः ।
देवतिर्यङ्मनुष्याद्यैस्तथा भामि निरामयः ॥ १७६ ॥

नानापललपिण्डेऽस्मिन्सर्वत्रैको यथाऽस्म्यहम् ।
नानाविधशरीरेऽपि ब्रह्माण्डेऽपि तथास्म्यहम् ॥ १७७ ॥

ब्रह्माण्डाख्यापवरके पिण्डवत्सर्वाश्रयो महान् ।
प्रत्यक्चितिर्विभामीह कोऽप्यहं निरुपद्रवः ॥ १७८ ॥

यथा मदीये पिण्डाण्डे न ममान्यस्माद्भयम् ।
तथा मदीये ब्रह्माण्डे न ह्यन्यस्माद्भयं मम ॥ १७९ ॥

दृश्यमस्तीत्यहन्दृष्ट्या दृश्यतोऽस्मि पुरार्दितः ।
दृश्यं नास्तीति दृग्दृष्ट्या सुखितोऽस्म्यथ नाचिरम् ॥ १८० ॥

अजरोऽहमनन्तोऽहमजस्सर्वावभासक ।
क्षुत्पिपासादिहीनोऽहं न मे रागादिसंगतिः ॥ १८१ ॥

अकर्ताऽहमभोक्ताऽहमसंगोऽहमहं शिवः ।
पूर्णानन्दोऽद्वयश्शुद्धो नित्यमुक्तो निराश्रयः ॥ १८२ ॥

अकर्तृत्वादभोक्तृत्वाद्दुःखलेशोऽपि नास्ति मे ।
यस्मादहं पूर्णमानन्दं चिन्मयामि समन्ततः ॥ १८३ ॥

प्रत्यहं सुप्तिसमये य आनन्दोऽनुभूयते ।
तं निश्चभूतमानन्दं मत्वात्मानमहं सुखी ॥ १८४ ॥

गृहेऽरण्ये सुतीर्थे वा विजने सजनेऽपि वा ।
अस्मादृशीह निश्चिन्तः निवसामि यथासुखम् ॥ १८५ ॥

पट्टणे वाथ पल्यां वा शून्ये हर्म्ये तथा वने ।
प्रारब्धप्रेरितो यत्र तत्र तिष्ठाम्यहं सुखी ॥ १८६ ॥

यद्यद्दृष्टं श्रुतं तत्तत्सर्वं ब्रह्मेति निश्चयात् ।
संमानेऽप्यवमाने वा समदृग्विचराम्यहम् ॥ १८७ ॥

अन्यदेहधनादीनां संयोगायोगयोरिव ।
स्वीयदेहधनादीनां संयोगायोगयोरपि ॥ १८८ ॥

असंगस्य न मे किंचिद्धीयते सर्वसाक्षिणः ।
मनसा यदि खेदो वा मोदो वा भवतीति चेत् ॥ १८९ ॥

अकर्तृत्वदृशोऽमोक्तुः किं गतं, किं ममागतम् ।
नहि तद्दर्शनादेव तत्संस्पर्शो भवेन्मम ॥ १९० ॥

गृहदाहपरिज्ञानाद्यथा दाहो न जायते ।
पश्यतो वा यथा शैत्यं चन्दनादीन्न जायते ॥ १९१ ॥

देहेन्द्रियमनःप्राणधर्मान्संपश्यतो मम ।
देहेन्द्रियमनोधर्मैर्भेदः कालत्रये नहि ॥ १९२ ॥

निरपायपदं प्राप्य सापायं त्यज्यते यथा ।
निरपायं परात्मानं ज्ञात्वा त्यक्तं भवेत्तरत् ॥ १९३ ॥

गृहस्थो वा परिव्राड्वा पूर्णे दृष्टे गतज्वरः ।
निरावरणनत्नार्यो नितरां राजते बुधः ॥ १९४ ॥

गृहिवेषो यतेर्वेषोऽप्यतिवर्णाश्रमोऽस्तु मे ।
देहधर्मानिमान्पश्यन् निवसामि यथासुखम् ॥ १९५ ॥

वर्णाश्रमसमाचारो देहस्यैव न चात्मनः ।
इति निश्चित्य सद्बुध्या निवसामि चरामि वा ॥ १९६ ॥

न तनोमि वृथाशास्त्रपाठव्यसनमादरात् ।
अकर्तृत्वधियैवाह सुखितोऽस्मि निरन्तरम् ॥ १९७ ॥

यतस्तत्त्वमसीत्येव गुरोरश्रुत्या प्रदर्शितम् ।
ब्रह्माहमिति निश्चित्य निवसामि यथासुखम् ॥ १९८ ॥

सकलं खल्विदं ब्रह्म ब्रह्मणोऽन्यन्न किंचन ।
इति चिन्तयतो मेऽद्य हृदये कापि दुःखिता ॥ १९९ ॥

पुत्रदाराद्यनित्यादि नश्वरं सर्वमीक्षितुः ।
आसन्नमरणे देहे कथं स्याच्छामनं मम ॥ २०० ॥

समानाः स्वर्गतास्सर्वे न्यूना येप्यधिका मताः ।
अन्तराळविलम्बस्य जीविते का धृतिर्मम ॥ २०१ ॥

कुष्ठमूषिष्ठसर्वांगकुस्त्रियाऽलिंगितः पुमान् ।
यथा तां नाशयित्वाऽन्यां सुन्दरीं प्राप्य मोदते ॥ २०२ ॥

संसृत्याख्यमहादुष्टवनिताऽलिङ्गितोऽप्यहम् ।
नाशयित्वा च तामन्यां मुक्तिकान्तां भजाम्यहम् ॥ २०३ ॥

जीवितं नाभिवाञ्छामि नाभिवाञ्छामि वा मृतिम् ।
अवर्जनीयमेव स्यादुभयं दैवयन्त्रितम् ॥ २०४ ॥

आगामिदेहराहित्यलक्षणा मुक्तिरुत्तमा ।
ब्रह्मात्मनिश्चयात्सिद्धा देहो जीवतु वा न वा ॥ २०५ ॥

निषेधाच्च च भीतोऽहं न चाहं विधिकिंकरः ।
निषिद्धं विहितं चापि न करोमि यतः श्रमः ॥ २०६ ॥

कर्तृत्वविभ्रमो येषां सत्यानन्दचिदात्मनि ।
निषेधविधिसंबन्धस्तेषामेव न चात्मनि ॥ २०७ ॥

संसारनाशकामस्य देहनाशो गुणायते ।
वृश्चिकच्छेदकामस्य पुच्छच्छेदो यथा तथा ॥ २०८ ॥

ब्रह्मानन्दसमुद्रेऽस्मिन्निमग्नो नितरामहम् ।
किंवा शृणोमि पश्यामि किं गृह्णामि त्यजामि किम् ॥ २०९ ॥

प्रारब्धत्रितयं भुञ्जन्दुःखं वा यदि वा सुखम् ।
गृहान्तरविपत्त्या मे संपत्त्या वा न किंचन ॥ २१० ॥

ब्रह्मकल्पास्त्वसंख्याता बुद्बुदोपमतां गताः ।
तथैतद्देहसंपत्त्या विपत्त्या च न किंचन ॥ २११ ॥

जन्ममृत्युप्रवाहेऽस्मिन्मम संसारसागरे ।
मज्जनोन्मज्जनं पूर्वमज्ञानादागतं बहु ॥ २१२ ॥

इदानीमात्मविज्ञप्तिमहानन्दं समाश्रितः ।
तीर्त्वा भवार्णवं, प्राप्य निर्वृतोऽस्मि परं पदम् ॥ २१३ ॥

भूतं वा वर्तमानं वा भावि वा यन्मनोमयम् ।
आब्रह्मस्तम्बपर्यन्तदेहजातं यदस्ति तत् ॥ २१४ ॥

ममैव भोगायतने का प्रीतिः स्वकलेवरे ।
सर्वानर्थकरी प्रीतिर्देहे मास्तु कदापि मे ॥ २१५ ॥

रोगकृमिसमाकीर्णे नवरन्ध्रस्रवन्मले ।
शरीराख्ये व्रणे प्रीतिः येषां तेभ्यो नमो नमः ॥ २१६ ॥

देहतत्सङ्गिविषये या प्रीतिरविवेकिनाम ।
सा चेदध्यात्मविद्यायां को न मुच्येत बन्धनात् ॥ २१७ ॥

सारायं पश्यतो विश्वं वह्निर्दीपशिखामिव ।
विवेको यदि नो चित्ते कोऽन्यो मूढतरस्ततः ॥ २१८ ॥

अहमेव जगत्स्रष्टा मय्येव प्रविलीयते ।
मद्भासैव जगद्भाति मत्तोऽन्यो न हि विद्यते ॥ २१९ ॥

रज्ज्वां सर्पभ्रमो यस्य निवृत्तो वापि कस्यचित् ।
अन्यभीत्या यथा भीतिः लोके तस्य न विद्यते ॥ २२० ॥

कालत्रयेऽपि मद्दृष्ट्या प्रपञ्चो नास्ति तस्य मे ।
अन्यदृष्ट्या प्रपंचश्चेत्किं भयं मम विद्यते ॥ २२१ ॥

देहात्मवासना त्याज्या सर्वानर्थकरी सदा ।
यथाजन्म यथामृत्युः पुनस्संसारसंगतिः ॥ २२२ ॥

यादृश्यन्यशरीरेषु नीचेषु च महत्सु च ।
तादृशी भावना मेऽद्य वर्ततां कुकलेवरे ॥ २२३ ॥

अहमेव जगत्सर्वं मत्तोऽन्यत् नहि किंचन ।
इति चेन्निश्चयो मेऽद्य द्वैताभावात्कुतो भयम् ॥ २२४ ॥

सात्त्विकं राजसं मूर्खं तामसं वाऽथ पण्डितम् ।
यदि मां पामरा ब्रूयुः किं गतं किमनामयम् ॥ २२५ ॥

स्तुतो वाऽथास्तुतो वापि तावानर्थस्स एव हि ।
निन्दां स्तुतिमकुर्वाणः समदृष्टिश्चराम्यहम् ॥ २२६ ॥

मूढाः स्तुवन्तु निन्दन्तु यथेच्छं प्रलपन्तु वा ।
पूर्णस्य मम का हानिः शलभैरिव दन्तिनः ॥ २२७ ॥

गंगादिमूत्रसंस्पृष्टघटयोगाद्यथाम्बरे ।
गंगादिमूत्रसंस्पृष्टदेहयोगात्तथा मयि ॥ २२८ ॥

न शुद्धिर्नाप्यशुद्धिर्वा नित्यशुद्धे चिदात्मनि ।
शुध्यशुद्धिद्वयं त्यक्त्वा ह्युदासीनश्चराम्यहम् ॥ २२९ ॥

घटे भग्नेऽप्यभग्ने वा यथा व्योम्नोऽविकारिता ।
देहे भग्नेऽप्यभग्ने वा तथा मेप्यविकारिता ॥ २३० ॥

पवित्रे वाऽपवित्रे वा देशे देहः पतत्वयम् ।
पतने चाप्यपतने द्रष्टुर्मम न किंचन ॥ २३१ ॥

नाहं भीतोऽस्मि मरणान्न वा तुष्टोऽस्मि जीवनात् ।
एकादशशरीराणि सुनष्टानि गतानि मे ॥ २३२ ॥

पिपीलिकादिमर्त्यान्तं मरणं पश्यतां निशम् ।
किं दुःखं ब्रह्मनिष्ठानां कुकलेवरसंक्षयात् ॥ २३३ ॥

आगामिदेहराहित्ये सिद्धे ब्रह्मात्मनिश्चयात् ।
कैवल्यादक्षयादन्यन्ममात्र किमु शिष्यते ॥ २३४ ॥

इच्छानिच्छापरेच्छाख्यप्रारब्धविहितं फलम् ।
समदृष्ट्यैव भुञ्जानः उदासीनश्चराम्यहम् ॥ २३५ ॥

मतलोपमधुर्यानः सावधानो रथी यथा ।
औदासीन्यमते ह्येवं सावधानो वसाम्यहम् ॥ २३६ ॥

यथाऽन्धः कामिनीरूपमपश्यन्नामगौरवात् ।
प्रवृत्तोऽस्मि तथैवाहं भोगे प्रारब्धगौरवात् ॥ २३७ ॥

ब्रह्मशास्त्रस्य तात्पर्यं सङ्गत्यागे समाप्यते ।
तस्मात्सङ्गपरित्यागं मनसा कृतवानहम् ॥ २३८ ॥

अथवा कर्मवेगेन शुभं वा यदि वाऽशुभम् ।
कुर्वतोऽपि न मे बन्धो नित्यमुक्तचिदात्मनः ॥ २३९ ॥

ब्रह्मनिरस्तसर्वदेहेषु शुद्धाशुद्धेषु वस्तुषु ।
चन्द्रिकेव विभात्येव समचित्तो भवाम्यहम् ॥ २४० ॥

तापत्रयानलज्वालाज्वलितं कोशमन्दिरम् ।
उत्सृज्य शीतलं स्वात्मसलिलं समुपाश्रये ॥ २४१ ॥

अथेमं दग्धसंसारमसारं सारवर्जितम् ।
असन्त्रस्तप्रशंसन्तं मन्त्रवत्संत्यजाम्यहम् ॥ २४२ ॥

मनोमत्तगजेन्द्रस्य विषयारण्यचारिणः ।
करोम्यद्यैव मे धैर्याद्दृढमालानमुत्तमम् ॥ २४३ ॥

असंप्रेक्ष्यैव च प्रेक्ष्यानमुक्तान्प्रेक्ष्यमेव च ।
यथेच्छाचारसंपन्नो निर्विकल्पश्चराम्यहम् ॥ २४४ ॥

क्षुद्व्याधेः प्रशमं कुर्वन् भिक्षौषधनिषेवणात् ।
विभ्रमन् जगलश्यन्धसन्नेव चराम्यहम् ॥ २४५ ॥

चैलमजचर्मं वल्कं वा दुकूलं शीतवारणम् ।
कुशान् वसानो यदि वा सतुष्टो विचराम्यहम् ॥ २४६ ॥

शुद्धात्माद्वैततत्त्वार्थनिष्ठाविध्वस्तसंशयः ।
त्यक्तव्यमथ भोक्तव्यमुत्सृज्य विचराम्यहम् ॥ २४७ ॥

अथ मां मर्कटा मूढा यदि निन्दन्त्यकर्मठम् ।
स्तुवन्तु मम का हानि तां मायां भावयाम्यहम् ॥ २४८ ॥

अनुभूतानि चान्यानि स्वप्नवत्संसृतिभ्रमम् ।
उत्सृज्य सुस्थितप्रज्ञः स्वात्मतत्त्वे स्थितोऽस्म्यहम् ॥ २४९ ॥

मयि यन्नास्ति तन्नास्ति देहोऽहं वस्तुतो नहि ।
हेयादेयविनिर्मुक्तः स्वात्मतत्त्वे स्थितोऽस्म्यहम् ॥ २५० ॥

क्षुत्पिपासे यदा स्यातां तदा वीथ्यां गृहाङ्गणे ।
पाणियुग्मे निपतितं यत्तदश्नन्वसाम्यहम् ॥ २५१ ॥

अथवा शीतवातादिपीडा मां बाधते यदि ।
शून्यालये वा भूगर्ते गुहायां वा वसाम्यहम् ॥ २५२ ॥

अतीतमस्मरन्धीरो भावि चाप्यविचारयन् ।
वर्तमानमशेषन्तु हसन्पश्यंश्चराम्यहम् ॥ २५३ ॥

अन्तर्धीरो बहिर्दीनः स्वतश्शुद्धो बहिर्मलः ।
अन्तस्तुष्टो बहिः क्लिष्टो मूढवच्च चराम्यहम् ॥ २५४ ॥

अन्तरेको बहिर्नाना हृदि बुद्धो बहिर्जडः ।
अन्तस्त्यागी बहिस्संगी विचरामि यथासुखम् ॥ २५५ ॥

नाहं सर्वमिति भ्रान्त्या सर्वैर्नास्मि दुःखितः ।
अहं सर्वमिति ज्ञात्वा सर्वत्र सुखितोऽस्म्यहम् ॥ २५६ ॥

सुप्तिर्बीजांकुरस्वप्नो जाग्रत्स्वप्नविभ्रमः ।
त्रितयं मयि मिथ्येति संपश्यन्निर्भयोऽस्म्यहम् ॥ २५७ ॥

मनोविरचितं सर्वं मनोमायाविनिर्मितम् ।
मायेयं मयि मिथ्येति संपश्यन्निर्भयोऽस्म्यहम् ॥ २५८ ॥

ब्रह्मभूतस्य मे नित्यमवर्णस्य क्व वर्णता ।
आश्रमातीतरूपस्य क्व गृहाश्रमिता मम ॥ २५९ ॥

शिखायज्ञोपवीतं किं किं स्नानं किं च तर्पणम् ।
किं संध्योपासनं वा मे देहकर्मसाक्षिणः ॥ २६० ॥

किं गार्हस्थ्यं कलत्रं किं पुत्रः कश्च सहोदरः ।
का माता कः पिता वा मे ह्यद्वयानन्दरूपिणः ॥ २६१ ॥

सर्वक्रियाभिराराध्यस्वरूपस्य ममाधुना ।
निष्क्रियैकात्मरूपस्य कर्तव्यं किमतः परम् ॥ २६२ ॥

सर्ववेदान्तवेद्यस्य ब्रह्मरूपस्य मेऽधुना ।
सुज्ञातैकात्मतत्त्वस्य श्रोतव्यं किमतः परम् ॥ २६३ ॥

सर्वमन्तव्यरूपस्य ह्यचिंत्यस्यात्मनो मम ।
निस्संशयप्रकाशस्य मंतव्यं किमतः परम् ॥ २६४ ॥

सर्वैर्ध्येयस्वरूपस्य निर्द्वंद्वस्य ममात्मनः ।
ध्यानाऽशक्यस्वरूपस्य ध्यातव्यं किमतः परम् ॥ २६५ ॥

सर्वभूतान्तरस्थस्य सर्वज्ञेयात्मनो मम ।
नित्यविज्ञानरूपस्य ज्ञातव्यं किमतः परम् ॥ २६६ ॥

चिरायोपनिषद्देवी श्रीसूक्त्या सुविचारिता ।
मया यतोऽधुना लब्धमात्मभूतं परं सुखम् ॥ २६७ ॥

मनःकमठसंक्षुब्धं चित्तमीनविचालितम् ।
क्रोधनक्रचयाकीर्णं वासनाजंतुसंकुलम् ॥ २६८ ॥

लोभफेनादिदुस्पृश्यं कामशैवालसंकटम् ।
रोगबुद्बुदसंकीर्णं जन्ममृत्युतरङ्गकम् ॥ २६९ ॥

मोहक्षारादिदुस्सर्पं दैन्यग्राहातिदारुणम् ।
आशावालुकमत्युग्रं पापदुष्पङ्कपङ्किलम् ॥ २७० ॥

कालालयमहाघोरवडवानलभक्षितम् ।
अगाधदुःखसलिलप्रवाहपरिपूरकम् ॥ २७१ ॥

हाहाकारमहाघोषं मायावेलं मदोन्नतम् ।
क्रियानौकाश्रयानेकमज्जज्जनविभूषितम् ॥ २७२ ॥

संसाराम्बुनिधिं तीर्त्वा प्रज्ञानौकाममात्ययः ।
मोक्षानन्दं परं पारं प्राप्तोऽद्य सुखिनोऽस्म्यहम् ॥ २७३ ॥

मनुष्योऽहमिति भ्रान्तिर्यथाभून्मे दृढा पुरा ।
ब्रह्मैवाहमिति प्रज्ञा तथाद्याभूदहो तपः ।
कर्ताहमेव भोक्ताहमिति मेऽभूदहो तपः ॥ २७४ ॥

यद्यत्कृतं मया कर्म वैदिकं लौकिकं पुरा ।
तत्सर्वमधुनात्माभूदहो मे परमं तपः ॥ २७५ ॥

शैवा वा वैष्णवाश्शाक्ताः कर्मठाः कमठोपमाः ।
त्यजन्तु मां ब्रह्मभूतं वेतालमुत बालकम् ॥ २७६ ॥

भ्रमात्पूर्वं यमं गच्छेत्पुनर्भूत्वा पुनर्मृतः ।
अकर्त्रात्मस्वरूपेऽस्मिन् स्थितोऽस्मि विगतभ्रमः ॥ २७७ ॥

ज्ञानतोऽज्ञानतो वापि यत्पाप समुपार्जितम् ।
यत्पुण्यं तद्द्वय नष्टमकर्त्रात्मविनिश्चयात् ॥ २७८ ॥

ब्रह्मविद्ये नमस्तेऽस्तु त्वां मामेव विभावये ।
त्वत्प्रसादात्कृतार्थोऽहं तीर्त्वा संसारसागरम् ॥ २७९ ॥

जीवोयं ब्रह्म नाभूत्किं न किं वेदान्तशास्त्रकम् ।
नास्ति किं सद्गुरुर्लोके वृथाहो ब्राह्मणा हता ॥ २८० ॥

मत्तोऽन्यद्भावितं विश्वं भारोभूत्तत्पुरा मम ।
स्वात्मरूपं न भारोभूद्भुक्तमन्नमिवाधुना ॥ २८१ ॥

एकदेहात्पृथग्भूतस्सर्वदेहेष्ववस्थितः ।
एकदेहात्मधीहीनः सर्वदेहे वसाम्यहम् ॥ २८२ ॥

विमुच्यैकगृहाध्यासं जगदेकगृहोऽस्म्यहम् ।
अहो सर्वात्मसाम्राज्यसुखं को नाम वर्णयेत् ॥ २८३ ॥

जगदेकगृहं मत्वा मतिं मुक्त्वा जगद्गताम् ।
कुटुंबीव जगद्देहे स्वतन्त्रो विचराम्यहम् ॥ २८४ ॥

अज्ञानपुनरुत्थानस्वप्नशून्यसुषुप्तिवत् ।
परिपूर्णपरानन्दरूपा मूर्तिर्विभाति मे ॥ २८५ ॥

जन्मरोगजरापीडामृतिभीतिविवर्जितः ।
अशरीरो विमुक्तोऽस्मि ह्यशरीर इति श्रुतेः ॥ २८६ ॥

अशनायापिपासादिपीडकार्यविवर्जितः ।
अप्राणोऽहं विमुक्तोऽस्मि ह्यप्राणो हीति शास्त्रतः ॥ २८७ ॥

शोकमोहभयक्रोधसुखदुःखविवर्जितः ।
अमनास्सन्विमुक्तोऽस्मि ह्यमना इति शासनः ॥ २८८ ॥

पुण्यपापविमिश्रादिक्रियासङ्गविवर्जितः ।
अकर्मा सन्विमुक्तोऽस्मि ह्यसंगो हीति शास्त्रतः ॥ २८९ ॥

प्रियमोदप्रमोदादितमोवृत्तिविवर्जितः ।
अतमास्सन्विमुक्तोऽस्मि भूयश्चान्त इति श्रुतेः ॥ २९० ॥

अविद्यादुर्निशापाये दृश्यवेतालसंक्षये ।
निर्मेघसातपाकाशसमो मुक्तोऽस्मि निर्भयः ॥ २९१ ॥

मूलाज्ञानदिनापाये कर्मधर्मादिसंक्षये ।
सज्योत्स्ननिर्मलाकाशसमो मुक्तोऽस्मि निर्ज्वरः ॥ २९२ ॥

शीतांशोरथ चोष्णांशोः प्रकाशो यः प्रकाशते ।
निर्बिम्बो निष्प्रपञ्चश्च तत्तुल्यो मुक्तिभागहम् ॥ २९३ ॥

अहमेवाखिलं दृश्यं दृश्येऽस्मिन्निर्मलोऽस्म्यहम् ।
अहमेव परं ब्रह्म ब्रह्मैवाहं न संशयः ॥ २९४ ॥

प्रसादाद्दक्षिणामूर्तेः श्रुत्याचार्यप्रसादतः ।
स्वानुभूत्याप्यहं ब्रह्मेत्येवं मे दृढनिश्चयः ॥ २९५ ॥

विदितं दृश्यमिथ्यात्वं विदितं ब्रह्मचिद्घनम् ।
विदितं वैदिकं कर्म वेदनीयमितोऽस्ति किम् ॥ २९६ ॥

प्रत्यग्ब्रह्मैक्यसंप्रज्ञाचण्डसूर्यप्रबोधनात् ।
अहोऽविद्यानिशा घोरा सुप्रभाता ममाधुना ॥ २९७ ॥

एतावत्परमं श्रेयोहेतुविज्ञानवैभवम् ।
वेदान्तवैभवं वापि को नु वर्णयितुं क्षमः ॥ २९८ ॥

इत्येवं त्रिशतश्लोकैर्मम तत्वमसंशयम् ।
प्रोक्तं तद्वियवाक्यार्थमवधार्य सुखी भव ॥ २९९ ॥

परहंसकुलोद्भूतवासुदेवाख्यभिक्षुणा ।
कृतोऽस्तु दक्षिणामूर्तिविलासो विदुषां मुदे ॥ ३०० ॥

इति श्रीवासुदेवानन्दसरस्वतीविरचितः श्रीदक्षिणामूर्तिविलासः संपूर्णः ॥



ॐ

# ॥ ब्रह्मानन्दविलासः ॥

श्रीपरमहंसशाश्वतानन्दस्वामिविरचितः



नत्वा गुरुवरचरणान्
नानामोहान्धकारखरकिरणान् ।
ब्रह्मानन्दविलासं
ब्रह्मनदीड्यं करोमि सोल्लासम् ॥ १ ॥

हित्वा दृश्यात्ममतिं
मत्वा प्रत्यञ्चमद्वितीयचितिम् ।
त्यक्त्वा विषयाभिरतिं
धृत्वोदास्ते मुनिर्निश्चितात्ममतिम् ॥ २ ॥

निर्मूलितविषयाशा
निस्त्रैगुण्यात्मरमणबद्धाशाः ।
शान्तीभवद्दशाशाः
शान्ता भुवि शेरते गलत्पाशाः ॥ ३ ॥

मायाकादम्बिन्यां
वर्षन्त्यामण्डबुद्बुदानि मुहुः ।
लीनान्युत्पन्नानि
स्वात्मनि पश्यन्नुदास्त इह कोपि ॥ ४ ॥

गुरुचरणकमलनावा
तीर्त्वा मोहार्णवं महायोगी ।
पूर्णो वीक्ष्योदास्ते
विषयविशांभोधिमग्नमूर्खौघम् ॥ ५ ॥

निष्कलनिष्क्रिय-
निर्गुणनित्यानन्दैकरसमहादेवे ।
नित्यं निलीनभावा
नयन्ति दिवसान्महानुभावा हि ॥ ६ ॥

निगमशिरोनिष्णातो
निरुपमनैस्पृह्यकवचितस्वान्तः ।
विहरत्यगाधबोधो
विश्वाधिकचरणसरसिजासक्तः ॥ ७ ॥

ममकाराहंकारौ
महिळाकनकाङ्गगोचरौ मुक्त्वा ।
माद्यत्यात्मारामो
महामनाः कोपि परमहंसमणिः ॥ ८ ॥

अन्नमयादिममा-
नन्दमयान्तं स्फोरयन् शिवः कोशम् ।
अहमित्यवबुद्ध्यास्ते
हसन् जनं मोहसंकुलं मौनी ॥ ९ ॥

जननीजनकसहोदर-
कळत्रकनकादिपाशमुच्छिद्य ।
क्रीडति विरतिकरेण्वा
कृपया शंभोर्यमीन्द्रकरिकलभः ॥ १० ॥

सत्यसुखबोधसान्द्रे
समरससंपूर्णशाश्वतानन्दे ।
सर्वागमान्तसारे
साक्षिणि सान्द्रे सदावलीयेऽहम् ॥ ११ ॥

बधिरान्धमूकजडव-
द्बाह्यव्यवहारबाह्यभावानाम् ।
ब्रह्मानुभूतिलहरी-
बहळितमनसां भवेद्भवो भर्ता ॥ १२ ॥

अद्वयपरमशिवामृत-
मंगलमायीय हरति मोहतृपम् ।
कोपि यमिसार्वभौमः
कोरकितानन्दबोधमर्वस्तः ॥ १३ ॥

शिव शिव शिवानुभूत्या
शिथिलितसंमोहविलसितो योगी ।
शीतकरशीतलान्तः-
करणशीतोष्णसमदृगध्यास्ते ॥ १४ ॥

निष्कामो निष्क्रोधो
निर्लोभो निर्मदश्च निर्मोहः ।
निर्मत्सरो यतीन्द्रो
नित्यानन्दो यतिर्जयति ॥ १५ ॥

विगलितदेहाहंतो
विद्यासंपन्नपरशिवाहन्तः ।
निर्धूतकनककान्तो
निर्वृतिसर्वस्वभाजनं शान्तः ॥ १६ ॥

सन्यस्तसर्वकर्मा
धन्यस्तरुणेन्दुचूडरतिशर्मा ।
विन्यस्तविविधनर्मा
सुन्यस्तमना मुनिर्महाशर्मा ॥ १७ ॥

कुर्वंति सौहार्दं वा
दौरात्म्यं वा मुहुर्मुहुर्जन्तौ ।
साम्यं कलयन्नास्ते
साक्षिशिवात्मैकबोधनिस्तन्द्रः ॥ १८ ॥

मायामत्सरविकलै-
र्मोधनमारारिभेददूरगतः ।
अतिवाहयन्ते दिवमा
अखण्डचैतन्यसंश्रयैर्यतिभिः ॥ १९ ॥

अजरामराभयात्मनि
हर्षविषादानभिज्ञविज्ञेये ।
लीनान्तरङ्गवृत्तिनि
लिखितप्रतिमेव विद्यते मौनी ॥ २० ॥

मुमुदिपुरानन्दाब्धौ
मुञ्चन् वर्णाश्रमादिनिर्बन्धम् ।
प्राप्तपरहंसभावः
प्राज्ञः परबोधढौकितो जयति ॥ २१ ॥

कान्ताहेम्नोर्विमुखो
वान्ताशन इव शुनो भृशं शान्तः ।
भ्रान्तश्च कोप्यगासा
दान्तः पर्यटति शून्यसम्भ्रान्तः ॥ २२ ॥

अतिलंघ्य विधिनिषेधा-
गमयाथात्म्यबोधलीढमनाः ।
अनधूतविषयगन्धो
हन्त पुरारेर्दयाबलादस्मि ॥ २३ ॥

शिवकरुणैव कोपि
श्रीविलसितमखिलमगणयन् धीरः ।
शिशुरिव विशुद्धभावः
शिथिलितमानो विराजते मौनी ॥ २४ ॥

निर्धूतनिखिलकर्मा
निरवधिकानन्दबोधवृतशर्मा ।
गुरुकरुणाकृतमर्मा
गूढं पर्यटति कोपि शमधर्मा ॥ २५ ॥

तृणगणितस्वाराज्यः
प्रत्यन्तावृतबोधसाम्राज्यः ।
सज्जनवृन्दपूज्यो
जयति मुनिश्शान्तिचातुरीराज्यः ॥ २६ ॥

विष इव विषये विमुखो
विद्यासाम्राज्यमनुभवन्नेकः ।
न जिहासति नोपा-
दित्सति रूपं नाम वा मौनी ॥ २७ ॥

निन्द्यो वा वन्द्यो वा
देहो नात्मेति निश्चितस्वान्तः ।
पर्यटति बालवद्वा
पिशाचवद्वापि कोपि परहंसः ॥ २८ ॥

क्वचिदाडितो जनौघैः
क्वचन खलैर्निन्दितो हसन्मूकः ।
क्रीडति परचिद्गहने
कृतान्तपरिपन्थिकल्पया योगी ॥ २९ ॥

पात्रितपाणिपुटानां
वमनितहरितां विनीतरागाणाम् ।
शोच्यः स्वराडपि स्यात्
शुद्धचिदानन्दचेतसां यमिनाम् ॥ ३० ॥

स्वपराभिमानहीनः
स्वात्मानन्दांबुधौ मठा मग्नः ।
कुहचिद्गायति नृत्यति
कुत्रचिदानन्दनिर्भरः शेते ॥ ३१ ॥

अस्तमितभेदमोहै-
रवधूतविशेषविषयसंसर्गैः ।
उदभावि परमहंसै-
रुन्मस्तकवस्तुसंविदानन्दैः ॥ ३२ ॥

सद्धनमानन्दघनं
बोधघनं विधुतलौकिकापघनम् ।
अहंशाहं भगवद्बु-
द्धयावरभामनं शिवं शान्तम् ॥ ३३ ॥

कल्याणाकल्याणे
क्रिये निजाज्ञानजृंभिते मुक्त्वा ।
पूर्णानन्दसदाशिव-
पुष्कलबोधो विराजते योगी ॥ ३४ ॥

ब्रह्माण्डपण्डजलधि
ब्रह्मात्मैक्यानबोधबडवाग्नौ ।
जुह्वति कतिचिद्धीरा
जुह्वा बुद्ध्या यमीश्वराध्वरिणः ॥ ३५ ॥

विदुषि गवि करिणि शुनि च
श्वपचे समबुद्धयः शिवाचाराः ।
परहंसा विहरन्ति
प्रशिथिलमोहाः पिनाकिनः कृपया ॥ ३६ ॥

उपनिषदैदंपर्य-
रुद्रपरिवृढडिंभशेखरैरसि ।
उपजीवितपरिचितश्री-
रुरगाभरणैर्महोमिरतिशुभ्रैः ॥ ३७ ॥

परिमितपामरसंगः
परतत्वस्फूर्तिपारवश्येन ।
विस्मृतशरीरयात्रो
विराजते कोपि वीतरागमणिः ॥ ३८ ॥

तीव्रतरविरतिनावा
तीर्त्वा विषयांबुधिं महावीरः ।
तृणयन्त्रिजगन्त्रितयमपि
न गणयति स्वैरविहरणः कोपि ॥ ३९ ॥

समलोष्टकाञ्चनानां
सर्वातीते पदे रमताम् ।
सरसिजभवनश्रीरपि
साम्यं न वहति हि सौख्यलेशस्य ॥ ४० ॥

समबुद्धिलब्धमौल्य-
स्सत्यास्तेयादिसुगुणकृतमाल्यः ।
शमधनयमिवरमुख्यः
शंकरकृपयास्मि परमहंसाख्यः ॥ ४१ ॥

दिव्यमिह किमपि तत्वं
द्रागद्राक्षं तु देशिकादेशात् ।
सुचरितविपाकसुरतरु-
सुलब्धनैस्पृह्यधैर्यनैष्कर्म्यैः ॥ ४२ ॥

अनिदंरूपमखण्डित-
मखिलाम्नायान्तसारमद्वयम् ।
अजरामराभयात्मक-
महमित्यवगत्य हृष्यति महात्मा ॥ ४३ ॥

भूतं भावि च भवदपि
भगवन्मायेति गुरुमुखाद्बुद्ध्वा ।
आद्यं ब्रह्मास्मि ततं
[1]माद्य ब्रह्मानन्दबोधनिष्यन्दाः ॥ ४४ ॥

निर्मत्सरधौरेयो
निखिलं विश्वं विभावयन् ब्रह्म ।
नैश्चिन्त्यसौधमध्ये
नैजमहत्त्वशेखरः शेते ॥ ४५ ॥

चिदहमिति चिन्तयन्त-
श्चिरमिह निष्कम्पदीप इव निपुणाः ।
निष्ठानिलीनमनसो
निस्पृहतिलका जयन्ति परहंसाः ॥ ४६ ॥

तृणकणितसार्वभौम-
स्त्रुटिताहन्तस्तनौ महामौनी ।
स्वच्छन्दवृत्तिललित-
स्स्वैरं पर्यटति सर्वतो योगी ॥ ४७ ॥

गगनमिव शून्यभावो
गभीरवृत्तिर्महासमुद्र इव ।
अचल इव चाप्रकम्प्यो
हतमात्सर्यो विराजते हंसः ॥ ४८ ॥

निश्शेषितनिखिलाशो
निरुपाधिकसत्त्वबोधसौभाग्यः ।
निश्चिन्तचक्रवर्ती
निगमान्ताश्रितविद्यया जयति ॥ ४९ ॥

किमपि च विचिन्तयन्तः
कृशानुरेतःकृपावशात्केऽपि ।
किं यशसा किं तपसा
किं नाकेनेति कुर्वते मदान् ॥ ५० ॥

यदि परतत्त्वानुभवो
यदि गुरुचरणारविन्दशुश्रूषा ।
घटते शरीरभाजां
किमिति विमुह्यन्ति दग्धसंसारे ॥ ५१ ॥

स्त्रीणामगाच्यदेशे
क्लिन्नशिराग्रन्थिरन्ध्रपर्याये ।
मग्नमनोभिर्मूर्खै-
र्महत्त्वमज्ञातमात्मनो नूनम् ॥ ५२ ॥

महिलारण्यागुरुभि-
र्मदनव्याध्रो मृगान् पुंसः ।
आवद्धय निरयनिर्झरे
हन्त निपातयति गुरुकृपाविगमे ॥ ५३ ॥

ऊरीकृतगुणवर्गा
दूरीकृतदुर्विनीतसंसर्गाः ।
स्फारीकृतशिवभजना
नारीकृतविभ्रमैर्न मुह्यामः ॥ ५४ ॥

परिपूर्णतत्त्वबोधैः
पातितदेहाभिमानमात्सर्यैः ।
तीर्णो भवार्णवोऽयं
त्रिपुरद्रोहिस्मृतिप्रभावबलात् ॥ ५५ ॥

वञ्चितपञ्चशराणा-
मञ्चितगुरुनाथचरणकमलानाम् ।
किं च निर्मत्सराणां
कृपादृशा करतलसुलभमिदं विश्वम् ॥ ५६ ॥

अध्यस्तमखिलदृश्यं
हरकृपयात्मन्यपास्य बोधेन ।
मध्यस्थवृत्तिरेको
माद्यस्यद्वैतवस्तुपरसुधया ॥ ५७ ॥

जननमरणप्रवाहे
जगदेतद्वीक्ष्य मग्नमतिकृपया ।
जगदीश एव जज्ञे
यदुपतिरूपेण यस्तमाकलये ॥ ५८ ॥

नाहं देहत्रयमिति
नाथकृपापूर्णपात्रभूतस्य ।
नानामोहध्वंसी
नारायणचिंतकस्य बोधः स्यात् ॥ ५९ ॥

प्रकृतिपुरुषान्तरज्ञः
प्राकृतदृत्तान्तदूरतस्त्वेवाः ।
पश्यन्नपि चापश्यन्
पर्यटति ब्रह्मपुरुषधूर्धन्यः ॥ ६० ॥

नेतीति निगमवाण्या
निखिलं निर्धूय वेद्यराशिमथ ।
अपरोक्षितात्मतत्व
आनन्दाब्धौ विलीयते कोपि ॥ ६१ ॥

धामत्रयदुःखमं
दाक्षायण्याः कृपादृशा दृष्टः ।
पश्यति न पुनर्धीरः
प्रज्ञादयदग्धयुवतिमोहवनः ॥ ६२ ॥

नाहं किंचिज्जाने
नानाभूतं तु वस्तुबोधाब्धौ ।
चिदिहैकाकिन्यस्ति
श्रीकण्ठादिस्वरूपिणी सत्यम् ॥ ६३ ॥

करकलिततत्वमुद्रैः
कृतकनकल्यंकुदीर्घतमनिद्रैः ।
करुणासुधासमुद्रैः
कर्म ध्वस्तं तु रामभद्रैर्नः ॥ ६४ ॥

इति श्रीपरमहंसब्रह्मानन्दस्वामिविरचितो

ब्रह्मानन्दविलासः

संपूर्ण. ॥



# ॥ सच्चिदानन्दस्वरूपविचारः ॥

अथ आत्मनः सत्स्वरूपत्वं चित्स्वरूपत्वं आनन्दस्वरूपत्वं च विचार्यते । सत्स्वरूपत्वं नाम यद्वस्तु केनापि वस्त्वन्तरेणाबाधितं सत् कालत्रयेऽपि एकरूपमेवास्ति तद्वस्तु सत्स्वरूपम् । एतादृशसद्रूपत्वमात्मनः कथमिति चेदस्त्येव । आत्मा कालत्रयेऽपि केनाप्यबाधितस्सन्नेकरूपतया अवतिष्ठत इत्येतत्सद्रूपत्वमात्मनि वर्तते ॥

नन्वात्मनः कालत्रयसद्भावे किं प्रमाणमिति चेत्समस्तजनानामनुभव एव प्रमाणम् । सर्वजना हि दरिद्रा आढ्याः कर्मिणः भक्ताः मुमुक्षवश्च । एतेषामनुभवः कथमिति चेदत्र ब्रूमः-दरिद्रस्य अहं जन्मान्तरे कस्मैचित्किमपि न दत्तवानस्मि । तेनात्र अस्मिञ्जन्मनि दारिद्र्यमनुभवामि । अधुनापि दारिद्र्यदोषेण दातुमवकाशाभावादागामिजन्मन्यपि दरिद्र एव उत्पत्स्यामीत्यादिवचनैः । एवमाढ्यस्यापि अहं जन्मान्तरेषु महद्भ्यः किंचिद्दत्तवानस्मि । तेन अस्मिन् जन्मनि ऐश्वर्यमनुभवामि । तस्मादिदानीमपि मया किंचिद्दत्तं चेदागामिजन्मनि मम उपतिष्ठेतेत्यादिभाषणश्च । तथैव कर्मठस्यापि अहमनेकजन्मसु सर्वाणि विध्युक्तकर्माणि कृतवानस्मि तद्वशात्सद्वासनया एतज्जन्मन्यपि सर्वकर्माणि करोमि । एतेन मम परलोकोऽस्ति इत्यादिकथनैरपि । एवमेव भक्तस्यापि अहमनेकजन्मान्तरेषु भगवदुपासनं कृतवानस्मि । तेन तज्जन्यसद्वासनामहिम्ना आधुनिकजन्मनि मम निरतिशया भक्तिरभवत् । तथाच भक्त्या मम भगवल्लोकनिवास स्यादित्यादिनिगदितैरपि । तद्वदेव मुमुक्षोरपि अहमनेकजन्मसु निष्कामतया कृतानि सर्वकर्माणि ईश्वरे अर्पितानि तेन वर्तमानजन्मनि चित्तशुद्धि सद्गुरुलाभ श्रवणादिकमप्यासीत् । ततः अहं कृतार्थः मम इतःपरं जन्मादिकं नास्तीत्यादिभाषणैश्च । समस्तजनानामनुभवश्चैवं जनतटस्थस्य विवेकिन आत्मा कालत्रयेऽपि अस्तीत्यनुभवमिस्यति । समस्तजनानामनुभवश्चैवं जनतटस्थस्य विवेकिन आत्मा कालत्रयेऽपि अस्तीत्यनुभवस्सिध्यति । ननु इदं सद्रूपत्वं अनुभवसिद्धं न पुर्युक्त्येति चेत् । अस्माकमपि कालत्रयसद्भावायुक्त्यापि सद्रूपत्वं सिद्धमेव । सा कीदृशी युक्तिरिति चेद्ब्रूमः । सावधानतया श्रोतव्यं—वयमधुना वर्तामहे उत नेत्युक्ते वर्तामहे एव । शरीरिणो वर्तामहे किमुत अशरीरिण इत्युक्ते अशरीरिणां व्यवहाराभावेन वयं चाधुना व्यवहरन्तस्तिष्ठामहे इति हेतोः शरीरिण एव वर्तामहे । एतदस्मच्छरीरं केनागतमित्युक्ते कर्मणा आगतम् येन कृतकर्मणा युक्ते, अस्मत्कृतकर्मणैव ।

ननु अन्यकृतकर्मणा अस्माकं शरीरमस्तीति चेन्न । तथाचेदन्यकृतपापेनिष्टानिष्टफलादिकमपि अस्माकं भूयात् नानुभूयते चास्माभिः । तस्मादन्यकृतकर्मणा न शरीरलाभोऽस्माकम् ॥

किन्त्वस्मत्कृतकर्मणैव । अथ वेतच्छरीरमेतज्जन्मकृतकर्मणा जनितं उत पूर्वजन्मकृतकर्मणा इत्युक्ते पूर्वजन्मकृतकर्मणैव जनितमिति वक्तव्यम् । नन्वेतज्जन्मकृतकर्मणा जनितमस्त्विति चेन्न । अत्र सदृष्टान्तं ब्रूमः । यथा वृक्षनिष्ठं बीजं स्वकारणभूतं वृक्षमुत्पादयितुं नार्हति । तद्वदेतच्छरीरकृतकर्म स्वस्य पश्चाद्भावितया स्वाश्रयभूतं स्वपूर्वभाविशरीरं न जनयेत् । तस्मादेतज्जन्मकृतकर्मणा एतच्छरीरलाभ इति न वक्तुं शक्यते किन्तु पूर्वजन्मकृतकर्मणैव एतच्छरीरं जनितमिति वक्तव्यम् । तर्हि पूर्वजन्मनि वयं शरीरिण एव कर्म कृतवन्तो वा आहोस्विदशरीरिण एवेत्युक्ते अशरीरिणां कर्मकर्तुमशक्यतया शरीरिण एव भूत्वा कर्म कृतवन्तः । तच्छरीरमपि केन जनितमित्युक्ते ततः पूर्वजन्मकृतकर्मणा जनितं तदपि केन कृतमित्युक्ते ततः पूर्वतरजन्मकृतकर्मणा जनितमित्येवं प्रकारया युक्त्या गतानन्तकालेषु वर्तमानास्सन्तः अनेकविधानि कर्माणि कुर्वन्तः तत्तत्कर्मानुरूपाण्यनेकविधानि शरीराणि परिगृह्य तत्तच्छरीरनिष्ठसुखदुःखान्यनुभवन्तो बहुकल्पेषु वर्तामहे । तथाच वयं युक्त्यापि भूतकाले वर्तमानकाले च वर्तामह इति सिद्धम् । भविष्यत्कालभावित्वं युक्त्या कथमिति चेत् ब्रूमः । वयमधुना श्रवणमनननिदिध्याससाध्यं ज्ञानं न संपादयामश्चेत्पूर्वजन्मकृतकर्मणा फलभूतमेतच्छरीरं यथागतं तद्वदेतच्छरीरक्रियमाणतत्तत्कर्मणा फलभूतनानाविधशरीराणि परिग्रहं आगच्छेयुः यथा एतच्छरीरं परिगृह्य नानाविधकर्माणि कुर्मः तथैव भविष्यत्तत्तच्छरीराणि परिगृह्य अनेकविधकर्माणि करिष्यामः । तेषु तेषु शरीरेषु पुनः पुनः नानाविधकर्माणि कुर्वन्तः तत्तत्कर्मफलभूतानि सुखदुःखान्यनुभूय भाविबहुकालेऽपि वर्तिष्यामः इति युक्त्यापि भविष्यत्कालवर्तित्वमूह्यते । तस्मादस्माकं कालत्रयवर्तित्वं युक्त्यापि सिद्धमेव । प्रळयेषु जगतो बाधेऽपि वयं अबाधिता एव वर्तामः इत्यस्माकं केनाप्यबाधितत्वमपि सिद्धम् । तेनैवास्माकमुत्पत्त्यादिविकाराभावेन एकरूपत्वं च सिद्धम् । एवमुक्तप्रकारेण सल्लक्षणमस्मासु वर्तते इत्यस्माकं सद्रूपत्वं सिद्धम् ॥

अथात्मनः चिद्रूपत्वं कथमित्युक्ते ब्रूमः । यद्वस्तु साधनमनपेक्ष्यैव स्वत एव भासमानं सत् स्वस्मिन्नारोपितसर्वपदार्थानपि भासयति तच्चित् । एतच्चिद्रूपत्वमात्मन्यस्ति । तत्कथमित्युक्ते वदामः । अस्माभिः बाल्यात्प्रभृत्येतावत्कालपर्यन्तं ये ये व्यापाराः कृताः तत्तद्व्यापारेषु कतिपयव्यापाराणामस्फुरणेऽपि अन्ये व्यापाराः प्रकाशसाधनीभूतरविचन्द्रनक्षत्राग्निविद्युच्चक्षुषां मध्ये एकतमसाधनमनपेक्ष्यैव गाढान्धकारे नेत्रे निर्मील्य शयनेऽपि अस्माकं भासन्ते इति आत्मस्वरूपेषु अस्मासु चिद्रूपत्वमस्ति ।

ननु तर्हि गाढान्धकारे यथा आरोपितपदार्थेषु मध्ये कतिचित्पदार्थानामेव भासमानतया आरोपितसमस्तप्रपञ्चावभासकत्वलक्षणचिद्रूपत्वमस्माकं कथं युज्यते इति चेदत्र ब्रूमः । सर्वपदार्थानामान्तरप्रपञ्चो बाह्यप्रपञ्चश्च इत्येवं प्रपञ्चद्वयमस्माभिरेव भास्यते । तत्र बाह्यप्रपञ्चः कथं भास्यते इत्युक्ते ब्रूमः । पृथिव्यप्तेजोवाय्वाकाशा इति, शब्दस्पर्शरूपरसगन्धा इति, अपचीकृत

भूतानीति ब्रह्माण्डमिति । तन्मध्ये चतुर्दश भुवनानीति । चतुर्विध भूतग्राम इति । तेषां कारण-रूपा मायेति । एवंविधनामरूपगुणधर्मविकारशतसहस्राश्रयीभूतबाह्यसर्वप्रपञ्च अस्माभि ज्ञायत इति आत्मनस्सर्वप्रपञ्चावभासकत्वं सिद्धमेव । आन्तरप्रपञ्चावभासकत्वं कथमिति चेद्ब्रूम —अज्ञानमिति पञ्चकोशा इति स्थूलसूक्ष्मकारणशरीराणीति, अस्ति जायते वर्धते परिणमते अपक्षीयते नश्यतीति-षड्भावविकारा, त्वगसृङ्मांसमेदोमज्जास्थीनीति षट्कोशा, क्षुत्पिपासाशोकमोहजरामृतीति षडूर्मय, ज्ञानेन्द्रियकर्मेन्द्रियाणीति प्राणादिपञ्चक अन्त करणचतुष्टयमिति, सङ्कल्पाध्यवसायाभि-मानावधारणानीति, जाग्रत्स्वप्नसुषुप्तय इत्यवस्थाव्यापारा, विश्वतैजसप्राज्ञा अवस्थावन्त इति समाधि मूर्छा इति, मनोवाक्काया इति, अरिषड्वर्गाख्यकामक्रोधलोभमोहमदमात्सर्याणीति कुल रूप धन रूप यौवन विद्या राज्य तपश्चैव एते चाष्ट मदा इति । घृणा शङ्का भय लज्जा जुगुप्सा कुल शील व्रत चैव अष्टपाशा इति । नित्यानित्यवस्तुविवेक इति, इहामुत्रार्थफलभोगविराग इति शमादिषट्कसम्पत्तिरिति मुमुक्षुत्वमिति सत्त्वरजस्तमोगुणा इति, सुखदु खे इति ज्ञानाज्ञाने इति, मैत्री करुणा मुदितोऽपेक्षा इति, यमनियमासन प्राणायाम प्रत्याहार धारणा ध्यानसमाध्यष्टाङ्गयोगा इति प्रत्यक्षानुमानउपमानशब्दानुपलब्धय इति रोगारोग्यमिति, एवंविधनामरूपगुणधर्मविकार-शतसहस्राश्रयीभूत आन्तरप्रपञ्चस्सर्वोऽपि अस्माभिर्ज्ञायते, आन्तरप्रपञ्चेन तु वयं न ज्ञायामहे, ततोऽस्मात् अन्तरसर्वप्रपञ्चावभासकत्वस्य सिद्धत्वादस्मासु आरोपितसमस्तप्रपञ्चावभासकत्व साधनान्तर-नैरपेक्ष्येण सिद्धम् ।

ननु मनसा खलु सर्वपदार्था गृह्यन्ते । वयमपि मनसैव भासामहे इति कथ साधना-न्तरमनपेक्ष्यैव स्वप्रकाशकत्व सर्वपदार्थावभासकत्व चेत्याशङ्क्य ब्रूम —मनसस्तावदुदयदुत्पत्ति-विनाशशालित्वेन सावयवत्वेन परिच्छिन्नत्वेन दृश्यत्वेन भूतकार्यत्वेन च जडत्वमेव, न तु चेतनत्वम्, तादृशजडीभूत मन कमपि पदार्थं प्रकाशयितु नार्हति । किन्त्वात्मैव मनआदिसर्वान्पदार्थानपि भासयति । तत्र सत्र पुत्र उदाहियताम् । तत्कथमित्युक्ते दृष्टान्तपूर्वक ब्रूम दीपस्थान्ना तैलेनाक्ता वर्ति स्वयमप्रकाशमाना सती तत्तैलादिकमपि यथा न प्रकाशयति अग्निनेस्तु तादृशवर्तिस्योपाधिना सैव साधनान्तरानिरपेक्ष स्वय विशेषेण प्रकाशमान सत् तां वर्ति तं तैल तां स्थालीमपि सर्वानस्य-पदार्थानपि यथा प्रकाशयति तद्वदेव, स्थालीस्थानीयेन स्थूलशरीरेण तैलस्थानीयेन कर्मणा च प्रेरितं वर्तिस्थानीय सत्तादृशक लिङ्ग मन स्वयमभासमान सत् अन्यपदार्थानपि न भासयति । आत्मा तेन मनसा नायुज्य साधनान्तरमनपेक्ष्यैव स्वय विशेषेण भासमान तन्मनस्तद्देहादिपदार्थानान्तरबाह्य-समस्तपदार्थानपि भासयति अन्त करण तद्वृत्तीस्तु आत्मा निरुपाधिक एव जानाति । अत स्वय प्रकाशरूपत्वेन सर्वपदार्थावभासकत्वेन अस्माकं चित्स्वरूपत्व सिद्धमेव ॥ अथ आत्मन. आनन्द-स्वरूपत्वं कथमिति चेत् ब्रूम —

नित्य निरुपाधिक निरतिशय यत् सुख स आनन्द । अस्यार्थ । स्रक्चन्दनादिना अनुपन्न सर्वोत्कृष्ट सर्वदु खनिवर्तक नित्य यत् सुख स आनन्द इत्यर्थ । यमानन्द समस्तप्राणिनोऽपि सुषुप्तिकाले अनुभवन्ति । अत्रेद लक्षणमस्ति । ननु सुषुप्तिकाले आनन्दे सति एतल्लक्षणमुपपादनीय तदानीमानन्द एव नास्ति । किन्तु दु खाभावमात्रम् । तस्मात्तदा आनन्दस्यैव अभावेन सुखस्वरूपत्व कुतस्समभवेदिति चेदुच्यते—सुख पुरुष सुषुप्तिकाले सुखमनुभवति चेत्सुषुप्त्यनन्तरमुत्थितेन सुखमहमस्वाप्समिति न व्यवहर्तव्यम् किन्तु दु खित एव स्थित इति वक्तव्यम्। तथा नोच्यते, तस्मात्तदानां सर्वप्राणिनोऽपि एकमानन्दमनुभवन्त्येव। तत्र आनन्दे नित्यनिरुपाधिकनिरतिशयसुखस्वरूपत्वरूपलक्षणमस्त्येव । तत्सुखस्य निरुपाधिकत्व कथमिति चेदुच्यते—सुखजनकीभूताना स्रक्चन्दनादिविषयाणा तस्यामभावेऽपि समस्तप्राणिभि सुखमनुभूयत एवेति तत्सुखस्य निरूपाधिकत्वमस्त्येव ॥ तर्हि निरतिशयत्व कथमिति चेदुच्यते—समस्तविषयजन्याना सुखाना मध्ये परमोत्कृष्टे स्त्रीसम्भोगसुखेऽपि विरसत्व प्राप्य तत्सुखमपहाय सर्वप्राणिनामपि प्रतिदिन सुषुप्तिसुखस्यापेक्षणात् । किंच तत्सुखविघ्नकारिणा शिक्षणाच्च सुषुप्तिसुख एतावदिति ज्ञायमानाना आध्यात्मिकाधिदैवताधिभौतिकसमस्तदु खाना निवर्तकतया च तस्य निरतिशयत्वमस्त्येव ॥ तर्हि तत्सुखस्य नित्यत्वमपि कथमिति चेदुच्यते—जाग्रत्स्वप्नयो समस्तविषयसुखानि यथा अनेकरूपाण्यनुभूयन्ते तद्वत्सुषुप्तिसुखमनेकरूप नानुभूयते । किन्तु प्रतिसुषुप्ति एकरूपमेवानुभूयते । इति तत्सुषुप्तिसुखस्य नित्यत्वमप्यस्त्येव ।

सुषुप्तिसुखस्य नित्यत्वेऽपि दु खरूपदेहेन्द्रियादिसम्पर्कवशात्तत्सुख जाग्रत्स्वप्नयो तिरोहितमास्ते तेन तदानी न ज्ञायते । ननु कार्यभूतदेहेन्द्रियादिभि तत्कारणभूतात्मसुखस्य कथ तिरोधान घटत इति चेदत्र वदाम । अग्ने प्रकाशरूपस्वरूपत्वस्य स्वतस्सिद्धत्वेऽपि स्वकार्यभूतधूमसम्पर्कवशात्प्रकाशस्य यथा तिरोधान जायते यथा च आदित्यस्य प्रकाशरूपत्वस्य स्वतस्सिद्धत्वेऽपि स्वकिरणपरिणामस्वकार्यभूतमेघै तिरोधान, यथा वर्तते तथैवात्मन सुखस्वरूपत्वस्य सर्वदा स्वतस्सिद्धत्वेऽपि आत्मकार्यभूतदेहेन्द्रियादिसम्पर्कमहिम्ना जाग्रत्स्वप्नयो तत्सुखस्य तिरोधान युज्यते । प्राकृतबहिर्मुखस्य एतत्सुखमात्मसुखमिति जाग्रत्स्वप्नयोरज्ञानेऽपि अप्राकृतान्तर्मुखस्य सर्वदा भासत एव । तस्मादेतत्सुषुप्तिसुखस्य कालत्रयेऽपि विद्यमानतया च नित्यत्व निरुपाधिकत्व निरतिशयत्व च सर्वदा सिद्धमेव । एतद्विचारस्य किं फलमिति चेदुक्तसद्रूपत्व चिद्रूपत्व चास्मासु सिद्धमिति तादृशसच्चिदानन्दस्वरूप आत्मा वयमेवेति दृढनिश्चयो जायते । तदेवास्य विचारस्य फलम् । स एव कृतकृत्य । 'ब्रह्मवेद ब्रह्मैव भवति' "ब्रह्मविदाप्नोति परम्" "तत्सत्" ।

**॥ इति सच्चिदानन्दस्वरूपविचारः संपूर्णः ॥**

श्रीशङ्करभगवत्पादविरचितः

# आत्मबोधः

श्रीपद्मपादाचार्यविरचितवेदान्तसारटीकासहितः



शतमखपूजितपादं शतपथमनसोप्यगोचराकारम् ।
विकसितजलरुहनेत्रं उमाच्छायाङ्कमाश्रये शम्भुम् ॥

तत्र भगवान् शङ्कराचार्य उत्तमाधिकारिणा वेदान्तप्रस्थानत्रय निर्माय तदवलोकना-समर्थाना मन्दबुद्धीना अनुग्रहार्थं सर्ववेदान्तसिद्धान्तसंग्रहधनमात्मबोधप्रकरण दिदर्शयिषु प्रतिजानीते - तपोभिरिति—

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्
मुमुक्षूणामपेक्ष्योऽयं आत्मबोधो विधीयते ॥ १ ॥

कृच्छ्रचान्द्रयणनित्यनैत्यमित्तिकाद्यनुष्ठानरूपै तपोभि क्षीणानि पापानि - रागा-द्यन्त करणदोषा येषा । "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षय" इति वचनात् । अतएव शान्ताना वीतरागिणा इहामुत्रार्थफलभोगरहिताना मुमुक्षूणा = ससारग्रन्थिभेदने कृतप्रयत्नाना यथोक्तसाधनसपन्नाना अयमात्मबोधो विधीयते विधिमुखेन आवश्यकतया प्रतिपाद्यत इत्यर्थ ।

ननु तपोमन्त्रकर्मयोगाद्यनेकसाधनेषु सत्सु मोक्ष प्रति बोध एव किमिति प्राधान्येनोच्यते इत्यत्राह - बोधोऽन्येति—

---

[1] The following stanzas are found in a ms. deposited in the India Office Library.

[1] वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्यास्ते हृदये संवित् तं नृसिंहमहं भजे ॥ १ ॥
श्रोतव्यः श्रुतिवाक्येभ्यः मन्तव्यश्चोपपत्तिभिः ।
आत्मा च सन्ततं ध्येयः इति दर्शनहेतवः ॥ २ ॥
पठित्वा चतुरो वेदान् अर्थशास्त्राननेकशः ।
अहं ब्रह्मेति नो विद्यात् दर्वीपाकरसं यथा ॥ ३ ॥

बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिद्ध्यति ॥ २ ॥

तपोमंत्रकर्मयोगादिसाधनानि परंपरया क्रमेण ज्ञानद्वारा मोक्षं साधयन्ति । ज्ञानन्तु स्वजन्ममात्रादेव अज्ञानं निःशेषं नाशयित्वा मुमुक्षुन् स्वाराज्येऽभिषेचयति । अतोऽन्यसाधनेभ्यो ज्ञानस्य प्राधान्यमुक्तम् । तदेव दृष्टान्तेन दृढयति - पाकस्येति । यथा लोके पचनक्रियायाः काष्ठजलभाण्डादिसाधनेषु सत्स्वपि वह्निं विना पाको न सिध्यति तद्वत् ज्ञानं विना मोक्षो न सिध्यतीत्यर्थः ।

ननु कर्मणा विचित्रशक्तित्वात्कर्मैव किंचिदज्ञानं नाशयिष्यति । किमात्मज्ञानेनेत्याशंक्य कर्माज्ञानयोर्विरोधाभावान्नैवमित्याह—अविरोधितयेति ।

अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याऽविद्यां निहंत्येव तेजस्तिमिरसंघवत् ॥ ३ ॥

अज्ञानरूपं कर्म अन्तःकरणमालिन्यरूपं कामक्रोधादिकं नाशयितुं नोत्सहते । विद्या तु प्रकाशरूपत्वादज्ञानं नाशयितु तमस्तेजःपुंज इव क्षमत इत्यर्थः ।

ननु प्रतिशरीरं भिन्न एवात्मा उपलभ्यते कथमस्य कैवल्यमित्याशंक्याह — अवच्छिन्न इवेति ।

अवच्छिन्न इवाज्ञानात्तन्नाशस्येति केवलः ।
स्वयंप्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ ४ ॥

परिपूर्णस्याद्वितीयस्यात्मन अज्ञानपरिकल्पितोपाधिवशरीराध्यासकृतपरिच्छिन्नत्वमविवेककृतमेव । ननु तत्त्वदृष्ट्या । विवेकेन तन्नाशादात्मा केवल एव प्रकाशते मेघावरणाभावे भानुरिवेत्यर्थः ।

नन्वात्मन अभेदबुद्धिरयुक्ता, वृत्तिज्ञानेन भेदसिद्धे इत्यत्राह—अज्ञानकलुषमिति—

अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ५ ॥

---

कुलं पवित्रं जननीकृतार्था विश्वंभरा पुण्यवती च तेन ।
अपारसंवित्सुखसागरेऽस्मिन् लीनं परब्रह्मणि यस्य चेतः ॥ ४ ॥

स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्ताऽवनिः
यज्ञानां च कृतं सहस्रमखिला देवाश्च संपूजिताः ।
संसाराच्च समुद्धृताः स्वपितरः सर्वं च कृत्यं कृतं
यस्य ब्रह्मविचारणे क्षणमपि प्राप्नोति धैर्यं मनः ॥ ५ ॥

अज्ञानकार्यभूतैः अहमादिभिः कलुषीकृतं कर्तृत्वभोक्तृत्वाद्यभिमानिनं जीवं च ज्ञानं कर्तृ चिरकालाभ्यासवशादज्ञानहानिद्वारा तत्कार्यान्तःकरणादिकमशेषतो नाशयित्वा स्वयमपि नश्यति। आत्माज्ञानकार्यत्वाद्वृत्तेः तत्र प्रतिबिम्बितज्ञानं आत्मावभासरूपत्वादात्मन्येवैकीभवति। तदानीं आत्मा प्रकाशते। यथा कतकरेणुः अखिलं जलं निर्मलं कृत्वा स्वयमपि नश्यति तद्वदित्यर्थः॥

अपरोक्षतया अनुभूयमानस्य संसारस्य कथमत्यन्तासत्त्वं, प्रत्यक्षविरोधादित्याशंक्य स्वप्नदृष्टान्तेन तस्य मिथ्यात्वं साधयति—संसारेति—

संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः।
स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत्॥ ६॥

रागद्वेषादिभिः संकुलायमनः संसारः स्वकाले स्वस्य कारणभूताज्ञाने स्थिते सति तावन्मिथ्याभूतोऽपि संसारः सत्य इव भाति। प्रबोधे सति वाक्यश्रवणादात्मज्ञानोत्पत्तौ असत्य एव भवति। तत्र दृष्टान्तः स्वप्नतुल्यः। यावन्निद्रा अनुभूयते तावन्मिथ्याभूतोऽपि स्वप्नः सत्य इवाभाति। प्रबोधे निद्रानाशे मिथ्या भवति। तद्वदित्यर्थः॥

जगन्मिथ्यात्वमेव दृष्टान्तान्तरेण द्रढयति—तावदिति—

तावत्सत्यं जगद्भाति शुक्तिका रजतं यथा।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम्॥ ७॥

यथा नीलपृष्ठत्रिकोणादिविशेषज्ञानं नोत्पद्यते यावत् तावद्रजतज्ञानं सत्यमित्यनुभूयते। तथा सर्वाधिष्ठानभूतं सच्चिदानन्दाद्वयं ब्रह्म यावन्न ज्ञायते, साक्षी नानुभूयते ताव-ज्जगदाकारेण परिणतः संसारः सत्य इव भ्रान्त्या दृश्यत इत्यर्थः॥

सर्वं दृश्यं प्रपंचजातं ब्रह्मण्येव मायया परिकल्पितमिति प्रतिपादयति-सच्चिदात्मनीति।

सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः।
व्यक्तयो विविधास्सर्वा हाटके कटकादिवत्॥ ८॥

सत्यज्ञानानन्दात्मनि नित्ये सर्वानुस्यूते विष्णौ व्यापके परब्रह्मणि सर्वा व्यक्तयः देव-तिर्यङ्नरस्थावरजंगमाद्यः सर्वोपादानभूते परमेश्वरे हेम्नि कटकमुकुटादिवत्कल्पिता एव ब्रह्मणो नाभिनाः इत्यर्थः।

उक्तमर्थमाकाशदृष्टान्तेन द्रढयति-यथाकाश इति—

यथाकाशो हृषीकेशो नानोपाधिगतो विभुः।
तद्भेदाद्भिन्नवद्भाति तन्नाशे केवलो भवेत्॥ ९॥

हृषीकेश =मन प्रभृतिसर्वेन्द्रियप्रेरक नियामको वा, विभु =सर्वगत परमेश्वर स्वमायापरिकल्पितनानाविधोपाधिषु प्रतिविम्बित सन्नानेव भाति। तन्नाशे सति=ब्रह्मात्मैक्य-ज्ञाने सति तेषा मायापरिकल्पितदेहाद्युपाधीना नाशे सति केवल एक एव भाति। यथा एक एव आकाशो मठघटाद्युपाधिषु एकस्सन्नानेव भाति, उपाधिविलयादेकवद्भाति तद्वदित्यर्थ ।

ननु सर्वदेहेषु तत्तज्जात्यादिभिरनुविद्धयमानस्य कथ नित्यमुक्ततेत्यत्राह—
**नानोपाधीति—**

**नानोपाधिवशादेव जातिनामाश्रमादयः ।**
**आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ १० ॥**

पूर्वोक्तनानोपाधिवशादेव आत्मनि जातिनामाश्रमादय, आरोपिता =मायया परि-कल्पिता । ननु सत्या । यथा स्वभावतोमाधुर्यं जल कटुतिक्तमधुररक्तपीतादिद्रव्यवशा-त्तत्तद्रूप भवति ननु स्वरूपेण तद्वदित्यर्थ ॥

आत्मनो नित्यमनोऽविद्यापरिकल्पितोपाधित्रयमध्ये स्थूलोपाधिमाह **पंचीकृतेति—**

**पञ्चीकृतमहाभूतसंभवं कर्मसंचितम् ।**
**शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ ११ ॥**

पञ्चीकृताना, भूताना प्रत्येक द्वेधाविभज्य तत्रैकमेकमंशं पुनश्चतुर्धा विभज्य स्वांश परित्यज्योत्तरेषु संयोजन पचीकरणम्। एव पचीकृतेभ्य स्थूलपृथिव्यादिमहाभूतेभ्य सभवो यस्य तत्। सभूत प्रारब्धकर्मभि सचित = रचित स्थूलशरीर सुखदु खभोगानामायतन = भोगस्थान प्रत्यगात्मन इत्युच्यते। **पंचप्राण इति ।**

**पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।**
**अपंचीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ १२ ॥**

यस्यैव महाप्राणस्य प्राणादय पच वृत्तय । ज्ञानेन्द्रियकर्मेन्द्रियाणि दश मन यस्य सङ्कल्पात्मिका अन्त करणवृत्तय बुद्धिशब्देन निश्चयान्त करणवृत्ति । अपञ्चीकृतसूक्ष्म-पृथिव्यादिमहाभूतेभ्य इत्य जात सूक्ष्माङ्ग लिंगशरीर सुखदु खभोगसाधनमुच्यत इत्यर्थ ।

कार्योपाधिमुक्त्वा कारणोपाधिमाह **अनादीति ।**

**अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते ।**
**उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १३ ॥**

सदसद्भ्यामनिर्वचनीयाऽविद्याऽनादि कारणोपाधिभूता । स्थूलसूक्ष्मप्रपचयो कारण-भूतत्वात् । अनृतजडदु खविलक्षणत्वेन सच्चिदानन्दादिरूपेण अन्नति प्रकाशत इति प्रत्य-

कृकारणोपाधिरुच्यते। उपाधिवर्णने प्रयोजनमाह - **उपाधित्रितयादन्यमिति**। तत्साक्षिणमात्मानं **अवधारयेत्** = जानीयादित्यर्थः।

ननु अन्नमयादिकोशेषु तत्तन्मयतया स्थितस्य कुतो नित्यमुक्तत्वमुच्यते इत्याशंक्याह - **पंचकोश इति**।

**पंचकोशादियोगेन तत्तन्मय इव स्थितः।**
**शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥ १४ ॥**

अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पंचकोशाः। आदिशब्देनाशनादीनां ग्रहणम्। एतयोर्योगेन = मिथ्यातादात्म्येन तत्तन्मय इव स्थितः। आत्मा शुद्धः। ननु तेषु वस्तुतो रंजनाखेदोऽपि, "स वा एष पुरुषोऽन्नरसमय." इति सूक्ष्मवस्तुदर्शनार्थमुपाधिस्थं ब्रह्म सूचयति। ननु तत्त्वदृष्ट्या, यथानीलः स्फटिकः नीलपीतादिवस्त्रयोगेन तत्तन्मय इव भाति वस्तुतो नास्ति रंजना तद्वदित्यर्थः॥

आत्मस्वरूपज्ञाने विवेचनप्रकार माह—**वपुरिति**—

**वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यवघाततः।**
**आत्मानमांतरं शुद्धं विविञ्च्यात्तण्डुलं यथा ॥ १५ ॥**

पंचकोशैस्तावदात्मान मिथ्यातादात्म्येन स्थितं, वपुः = स्थूलशरीरं, तुषादिभिर्युक्तं तण्डुलमिव, युक्त्यवघाततः = अवहननाच्छुद्धमात्मानं तण्डुलमिव, विविच्यात् विवेकेन जानीयात्॥ कथं, स्थूलदेहो नात्मा, कार्यभूतत्वात्, घटवत्। सूक्ष्मदेहोऽपि तथैवानात्मा, देहत्वात् स्थूलदेहवदित्यनुमानादिना तेभ्यस्तेभ्यो भिन्नमात्मानं विविच्य जानीयादित्यर्थः।

ननु सर्वगतस्तर्हि किं सर्वत्र न दृश्यत इत्यत्राह - **सदेति**॥

**सदा सर्वगतोप्यात्मा न सर्वत्रावभासते।**
**बुद्धावेवाभासेत स्वच्छेषु प्रतिबिम्बवत् ॥ १६ ॥**

आत्मा सदा सर्वगतोऽपि सर्वत्र व्याप्य स्थितोपि जडैः बहिःप्रवृत्तायैः न प्रकाश्यते। रागादिभिः अविद्याया बुद्धावेवावभासते। न सर्वत्र यथा प्रतिबिम्बः स्वच्छेषु दर्पणादिष्वेव दृश्यते नान्यत्र, तद्वदित्यर्थः।

देहे स्थितस्यात्मनः औदासीन्यं राजपुरुषदृष्टान्तेनाह-**देहेन्द्रियेति**—

**देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम्।**
**तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १७ ॥**

देहेन्द्रियमनोबुद्धिप्रकृतिभ्य जडपरिणामस्वरूपेभ्य । विलक्षण = शुद्ध, आत्मान, तद्वृत्तीना=साक्षितया स्थित, यथा राजा स्वनगरेषु स्थित मन्त्रिषु वर्तमानेषु सत्सु स्वयसाक्षितया तान् पश्यन् तिष्ठति तद्वदेव जानीयादित्यर्थ ।

*नन्वात्मनोऽविकारित्व अयुक्त यत सर्वदा व्यापारवान्दृश्यते इत्यत्राह-व्यापृतेष्विति—*

**व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् ।**
**दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥ १८ ॥**

इन्द्रियादिषु व्यापृतेषु आत्मा व्यापारीवाविवेकिना गुरुशास्त्रादिरहिताना दृश्यते । नतु तत्त्वदृशाम् । यथा मेघेषु वायुवशाद्धावत्सु चन्द्रोऽपि धावन्निव लौकिकै दृश्यते । नतु चन्द्रमा धावति । तद्वदात्मापीत्यर्थ ॥

*ननु देहेन्द्रियमनोबुद्धयोऽपि आत्मरश्मिवत् सचेतना दृश्यन्त इत्यत्राह -* **आत्मचैतन्यमिति ॥**

**आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।**
**स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ॥ १९ ॥**

सत्यज्ञानानन्दरूपस्यात्मन चैतन्यमाश्रित्य देहेन्द्रियमनोबुध्यादय स्वकीयार्थेषु स्वस्वविषयेषु वर्तन्ते । यथा जना प्राणिन । सूर्यालोक = सूर्यप्रकाशमाश्रित्य व्यापारेषु व्यवहरन्ति । स्वत चैतन्यमात्मन एव, देहेन्द्रियादयस्तु जडा एव इत्यर्थ ।

ननु अह जातोऽस्मि, बाल्यकौमारयौवनाद्यवस्थामनुभवामि, पश्यामीत्यादिना अनवरतमनुभूयमानस्यात्मन कथ अविकारित्वमुच्यत इत्यत्राह - **देहेन्द्रियेति ॥**

**देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि ।**
**अध्यस्यन्त्यविवेकेन गगने नीलतादिवत् ॥ २० ॥**

देहेन्द्रियमनोबुद्धिधर्मान् गुणाश्च सत्त्वादीन्कर्माणि च कर्मेन्द्रियव्यापारान् मिथ्या-तादात्म्येन स्थिते निर्मले असगरूपे सच्चिदानन्दात्मके परमात्मनि अत्यन्तसामीप्यादविवेकतोऽध्यस्यन्ते । यथा गगने नीलादिवत् अतस्ते आत्मधर्मा न भवन्ति । अपितु देहादीनामेवेत्यर्थ ।

ननु कर्तृभोक्तृत्वादिकमात्मन्यनवरतमनुभूयमानत्वात्तत्र दुर्वारमित्याशङ्क्य तदपि तथैव मिथ्येत्याह-**अज्ञानादिति—**

**अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ।**
**कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथाम्भसः ॥ २१ ॥**

अज्ञानवशान्मानसोपाधि यस्य तस्यैव कर्तृत्वादयो धर्मा । ते तु अज्ञानवशादेव आत्मनि कल्प्यन्ते । यथा अभ्रम चलनादिकं अम्बुनि प्रतिफलिते चन्द्रे अविवेकात कल्प्यते तद्वदात्मनीत्यर्थ ।

इच्छाद्वेषसुखदु खादीनात्मधर्मान् मन्यन्ते वैशेषिकादय । तान्निराकरोति-रागेच्छेति—

**रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते ।**
**सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तुनात्मनः ॥ २२ ॥**

रागेच्छादि सुखदु खप्रयत्नादिकं सर्वं बुद्धेरेव न त्वात्मन । कथ? जाग्रत्स्वप्नयो बुद्धौ सत्या प्रवर्तते । सुषुप्तौ तस्या बुद्धेर्नाशे कारणे लीने तन्न प्रवर्तते । तस्माद्बुद्धेरेव धर्मा न त्वात्मन । इति ।

तस्यात्मन कीदृक् स्वभाव इत्याशङ्कयात्मस्वभावमुपदिशति प्रकाश इति ।

**प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ।**
**स्वभावस्सचिदानन्दनित्यनिर्मलतात्मनः ॥ २३ ॥**

यथा प्रकाश एव अर्कस्य स्वभाव । तोयस्य शैत्य, अग्नेरुष्णता तथा आत्मनोऽपि सच्चिदानन्दनित्यनिर्मलता स्वभाव=स्वरूपमित्यर्थ ।

यद्यविकारोऽयमात्मा जानामीति प्रत्यय कथमित्यपेक्षायामाह आत्मन इति—

**आत्मनस्सचिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् ।**
**संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥ २४ ॥**

प्रत्यगात्मन सच्चिदश अश इवाश आत्माभास । बुद्धे वृत्तिश्च एतद्द्वय अविवेकेन संयोज्य असगस्यात्मन सयोज्य, असगस्यात्मन केनापि सयोगो नास्त्येव तथापि अज्ञानवशान्मेलन सम्भाव्य जानामीति प्रत्यय साभासाहकारवृत्ति प्रवर्तते । प्रत्यगात्मनि किंचिद्विकारो नास्तीति भाव

एतदेव स्पष्टयति-आत्मन इति ।

**आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्वपि ।**
**जीवस्सर्वमलं ज्ञात्वा ज्ञाता द्रष्टेति मुह्यति ॥ २५ ॥**

आत्मा स्वभावादेव विकारशून्य । बुद्धे कदाचिदपि बोधलेशोऽपि नास्ति, आत्मन्यपि विक्रिया नास्ति, तथापि जीव साभासाहकार साभासान्तःकरणवृत्तीनामेकत्र तत्राय-

पिण्डवत्संगतमेव, अत्यल्पार्थं देहेन्द्रियादिकमहमिति ज्ञात्वाऽविचार्य अहं ज्ञाता द्रष्टा भोक्ता कर्ता जातो मृत इति, मुह्यति = भ्रमत इत्यर्थः ॥

आत्मा स्वयमेव स्वप्ने वा अविवेकेनान्यधर्मानारोप्य बिभेतीत्याह - **रज्जुसर्पवदिति** ॥

**रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् ।**
**नाहं जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत् ॥ २६ ॥**

रज्जौ सर्पारोपणं कृत्वा भयकम्पनादिकं वहेत् । एवं आत्मानं जीवं मत्वा बहु-दुःखसंसारमग्नो भवति । यदा शास्त्राचार्योपदेशवशात् विवेकचक्षुषा स्वमात्मानं अखण्डैकरूपं जानाति तदा भयरहितः सुखी भवेत् ।

**आत्मेति ।**

**आत्मावभासयत्येको बुध्यादीनीन्द्रियाणि हि ।**
**दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥ २७ ॥**

आत्मा केवलमेक एव सन्नपि बुद्ध्यादीनि अवभासयति, तैस्तु नावभास्यते । यथा एक एव दीपः घटादिकं तद्वदित्यर्थः ।

आत्मा बुध्यहंकारादीनपेक्षते स्वप्रकाशने इति स्वीकर्तव्यमित्याशंकायाह - **स्वबोधेति ।**

**स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः ।**
**न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥ २८ ॥**

आत्मनो बोधरूपत्वात् स्वबोधे नित्ये सति तस्यात्मनो बोधाय ज्ञानांतरापेक्षा नास्त्येव। अनुभवरूपत्वात् । यथा दीपस्य स्वप्रकाशने दीपान्तरापेक्षा नास्त्येव तद्वदित्यर्थः ।

यदि बुध्यादिभि. आत्मा ज्ञेयो न भवेत्तर्हि आत्मज्ञाने उपायान्तरं वक्तव्यम् । स उपाय कथमित्यत आह - **निषिध्येति ॥**

**निषिध्य सकलोपाधीन्नेतिनेतीति वाक्यतः ।**
**विन्द्यादैक्यं महावाक्ये जीवात्मपरमात्मनोः ॥ २९ ॥**

अथात आदेशो नेतिनेतीत्यतन्निरसनवेदान्तवाक्येन तत्त्वंपदार्थगतसर्वज्ञत्वकिंचि-ज्ज्ञत्वाखिलोपाधीन्निषिध्य-अनात्मत्वेन ज्ञात्वा निरस्य 'तत्त्वमसि' 'अयमात्मा ब्रह्म अहं ब्रह्मास्मि' इत्यादिवाक्यै. लक्षणया ब्रह्मात्मैक्यज्ञानं विंद्यात् प्राप्नुयात् । अनेन प्रकारेण ज्ञातव्यमित्यर्थः ।

आत्मस्वरूपज्ञाने अतन्निरसनाभावे का क्षतिरित्याशङ्क्य अतन्निरसनाभावे आत्मा ज्ञातुमशक्यः। यथायं सर्प इत्यारोपितस्य सर्पस्यापाकरणाभावे रज्जुज्ञानं नोत्पद्यते तद्वदनात्मनिरसनेनात्मा ज्ञातव्य इत्याशयेनाह - **आविद्यकमिति** ॥

आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम्।
एतद्विलक्षणं विन्यादहं ब्रह्मेति निर्मलम् ॥ ३० ॥

देहेन्द्रियादि सर्वं दृश्यजातं, आविद्यकं, दृश्यत्वाद्बुद्बुदवत्, क्षरं, एतद्विलक्षणं निर्मलं निरुपाधिकं नित्यमेकं सच्चिदानन्दात्मकं ब्रह्मैवाहमस्मीति विन्द्यात्, ततः कृतकृत्यो भवतीत्यर्थः ॥

एवमुक्तरीत्याऽऽत्मानमद्वयानन्दं वाक्यार्थज्ञानेनापरोक्षतया ज्ञात्वा स्वानुभवावष्टंभेन आत्मन्येवात्मनो मननप्रकारमाह पंचभिः श्लोकैः। देहान्यत्वादिति—

देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ॥ ३१ ॥

देहान्यत्वात् दृश्यादिस्तामावस्थूलशरीराद्यन्यत्वाज्जन्मजराकार्श्यलयादयो न सन्ति इन्द्रियादिभिः असंगत्वात् शब्दादिविषयभोगैः संगः=अनुभवः, नास्त्येव, अनुभवत्वात् न मे दुःखरागद्वेषादयः। "अप्राणो ह्यमनाश्शुभ्र" इत्यादिश्रुतेः।

कथमिन्द्रियप्राणमनसामभावस्तत्रैवेत्याशंक्य श्रुतिं प्रमाणयति—

अमनस्त्वान्न मे दुःखरागद्वेषभयादयः।
अप्राणो ह्यमनाश्शुभ्र इत्यादिश्रुतिशासनात् ॥ ३२ ॥

अत्र श्रुतिः-अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः। एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। अप्राणो ह्यमना इति स्वार्थः ॥

गुरोः प्रसादात्स्वानुभवसिद्धमर्थं चाभिनन्दयति निर्गुण इत्यादिभिः त्रिभिः श्लोकैः ॥

निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३३ ॥

अहं निर्गुणः बुध्याद्यभावात्। निष्क्रियः=इन्द्रियाद्यभावात्। नित्यः, अविद्यातत्कार्यरहितत्वात्।

पूर्वोक्तहेतुभिः अवशिष्टं स्वरूपं अज्ञासिषमित्युक्ते तत्किमवशिष्टमित्याशंक्याह- अहमिति।

अहमाकाशवत्सर्वंबहिरन्तर्गतोऽच्युतः ।
सदा सर्वसमश्शुद्धो निस्संगो निर्मलोऽचलः ॥ ३४ ॥

आकाशवत्सर्वस्य दृश्यजातस्य बहिरन्तर्गत अच्युत =च्युतिरहित सदा सर्वसम = विषमेऽपि सम व्याप्य स्थित तथापि शुद्ध निर्लेप अचल पूर्णस्य चलनाभावात् ॥

पूर्वोक्तश्लोकमनन चिरकालाभ्यस्त सत् पुरुषार्थं साधयतीत्याह एवमिति—

एवं निरन्तरकृता ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३५ ॥

एवमुक्त ब्रह्मैवाहमस्मीति नैरन्तर्येण चिरकालाभ्यस्तवासना अविद्याकृतचित्तविक्षेपान् निश्शेषतो नाशयति । यथा रसायन औषध चिरकालसेवित सत् रोगान्निश्शेषतो नाशयति तद्वदित्यर्थ ॥ नित्य इति—

नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत् परब्रह्माहमेव तत् ॥ ३६ ॥

सत्यादिश्रुत्या यत्प्रतिपाद्यते तत् परब्रह्मैवाहमस्मीति स्वरूपतत्त्व कथितम् ॥

ब्रह्मानुसन्धाने साधननियमानाह—विविक्त इति ॥

विविक्तदेश आसीनो विरागो विजितेन्द्रियः ।
भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥ ३७ ॥

ब्रह्मण्येव स्थिता बुद्धि यस्य तादृशो भवेत् । दृश्यप्रपचे जाग्रति कथमेकत्वभावना सभवतीत्यत आह—आत्मनीति ।

आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ।
भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३८ ॥

अखिल दृश्यजात सुधी = शुद्धात करण सन् शुद्धया धिया आत्मन्येव समाधिसमये प्रविलाप्य प्रकर्षेण नाशयित्वा तदा द्वितीयाभावादेकमात्मान सर्वोत्कृष्टाकाशवद्भावयेत् ॥

परमार्थदर्शी मुनि नामरूपवर्णादिक सर्वं विहाय परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते इत्याह—रूप इति ॥

रूपवर्णादिकं सर्वं विहाय परमार्थवित् ।
परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥ ३९ ॥

रूपवर्णादिकमिति स्पष्टोऽर्थ ।

ननु प्रमातृत्वादित्रिपुटीज्ञानं वर्तमानमुपलभ्यते । कथमेकत्वमात्मनेत्याशङ्क्य परमात्मनि भेदो नास्तीत्याह—ज्ञात्रिति ॥

ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ।
चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव तत् ॥ ४० ॥

ज्ञातृज्ञानज्ञेयभेदः परमात्मनि न विद्यते भेदः कल्पितात्मन्येव अवभाति ज्ञानानन्दैकरूपत्वादात्मा स्वयमेव दीप्यते = प्रकाशते ॥

एवं विशुद्धवस्तुज्ञानात्प्रत्यक्षफलमाह—एवमिति ।

एवमात्मारणौ ध्यानमथने सततं कृते ।
उदितावगतिज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ ४१ ॥

आत्मा अन्तःकरणमेव अरणिः तस्मिन् मन एव उत्तरारणिः ध्यानेन तयोर्मथने सर्वदा कृते तत्रोदिता ज्वालारूपावगतिः ज्ञानं विद्या अज्ञानमेव इन्धनं मूलाज्ञानं निःशेषतः सपरिकरं दहति = नाशयति । तितिक्षुः मुमुक्षुः स्वाराज्येऽभिषक्तः कृतकृत्यो भवतीत्यर्थः ॥

जीवपरयोरत्यन्तैक्यज्ञानेन अविद्यापरिकल्पितान्धतमसि निःशेषमपयाते सति परमात्मा स्वयमाविर्भवतीत्याह—अरुणेति ।

अरुणेनेव बोधेन पूर्वसन्तमसे हृते ।
तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४२ ॥

अरुणेन प्रकाशेनादौ अन्धकारक्षये अंशुमान् यथा आविर्भवेत् तद्वदात्मापीत्यर्थः ॥

आत्मा सर्वदा परोक्षस्वभावत्वादप्राप्त एव कदा प्राप्तो भवेदित्याह—आत्मेति ।

आत्मा तु सततं प्राप्तो ह्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४३ ॥

आत्मा सर्वत्र परिपूर्णः अद्वयानन्दस्वरूपः सर्वदाप्राप्त एव । अविद्यावशाद्भ्रान्त्या अप्राप्त इव भाति । तन्नाशे तदावरणाविद्यानाशे वाक्यश्रवणात्प्राप्त इव कण्ठगतचामीकरन्यायेन तद्वदित्यर्थः ।

ननु जीवस्य परमात्मैक्यमयुक्तमित्याशंक्याह—स्थाणाविति ।

स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विके रूपे सम्यग् दृष्टे निवर्तते ॥ ४४ ॥

*यथाऽन्धकारे स्थिते स्थाण्वादौ पुरुषोऽयमित्याशङ्कया बिभेति तथैवाविवेकाद्ब्रह्मणि* जीवत्वमारोप्य। यदा तत्त्वमस्यादिवाक्योपजनितविवेकदृष्ट्या तस्य जीवस्य तात्त्विके रूपे सम्यक्दृष्टे सति कल्पितत्वाज्जीवत्वमपि निवर्तते तदैव ब्रह्मैवाहमिति जानीयादित्यर्थः।

अहममेति प्रत्यये जाग्रति कथमैक्यज्ञानमित्याशङ्क्याह—**तत्त्वस्वरूपेति**।

**तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमंजसा।**
**अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत्॥ ४५॥**

जीवपरयो नैरन्तर्याभासेनैकत्वानुभवादुत्पन्नं यद्ज्ञानं तदहं ममेति अज्ञानं बाधते दिग्भ्रमादिवत्। अनुभवदर्शनादित्यर्थः।

अहं ममेति प्रत्यये नष्टे योगी विज्ञानेन चक्षुषा सर्वं दृश्यजातं स्वात्मन्येवाभेदेन पश्यतीत्याह—**सम्यगिति**।

**सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम्।**
**एकं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा॥ ४६॥**

सम्यग्विज्ञानवान्योगी अधिष्ठानभूते स्वात्मनि अखिलं विश्वं स्थितं पश्यति विज्ञानेन चक्षुषा मृत्सुवर्णादिवत्। *यद्वा आत्मत्वाच्च प्रमातृत्वात्सर्वभूतेषु मशकादिष्वपि नियन्तृत्वेन वर्तमानं* निरतिशयैश्वर्यं पश्यति ननु तारतम्येन, किंच मलिनभूतेष्वपि निरतिशयेन जात्याद्यप्रसक्त्या ऐश्वर्यादि पश्यति परिपूर्णत्वात्। तदा कृतकृत्यो भवतीत्यर्थः॥

नन्वात्मा सर्वं न भवति। प्रत्यक्षविरोधात्। नानात्वेन दृश्यमानमिदं कथमात्मन्यभेदेन पश्यतीत्यत आह—**आत्मैवेति**।

**आत्मैवेदं जगत्सर्वं आत्मनोऽन्यन्न किञ्चन।**
**मृदो यथा घटादीनि स्वात्मानं सर्वमीक्षते॥ ४७॥**

इदं सर्वंजगदात्मैव आत्मकार्यत्वात्। अतोऽन्यदात्मनः किंचिन्न विद्यते। यथा घटशरीरादि मृत्कार्यं मृदन्यन्न भवति। अत आत्मन्येव सर्वं दृश्यजातं न भेदेनेक्षते पश्यतीत्यर्थः। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"। "सर्वंखल्विदं ब्रह्मेति श्रुतेः।

एवंभूतश्चेज्जीवन्मुक्तो भवति—**जीवन्निति**।

**जीवन्मुक्तस्तु तद्विद्वान्पूर्वोपाधिगुणांस्त्यजेत्।**
**स सच्चिदादिधर्मत्वं भेजे भ्रमरकीटवत्॥ ४८॥**

अनाद्यविद्यापरिकल्पितस्थूलशरीराद्युपाधिगुणान्परित्यजन्नयमेव जीवन्मुक्त इत्युच्यते।

सच्चिदानन्दादिधर्मत्वात्। भ्रमरकीटवत्साक्षाद्ब्रह्म मेने प्राप्नोतीत्यर्थः। ततः स्वात्मारामः सुखं तिष्ठतीत्याह—तीर्त्वेति।

**तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान्।**
**योगी शान्तिसमायुक्त आत्मारामो विराजते ॥ ४९ ॥**

मोह एव अर्णवः अपर्यन्तत्वात्, तं ज्ञानप्लवेनैव तीर्त्वा, रागद्वेषादय एव राक्षसाः मोक्षपरिपन्थिनः। तान्निश्शेषतो नाशयित्वा, शान्तिसमायुक्तः=शमदमादिसमेतः। आत्मारामः आत्मन्येव क्रीडा यस्य सः। विराजते = स्वाराज्येऽभिषिक्तः प्रकाशत इत्यर्थः॥

जीवन्मुक्तस्य लक्षणमाह—बाह्येति—

**बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः।**
**घटस्थदीपवच्छश्वदन्तरेव प्रकाशते ॥ ५० ॥**

बाह्येन्द्रियोद्भवां अनित्यसुखासक्तिं=वासनां हित्वा, तत्र हेतुः आत्मसुखनिर्वृत इति। घटस्थदीपवदन्तरेव स्वसाक्षितया आत्मानुभव इतरैर्न ज्ञायत इत्यर्थः।

एवमुक्तप्रकारेण जीवन्मुक्तेन प्रारब्धसंक्षयपर्यन्तं वर्तितव्यमित्याह-उपाधिरिति।

**उपाधिस्थोऽपि तद्धर्मैर्न लिप्तो व्योमवन्मुनिः।**
**सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५१ ॥**

देहाद्युपाधिसाक्षित्वेन स्थितोऽपि मुनिः व्योमवत्तद्धर्मैः नानुलिप्तः कर्मलेपो नास्त्येव। सर्वज्ञोऽपि प्राकृतवत्तिष्ठेत्। सर्वत्र विषयेषु यदृच्छया प्राप्तेष्वपि आसक्तिरहितस्सन्वायुवच्चरेत्।

प्रारब्धक्षये सति देहद्वयोपाधौ विलीनेऽपि देहात्कैवल्यमाह—उपाधिविलयादिति।

**उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः।**
**जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा ॥ ५२ ॥**

उपाधिभूतदेहद्वयलये प्रारब्धकर्मसंक्षये मुनिः=योगी सन्। विष्णौ=सर्वव्यापके परब्रह्मणि निर्विशेषं यथा भवति तथा विशेत्। दृष्टान्तः—जले जलमित्यादि।

ब्रह्म सर्वातिशयत्वात्तटस्थलक्षणेनाभिनयतीति श्लोकत्रयेणाह—यल्लाभादिति।

**यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्।**
**यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५३ ॥**

यल्लाभात्=ब्रह्मसाक्षात्कारलाभादपरो लाभो न विद्यते, सर्वलाभानामत्रैवान्तर्भूतत्वात्। ब्रह्मानन्देषु क्षुद्रानन्दानां अन्तर्भावनम्। यत्सुखात् = ब्रह्मानुभवसुखादपरं सुखं नास्ति। निरतिशयसुखत्वात्। यज्ज्ञानात् = ब्रह्मसाक्षात्कारज्ञानादपरं ज्ञानं नास्ति। मोक्षहेतुत्वात्। तद्ब्रह्मेत्यवधारयेत् = जानीयादित्यर्थः। यद्दृष्ट्वेति—

यद् दृष्ट्वा न परं दृश्यं यद्भूत्वा न पुनर्भवः।
यज्ज्ञात्वा न परं ज्ञेयं तद्ब्रह्मेत्यवधारयेत्॥ ५४॥

यद्ब्रह्म दृष्ट्वा पुनरन्यद्दृश्यं नास्ति तत्रैव पुरुषार्थस्य सिद्धत्वात्। यज्ज्ञात्वा = येन परमात्मनाऽऽत्मैक्यं ज्ञात्वा, न पुनर्भवः जन्मादिकं नास्ति। यज्ज्ञात्वा = यत्स्वरूपं ज्ञात्वाऽन्यत् ज्ञेयं नास्ति तद्ब्रह्मेत्यवधारयेत्। अन्यत्सर्वं वृथापाण्डित्यमेव।

स्वरूपलक्षणं श्लोकद्वयेनाह—तिर्यगूर्ध्वमिति।

तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्।
अनन्तं नित्यमेकं यत् तद्ब्रह्मेत्यवधारयेत्॥ ५५॥

स्पष्टोऽर्थः।

अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽव्ययम्।
अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत्॥ ५६॥

स्पष्टोऽर्थः।

ननु ब्रह्मादयोऽपि निरतिशयानन्दा एव श्रूयन्ते। तत आह—अखण्डेति।

अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः।
ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनोऽखिलाः॥ ५७॥

लवा ब्रह्मेन्द्रादयः परिच्छिन्नानन्दा एव। ब्रह्मत्वखण्डानन्दरूपत्वादपरिच्छिन्नानन्दमेव, तस्य आनन्दसमुद्रस्य लेशमाश्रित्य ब्रह्मादयः आनन्दिनो भवन्ति आनन्दतारतम्येन। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः।

आत्मैव परमप्रेमास्पदतया सर्वप्रियतमो भवतीत्याह—तद्युक्तमिति।

तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले॥ ५८॥

अखिलं देहादिवस्तु तद्युक्तं तेन संयुक्तमेव प्रियतमम्। व्यवहारोऽपि तद्युक्त एव अत्यन्तं प्रियः। तस्मात्सर्वगतं ब्रह्मात्यन्तप्रियं, यथाखिले क्षीरे घृतमिव व्यापित्वात् आत्मैव प्रियत्वेन सिद्धः।

तर्ह्यात्मा केन प्रकारेण सर्वं व्याप्य तिष्ठतीति जानीयादित्याशङ्क्य साक्षाद्वक्तुमशक्यत्वात्तत्तारूपेण भातीत्यनण्वस्थूलमिति श्रुतिं प्रमाणयतीत्याह—अनण्वेति ।

अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् ।
अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत् ॥ ५९ ॥

स्पष्टोऽर्थः ।

पुनस्तदेव ब्रह्म ज्ञानार्थं श्लोकत्रयेण प्रथमं निरूपयति—यद्भासेति ।

यद्भासा भास्यतेऽर्कादि भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६० ॥

यत्तेजोभासा भान्वादिकं भास्यते भास्यैरर्कादिभिर्यत्तेजो नावभासते । "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति श्रुतेः ॥

तथा गीताशास्त्रे—

न तद्भासयते सूर्यो न शशांको न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं ममेति ॥ ६१ ॥

येन सर्वमिदं भाति तद्ब्रह्मेति जानीयात् ॥

तप्तायःपिण्डवत्स्वयमेव अन्तर्बहिर्व्याप्य प्रकाशत इत्याह—स्वयमिति ।

स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥ ६२ ॥

स्पष्टोऽर्थः ।

पुनस्तदेवाह—जगद्विलक्षणमिति ।

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन ।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका ॥ ६३ ॥

सर्वं ब्रह्मैव सत्यं तथापि जगद्रूपेण यदा पश्यन्ति तदाब्रह्मजगद्वैलक्षण्येन तत्कार्यत्वेन विचार्य ज्ञातुं शक्यम् । ब्रह्मणोऽन्यद्वस्तु न विद्यते । मृत्सुवर्णादिवत् । ततोऽन्यत्किंचिद्दृश्यते चेत्तन्मिथ्या मरुमरीचिकाजलवदित्यर्थः ॥

पुनस्तदेव स्पष्टयति—दृश्यत इति ।

**दृश्यते श्रूयते यद्यत् ब्रह्मणोऽन्यन्न तद्भवेत् ।**
**तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम् ॥ ६४ ॥**

चक्षुषा यद्दृश्यते श्रोत्रेन्द्रियेण यच्छ्रूयते मनसा यत्स्मर्यते वाचा यदभिधीयते तत्त्वज्ञानात्सर्वं ब्रह्म । "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्व ततस्तु त पश्यते निष्कल ध्यायमान" इत्यादिश्रुते । "न कर्मणा न प्रजये" त्यादिश्रुते । तथा गीताशास्त्रे—"नाह वेदै" रित्यादि—भक्त्यात्वनन्यया शक्य इत्यन्तेन ।

ननु सर्वगत चेद्ब्रह्म सर्वं किं न दृश्यत इत्याशंक्य न चक्षुरादिभि गृह्यत इत्याह—**सर्वगमिति ।**

**सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते ।**
**अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६५ ॥**

अज्ञानचक्षु सर्वगतमपि सच्चिदानन्दमद्वय ब्रह्म न पश्यति । "न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एन विदुरमृतास्ते भवन्ति । तमक्रतु पश्यति वीतशोको धातुप्रसादान्महिमानमीश" मित्यादिश्रुते । तत्र दृष्टान्तमाह—प्रकाशमानमपि भानुं=सूर्यं अन्धो न पश्यति तद्वदित्यर्थ ॥

एव तावदुक्तरीत्याऽनुभवसम्पन्नस्यापि तदभ्यासरहितस्य वासनाबलात्किंचिदज्ञानं सम्भवति । तत्परिहारार्थं पुन श्रवणादीनि कार्याणीत्याह—**श्रवणादिभिरिति ॥**

**श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः ।**
**जीवस्सर्वमलान्मुक्तः स्वर्णवद्दृश्यते स्वयम् ॥ ६६ ॥**

जीव प्रत्यगात्मा साभासाहंकार इह श्रवणमननादिभि दीप्त = प्रकाशित' ज्ञानाग्निपरितापित ज्ञानमेवाग्नि तेन परितापित=शोधित इत्यर्थ । सर्वाज्ञानमलान्मुक्त स्वयमेव सम्यक्प्रकाशते । यथाग्निना परितापित स्वर्णं स्वोपाधिद्रव्य हित्वा स्वरूपेण प्रकाशते तद्वदित्यर्थ ।

एव शोधितो जीव परमात्मा हृदाकाशतमोऽज्ञानमुपसहरन्भानुवत्प्रकाशत इत्याह **हृदाकाश इति ॥**

**हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोपहृत ।**
**सर्वव्यापी सर्वधारी भाति भासयतेऽखिलम् ॥ ६७ ॥**

बोध एव भानुः आकाशवत्सर्वव्यापी सर्वस्य आधारभूतत्वात् सर्वाधारो भाति । सर्वस्वरूपेण सर्वं ब्रह्माहमिति प्रकाशते। मृत्सुवर्णादिवत् "सर्वं खल्विदं ब्रह्म" तिश्रुतेः। "विश्वं भूतं" इत्यादि "तस्मै रुद्राय नमो अस्तु" त्यन्तं श्रुतेः । रुः अशुभं द्रावयते इति= रुद्रः ॥

आत्मज्ञस्य परमज्ञानप्रतिबन्धकदुरितपरिहारार्थं नानापदार्थयोगः कर्तव्य इत्याशंक्य स्वात्मतीर्थरतस्य न किंचित्कर्तव्यमस्तीत्याह—

दिग्देशकालाद्यनवेक्ष्य सर्वगं
शीतादिहृन्नित्यसुखं निरंजनम् ।
यःस्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ॥ ६८ ॥

यः निष्क्रियः परमहंसः स्वात्मतीर्थं भजते सः सर्ववित् =सर्वज्ञः सर्वगः परमात्मस्वरूपत्वादमृतः । मुक्तो भवेत् ।........स्वात्मतीर्थं दिग्देशकालाद्यनवेक्ष्य शीतादिहृत् = शीतादिभेदद्वःखानि हरतीति शीतादिहृत् । नित्यसुखं = परमानन्दहेतुत्वात् । अत एव निरञ्जनम् । इतरतीर्थेषु तद्वैपरीत्यं द्रष्टव्यम् ॥ तस्मादात्मतीर्थरतस्य न किंचिदवशिष्यत इति भावः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमच्छङ्करभगवत्पादशिष्यश्रीपद्मपादाचार्येण

कृतं वेदान्तसाराख्यं व्याख्यानं
संपूर्णम् ॥

श्रीकृष्णार्पणमस्तु ॥
श्रीगुरुभ्यो नमः ॥

हरिः ओम्



॥ श्रीः ॥

# ॥ वेदान्तसारसर्वस्वम् ॥



वेदान्तविज्ञानसुनिश्चितार्थैः
योगीश्वरैः ध्येयमज विशुद्धम् ।
उमानुमाभ्यामधिगम्यमानं
वन्दे महेशं सदनुग्रहाशम् ॥ १ ॥

पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
वेदान्तसारसर्वस्वं कुरुते बुद्धिशुद्धये ॥ २ ॥

वेदा ऋगादयो ज्ञेयास्तदन्तस्तच्छिरो मतम् ।
तस्य सारो महावाक्यं तत्वमस्यादिरूपकम् ॥ ३ ॥

सर्वस्व तेन यद्बोध्यं ब्रह्मात्मैक्यं परंपदम् ।
तस्य सर्वं स्वमित्येव व्युत्पत्त्या त्वभिधीयते ॥ ४ ॥

तस्य निर्वचनं कार्यं तत एतदुदीर्यते ।
निश्चित चोभयोरैक्य जीवात्मपरमात्मनो ॥ ५ ॥

इन्त्यविद्या यतो ब्रह्मविद्यातोपनिषन्मता ।
तत्साधनत्वाद्वेदान्तवाक्येषूपनिषत्पदम् ॥ ६ ॥

वर्तेते लक्षणावृत्त्या मुख्यया ज्ञानवाचकम् ।
दग्दृश्यौ द्वौ पदार्थौ हि वेदान्तेषु समीरितौ ॥ ७ ॥

दगात्मा वियदादिस्तु प्रपंचो दृश्य ईर्यते ।
दृश्यं च त्रिविध ज्ञेय रूप नाम च कर्म च ॥ ८ ॥

हस्तपादादिमद्रूप चैत्रमैत्रादि नाम च ।
धर्माधर्मौ कर्मनाम्नौ दृश्यमेव त्रिधा मतम् ॥ ९ ॥

स्वयं प्रकाशं चैतन्यं दृक्पदार्थोऽभिधीयते ।
स चापि द्विविधो ज्ञेयः सगुणोऽगुण इत्यपि ॥ १० ॥

अज्ञान गुण इत्युक्तं परार्थत्वादिहेतुत. ।
तेन चोपहितस्सोऽयं सगुणस्समुदीर्यते ॥ ११ ॥

अज्ञानं तु स्वयंसिद्धं चैतन्येनात्रभास्यते ।
अहमज्ञो न जानामि त्वदुक्तमिति भासनात् ॥ १२ ॥

चैतन्यमाश्रयस्तस्य स एव विषयो मनः ।
भूतभौतिकसंवस्य जाड्यात्नो विषयात्मता ॥ १३ ॥

विभ्रमावृतिशक्ती द्वे मूलाज्ञानस्य तिष्ठतः ।
एकया विक्षिपत्येन जीवेशादिविभागत. ॥ १४ ॥

अन्यया ऽनन्यसंसिद्धमावृणोति परं विभुम् ।
सच्चिदानन्दमद्वैतमज्ञानं तेन भावितम् ॥ १५ ॥

शक्तिद्वययुताज्ञानविम्बितस्सगुणो भवेत् ।
स विश्वतैजसप्राज्ञभेदेन त्रिविधो मतः ॥ १६ ॥

जाग्रन्मानी तु विश्वोऽयं स्वप्ने यश्चाभिमानवान् ।
स तैजसस्सुषुप्ते स्यात्प्राज्ञस्तत्राभिमानवान् ॥ १७ ॥

मनोबुध्यक्षसंघातैर्यत्रार्थस्संप्रतीयते ।
स जागर इति ज्ञेयो नेत्रे जागरितश्रुते. ॥ १८ ॥

जाग्रद्वासनया रक्त मन करणवर्जितम् ।
गोचरत्व यदा यचे साक्षिणस्स्वप्न ईर्यते ॥ १९ ॥

अज्ञाने मनसो बुद्धे करणाना स्थितिर्यदा ।
सा सुषुप्तिस्समाख्याता सम्प्रसाद इति श्रुतेः ॥ २० ॥

एवं त्रयमतस्थाना तत्र तत्राभिमानतः ।
परो जीव इति श्रुत्या बहुशः प्रतिपाद्यते ॥ २१ ॥

पुरश्चक्रे स एषेति जीवेनानेन चेत्यपि ।
तच सृष्ट्वा तदेवेति बहुशः श्रुतिदर्शनम् ॥ २२ ॥

जीवस्सृजति संसारं मनसा बहु कल्पयन् ।
एकस्मिन्पिण्ड एवात. पितृत्वादि प्रकाशते ॥ २३ ॥

पिता भ्राता सुतः पौत्रो भर्ता ज्येष्ठस्तथानुजः ।
देवरो भावुकस्याल इत्येवं बहुधेक्ष्यते ॥ २४ ॥

अविद्यातज्जसंसृष्टो जीव इत्यभ्यधारित. ।
अविद्यामात्रसम्बन्ध ईश इत्यभिधीयते ॥ २५ ॥

एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापो भूरित्यादिश्रुतिशासनात् ॥ २६ ॥

जगत. कारणं त्वीशो जगच्चापि चराचरम् ।
अध्यात्ममधिदैवं चाप्यधिभूतमिति त्रिधा ॥ २७ ॥

स एव साक्षी जगतः सोऽन्तर्यामीति चोच्यते ।
सर्वज्ञस्सर्वशक्तिश्च मायया समुदीर्यते ॥ २८ ॥

अगुणस्तु परात्मैव सच्चिदानन्दविग्रहः ।
विज्ञानमानन्दमिति श्रुतिराह तदात्मताम् ॥ २९ ॥

सन्नित्यशुद्धो बुद्धश्च मुक्तश्चाज्ञानवर्जनात् ।
स्वयञ्ज्योति परब्रह्म इत्यादिश्रुतिवाक्यत. ॥ ३० ॥

सजातीयविजातीयस्वगतैश्च त्रिधा भिदा ।
सगुणस्तद्द्वयवाच पुरुषोऽगुण ईरित. ॥ ३१ ॥

एव पदार्थौ द्विविध सक्षेपात्प्रतिपादित ।
पुरुषार्थोऽत्र केन स्यात्कथ वेति तदीर्यते ॥ ३२ ॥

ज्ञानादेव ▮ कैवल्यं प्राप्यते येन मुच्यते ।
विचार्य तत्त्वमेवेति त्यागेनेति श्रुतिर्जगौ ॥ ३३ ॥

अहं ब्रह्म भवानीति तदात्मानमवेदिति ।
तद्वैतद्वामदेवोसावृषि पश्यन्नितीरितम् ॥ ३४ ॥

प्रत्यपद्यत तद्यो यो देवनामिति च श्रुतिः ।
ब्रह्मविज्ञानमेवैषा मोक्षसाधनमाह नः ॥ ३५ ॥

न कर्मणा न प्रजया प्लवा ह्येते ऽदृढा इति ।
इत्यादिश्रुतयः प्राहुः कर्मणा तन्निषेधनम् ॥ ३६ ॥

यथा कर्मजितो लोकः आरामादिर्विनश्यति ।
तथा पुण्यजितो लोकः स्वर्गादिः क्षीयते नृणाम् ॥ ३७ ॥

इत्यादिश्रुतयः प्राहुः कर्मसाध्यस्य नाशताम् ।
कृतकं यदनित्यं तदिति तर्कोपबृंहिताः ॥ ३८ ॥

कर्मणैव हि संसिद्धिमित्यादिज्ञानसाधनम् ।
कर्मणः प्राह यज्ञेनेत्यादिवाक्यं तथेक्ष्यते ॥ ३९ ॥

समुच्चयोऽपि नैव स्यान्मुक्तौ तु ज्ञानकर्मणोः ।
साधनत्वप्रतीतिं तु पारंपर्येण योजयेत् ॥ ४० ॥

अन्तःकरणशुद्धिस्स्यादसंकल्पितकर्मणा ।
सत्वे शुद्धे ज्ञानजन्म ततोऽविद्याहतिर्नृणाम् ॥ ४१ ॥

अज्ञानेनावृतं ज्ञानं प्राप्तमेवाप्यते नृभिः ।
स्वकर्मेन तदज्ञानं लुप्यते च नचान्यथा ॥ ४२ ॥

नानाङ्गं शान्तिदान्त्यादि संन्यासस्सर्वकर्मणाम् ।
नित्यानित्यविवेकश्च इहामुत्रविरागिता ॥ ४३ ॥

ब्रह्मज्ञानं महावाक्याज्जायते बुद्धिशुद्धितः ।
तादात्म्यविषयं नृणां बोधात्तत्वंपदार्थयोः ॥ ४४ ॥

लक्षणावृत्तिरिष्टात्र भागत्यागैकलक्षणा ।
यथा सोऽयं देवदत्तः इत्यादौ समुदीक्ष्यते ॥ ४५ ॥

लक्षणा शक्यसंबन्धाज्जायतेऽनुपपत्तितः ।
जहत्स्वार्थाऽजहत्स्वार्था भागत्यागेति सा त्रिधा ॥ ४६ ॥

गंगायां घोष इत्यादौ जहत्स्वार्था च लक्षणा।
मुख्यं प्रवाहमुत्सृज्य तीरबोधकता यतः ॥ ४७ ॥

कुन्तान् प्रवेशयेत्यादावजहत्स्वार्थता मता।
कुन्तैस्सह भटास्तत्र प्रविशन्ति यतस्ततः ॥ ४८ ॥

सोऽयं चैत्रः पुरा दृष्ट इत्यादौ भागलक्षणा।
पूर्वोक्तद्भागहानेन स्वरूपं लक्ष्यते यतः ॥ ४९ ॥

पूर्वाभ्यां देशकालाभ्यां विशिष्टस्स इतीर्यते।
विशिष्टो वर्तमानेन देशकालादिना त्वयम् ॥ ५० ॥

विशिष्टयोस्तयोरैक्यं न संभवति कुत्रचित्।
भिन्नत्वादेशकालाना स्वरूपं तूपलक्ष्यते ॥ ५१ ॥

एवं वेदान्तवाक्येषु तत्पदेनाभिधीयते।
जगतः कारणं ब्रह्म सर्वज्ञं सर्वशक्तिमत् ॥ ५२ ॥

त्वंपदेन तु संसारी श्वेतकेतुरिहोदितः।
तत्त्वंपदार्थयोरैक्यं महावाक्येन बोध्यते ॥ ५३ ॥

सामानाधिकरण्यस्य श्रवणात्तत्त्वमर्थयोः।
ऐक्यं प्रतीयतेऽथापि विरोधान्न तु युज्यते ॥ ५४ ॥

परोक्षं ब्रह्म संसारी त्वहंप्रत्ययगोचरः।
अपरोक्षपरोक्षत्वे विरुद्धे वस्तुनो यतः ॥ ५५ ॥

अन्वयव्यतिरेकाभ्यामर्तस्तौ शोधयेत्पुमान्।
जाग्रदादिपदार्थेषु चैतन्यस्यानुवर्तनम् ॥ ५६ ॥

अन्वयो व्यतिरेकस्तु पदार्थव्यभिचारिता।
जाग्रदादिपदार्थाश्च सावस्था व्यभिचारिणः ॥ ५७ ॥

प्रत्यक्षतोऽनुभूयन्ते आत्मा तत्रानुवर्तते।
व्यावृत्तादनुवृत्तस्तु पृथक्प्राणिषु सूत्रवत् ॥ ५८ ॥

पार्थक्यादुद्बुद्धिदेहादिवैशिष्ट्यं त्वात्मनो मृषा।
अतो बुध्यादिसाक्ष्येव चैतन्यं वस्तु तत्वतः ॥ ५९ ॥

बुध्यादेरेव संसारः साभासस्येति निश्चयः ।
अशनाया पिपासा च प्राणस्य मनसस्तथा ॥ ६० ॥

शोकमोहौ जरामृत्यू देहस्येति श्रुतिर्जगौ ।
स्वाद्वत्ति पिप्पलं सत्वं तयोरन्य इति श्रुतिः ॥ ६१ ॥

मनसस्संसृतिं प्राह ह्यस्य चासंसृतिं तथा ।
एवं जीवो न बुध्यादिविशिष्टः केवला चितिः ॥ ६२ ॥

एव त्वमर्थमाशोध्य तदर्थं शोधयेत्पुनः ।
जगतः कारणत्वन्तु कूटस्थस्य चिदात्मनः ॥ ६३ ॥

असंगस्य स्वतो नैव संभवत्यद्वयात्मनः ।
किंत्वविद्याकृतं तच्चेत्येवं श्रुतिवचःस्फुटम् ॥ ६४ ॥

इन्द्रो मायाभिरित्यादि तथा च भगवद्वचः ।
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः ॥ ६५ ॥

भूतग्राममिमं कृत्स्नं अवशं प्रकृतेर्वशात् ।
केवलस्यापि हेतुत्वं कुत्रचिच्छ्रुतिचोदितम् ॥ ६६ ॥

आनन्दाद्ध्येव भूतानीत्येवं चेत्केवलात्र तत् ।
गुणोपसंहृतिन्यायात्तत्राप्यविद्यकं जगत् ॥ ६७ ॥

केवलस्य ह्यसंगस्य कारणत्वान्न युक्तिमत् ।
यत्साक्षादपरोक्षं च स्वयंज्योतिरिति श्रुतेः ॥ ६८ ॥

परोक्षतापि नैव स्याद्ब्रह्मणीति विनिश्चितिः ।
एवं पदार्थौ संशोध्य तत्वमाभ्यां विलक्षयेत् ॥ ६९ ॥

चैतन्यमात्रमेवातो वाक्यार्थो न विरोधकृत् ।
एवं सर्वमहावाक्ये लक्षणा भागलक्षणा ॥ ७० ॥

स्वरूपमेव लक्ष्यं स्यात्सोऽयमित्यादिवाक्यवत् ।
एवं सच्चित्परानन्दो नित्यमुक्तोऽस्मि केवलः ॥ ७१ ॥

स्वयंज्योतिर्न संसारीत्येवं शास्त्रगुरूक्तितः ।
विज्ञाय मुक्त एव स्यादिति वेदान्तवोषणम् ॥ ७२ ॥

मत्सन्निधाविथं बुद्धि र्नर्तकीव यथा तथा।
संचरत्वथवा तूष्णीमास्तां साक्षी भवाम्यहम्॥ ७३

एवं वेदांन्तसिद्धान्तसंग्रहो लेशतः कृतः।
गुरुशास्त्रोक्तमार्गेण वर्ततां सन्तु सर्वदा॥ ७४॥

चण्डिकाख्यनदीतीरे विधेन्द्रनदिनामकः।
यतिर्यस्तपोमूर्तिः विद्वदग्रेसरःस्थितः॥ ७५॥

तच्छिष्यः करुणारसार्द्रहृदयो विद्यानिधिस्सन्ततं
व्याकर्ता निखिलस्य शास्त्रनिवहस्यैको गुरुश्चाभवत्।
नाम्ना माधवशारदेति विदितो वादीन्द्रपंचाननो
भक्तानामवलोकनेन दुरितं येनैव संक्षीयते॥ ७६॥

सोऽयं शास्त्रनिबन्धकृद्यतिवरो ब्रह्मानुसन्धानतो
नीत्वा हायनमाश्रमे चिरमुमानाथप्रिये कापिले।
सोदायां पुरि सन्निकृष्टमभलं निश्चित्य देहावधिं
पंपाक्षेत्रमगात्तदैव स गुरुः पुण्यं मुमुक्षुप्रदम्॥ ७७॥

रौद्रब्दप्रयतोत्तरायणयुते मासे च चैत्रोदिते
पक्षे बाहुल्के तिथौ दिनकरे मध्ये चतुर्थ्यामसौ।
सत्यज्ञानसुखात्मको यतिवरो मुक्तो वसिष्ठाश्रमे
तं पम्पाधिपं स्मरन्हृदि शुचौ श्रीतुङ्गभद्रातटे॥ ७८॥

तं वन्द्यं गुरुमद्वयं सदमलानन्दं जगद्व्यापिनं
भक्तानामनुचिन्तितार्थकरणे चिन्तामणिं देहिनाम्।
नित्यं निष्कलमेकमेव मनसा वाचा शरीरेण च
श्रीमन्माधवशारदाख्ययतिमेवाहं भजे सन्ततम्॥ ७९॥

आसीन्माधवभारतीति विदितस्सन्यासिवर्यः पुरा
तेनेयं किल सर्वदर्शनपदोपेता कृता कौमुदी
आनीता च महाबलेश्वरयतिश्रेष्ठैरिमां केरल-
क्षोणीन्ताम्मिलिता वयं लिखितवन्तोऽमी यथापौरुषम्॥ ८०॥

शुभमस्तु॥

॥ श्रीरस्तु ॥

# अद्वैतपंचरत्नम् ॥

बालकृष्णानन्दसरस्वतीविरचितया किरणावल्या समलङ्कृतम् ॥



मन्दस्मितमुखाम्भोजं रमालङ्कृतवक्षसम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

पुण्डरीकाजिनधरं विलसत्फाललोचनम् ।
ज्ञानमुद्राञ्चितकरं दक्षिणामूर्तिमाश्रये ॥

यत्प्रसादलवं प्राप्य प्रत्यूहजलधिं जनाः ।
महारम्भास्तरन्त्येतं विघ्नेशमनिशं नुमः ॥

या श्रियं नगजां वाचां देवीमाहुर्विचक्षणाः ।
तां लोकमातरं वन्दे वाग्विभूतिप्रसिद्धये ॥

यदीयसूक्तिविलसज्ज्ञाननावा भवाम्बुधिम् ।
सन्तस्तरन्ति तं वन्दे पाराशर्यमहर्निशम् ॥

यदीयभाष्यकमलस्यन्दमानमरन्दतः ।
विद्वद्भृङ्गस्तृप्तिमेति शङ्करं तमुपाश्रये ॥

यस्य प्रसादकणिकानौका तारयते नतान् ।
संसारसिन्धुं तं वन्दे सच्चिदानन्दयोगिनम् ॥

यस्योपदेशमाहात्म्याज्जडा अपि विनिर्गताः ।
संसारबन्धात्तं वन्दे वासुदेवेन्द्रयोगिनम् ॥

क्वाहं क्व भगवत्पादकृतिगाम्भीर्यजन्मभूः ।
तथाप्यत्रावगाहं मे काङ्क्षते खलु मानसम् ॥

महता पक्षपातेन दुस्साध्येप्यर्थकल्पने ।
मम सामर्थ्यमस्त्येव टिट्टिभोऽत्र निदर्शनम् ॥

गुरुपादाम्बुजद्वन्द्वध्याननिर्मलमानसः ।
रचये पंचरत्नस्य विवृतिं किरणावलिम् ॥

अथ खलु परमकृपालवो भगवन्तो भगवत्पादा निखिललोकं संसारदावानलपरिपीतमुपलभ्य आत्मज्ञानामृतमेव तदुपशमनं सुखसाधनं चाहुः। युक्तं च तत्। तस्यैव तन्मूलाविद्यानिवर्तकत्वेन तन्निवर्तकत्वात्। तदेव खलु साधकम्, अन्यस्य तत्साधकत्वानुपपत्तेः। तथाहि— न धर्मः सुखसाधकः। तत्फलस्यानित्यत्वेनासुखत्वात्, यो वै भूमा तत्सुखम्। नाल्पे सुखमस्तीति भूम्नः सुखत्वम्। सुखत्वं च प्रतिपाद्य यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यमिति भूम्नो नित्यत्वस्य अल्पस्यानित्यत्वस्य च प्रतिपादनात्। "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति कर्मफलस्यानित्यत्वश्रवणात्। "अतोऽन्यदार्तं" इति ब्रह्मव्यतिरिक्तस्य सर्वस्य अनित्यत्वश्रवणाच्च।

ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति"। "अपाम सोमममृता अभूम" इत्यादौ कर्मफलस्यापि नित्यत्वं श्रूयते ततः तस्यापि सुखत्वमस्त्येव। तथा अर्थोऽपि सुखसाधक एव। धर्मादिहेतुत्वात्। कामस्य सुखहेतुत्वं प्रत्यक्षसिद्धमेव। यदि चार्थस्य राजनिमित्तदुःखफलत्वात्, कामस्यापि व्याध्यादिद्वारा दुःखसाधनत्वात्, तयोः सुखहेतुत्वेऽपि विषसंपृक्तमधुवदनुपादेयता तदा भ्रमात्तयोरुपादानेपि धर्मस्योपादानं स्यादेव तत्फलस्य नित्यत्वात् दुःखासंभिन्नत्वाच्च, श्रुतेरुभयफलनित्यत्वेऽपि तुल्यत्वात्। धर्मस्यैव ज्ञानोपयोगित्वावश्यभावेन "तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेन" इति न्यायेन तत्साधकत्वाच्च धर्म एव सुखसाधकः। न ज्ञानमिति चेन्न। धर्मस्य सुखसाधकत्वानुपपत्तेः। तदेव हि सुखं यन्नित्यं भवति।

नहि धर्मस्य फलं नित्यं भवति, "तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादिश्रुतेः।

ननु कर्मफलस्य नित्यत्वेऽपि श्रुतिरुदाहृता—"अक्षय्यं ह वै चातुर्मास्ययाजिनः" इत्यादि, सत्यं, न सा स्वार्थं लभते, तया बाधितत्वात्।

न च विनिगमनाविरहः, श्रुतित्वाविशेषेण प्राबल्यदौर्बल्ययोरुभयत्रापि तुल्यत्वादिति वाच्यम्। अनित्यत्वप्रतिपादकश्रुतेः यद्यत्क्रियाजन्यं तत्तदनित्यमिति प्रत्यक्षदृष्टव्याप्त्युपोद्बलितत्वेन प्रबलत्वात्।

न च नित्यताप्रतिपादकत्वे अनुग्राहकं प्रमाणमस्ति, नित्यताश्रुतेः दीर्घकालमात्रपर्यवसन्नत्वात्। अश्वत्थामादिनित्यतावत्। अनित्यश्रुतेश्चान्यथयितुमशक्यत्वात्। अन्यथाभावस्य कुत्राप्यदर्शनात्।

न च तर्हि नित्यताश्रुतेः स्वार्थप्रच्यवादप्रामाण्यप्रसङ्गः। रुच्युत्पादनद्वारा प्रवृत्त्युपादकतया तात्पर्यार्थाबाधात्। वाच्यार्थे तात्पर्याभावात्। अन्यथा चातुर्मास्यादावेव सर्वे प्रवर्तेरन्। नान्यत्र। श्रुतिश्चाथर्वणी, स्थूलारुन्धतीन्यायेन "मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि। तान्याचरथ नियतं सत्यकामा" इति नित्यकर्मफलप्रेप्सो कर्मकरणमुक्त्वा अनेन कृतेन किं नित्यं फलं भवतीत्याकाङ्क्षायां "एष वः पुण्यः सुकृतो ब्रह्मलोकः" इति ब्रह्मलोक

फलत्वेन निर्दिश्य ततः परं "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादिना यज्ञादीनामनित्यफलत्वं प्रदर्श्य तत्साधने पुरुषार्थजनकत्वं मन्यमानस्य "जरामृत्युं ते पुनरेवापि यन्ति" इति संसारं प्रदर्श्य आत्मज्ञानमेव पुरुषार्थसाधनमाह—नास्त्यकृतः कृतेन तद्विज्ञानार्थमित्यादिना। अतो न वा धर्मफलस्य नित्यता। अतो न मुख्यसाधनत्वं धर्मस्य, अर्थकामयोस्तु प्रत्युतमेव। तथा च श्रुतिः—"नान्यः पन्था विद्यतेऽयनाय" इति एतेषां तत्साधनत्वनिषेधपुरस्सरं "तमेव विदित्वातिमृत्युमेति" इति ज्ञानस्यैव मुख्यसाधनत्वं दर्शयति। तत्फलस्य च नित्यत्वं प्रागेवोक्तम्। ज्ञानस्य साधनोक्तिः औपचारिकीत्युत्तरत्र वक्ष्यते। अतस्साधनभूतज्ञानोपायमालोचयमाना भगवत्पादाः प्रस्थानत्रयात्मकं ग्रन्थं निर्मितवन्तः तत्रानधिकारिणां केषाञ्चित्संसारदारिद्र्यनिर्दलनाय तत्र कुलनीतिकल्पिता पूर्वपक्षग्रहमकरकीर्णा सिद्धान्तगम्भीरा प्रस्थानत्रयपयोराशेः पञ्चरत्नमद्भुतमादधुः। तदतिस्वभावतः सरलमपि केषाञ्चिन्मन्दमतीनां तदर्थाविष्करणाय प्रयतामहे। शास्त्रस्य तत्त्वमुमुक्षुकथारूपत्वात्तदेकदेशभूतस्यास्य तत्प्रकरणत्वात् प्रकरणस्य बालाधिकारतया बालस्य च जन्मान्तरकृतसुकृतमहिम्ना तज्जन्मकर्तव्यजिज्ञासामवाप्तादृशमेनमवनतं शिष्यं गुरुरुपदिशति, सोपानारोहणन्यायेन पुरुषार्थसाधनानि क्रमेणोपदिदिक्षुः—वेदो नित्यमधीयतामित्यादिना—

**वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयताम्**
**तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम्।**
**पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयताम्**
**आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम्॥ १॥**

बालस्य आदितः कर्तव्यं दर्शयति वेद इति। वेदः सार्थवादमन्त्रविधिकलापः। ब्राह्मणस्यापि विधिरूपत्वात् साङ्ग इति शेषः। अङ्गाध्ययनं विना ज्ञानानुपपत्तेः। अर्थज्ञानस्यानुष्ठानोपयोगित्वेनावश्यकत्वं सूचयति सूत्रकारोऽध्ययनस्य ज्ञानपर्यन्तत्वं स्वनुष्ठीयतामिति, अर्थज्ञानाभावे सुष्ठ्वनुष्ठानानुपपत्तेः। अङ्गानि-शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति श्रुतिगृहीतानि, वेद इत्येकवचनं समस्तवेदाध्ययनस्यासामर्थ्येऽपि एकस्य वाऽध्ययनमावश्यकमिति सूचयितुम्।

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्"

"अविप्लुतब्रह्मचर्यः"

इति वचनादेकस्याध्ययनमपि स्वकुलीनादागतस्येति द्रष्टव्यम्। नित्य=सर्वदा-विहित-काल इति शेषः। विहितेतरकाले निषेधात्॥

आचार्यमष्टमी हन्ति शिष्यं हन्ति चतुर्दशी।
उभौ पञ्चदशी हन्ति प्रतिपत्पाठनाशिनी॥

मद्बोधने मच्छयने मदङ्गपरिवर्तने ।
स्वाध्याय न प्रकुर्वीत मन्वादिषु युगादिषु ॥

इत्यादिवचनात् ॥

अधीयता त्वयेति शेष । अन्यत्रापि क्रियापदेषु त्वयेत्यध्याहार्यम् । श्रुतिश्च-स्वाध्यायोऽध्येतव्य इति अध्ययनकर्तव्यता दर्शयति । ततश्चाधीनाङ्गाद्वेदाच्चदर्थज्ञान जात, ततो मम किं स्यादित्याकाङ्क्षमाण शिष्य प्रत्याह—तदुदित कर्म स्वनुष्ठीयतामिति। तेनाधीतेन वेदेनोदित विहित कर्तव्यतया प्रतिपादितमिति यावत् । विहित च द्विविधम् । प्रत्यक्षविधिविहित अनुमेय विधिविहित च । अर्थवादोन्नेयविधिविहितस्यापि सत्वात् । कर्म नित्यनैमित्तिकप्रायश्चित्तरूप काम्यकर्मत्यागस्य काम्ये मतिस्त्यज्यतामित्युक्तत्वात् । नित्य च कर्म द्विविधम् । श्रौत स्मार्तं च । आद्य अग्निहोत्रादि द्वितीयमौपासनादि च । नैमित्तिक ग्रहणहोमोपरागस्नानादि । प्रायश्चित्त च नैर्ऋतपशुकूष्माण्डहोमादि स्वनुष्ठीयताम् । सुष्ठु अनुष्ठान च कर्मणा साङ्गतयाऽनुष्ठानमेव। अङ्गवैकल्ये च कर्मणा सुष्ठुत्वानुपपत्ते । श्रुतिश्च कर्मकर्तव्यता दर्शयति—"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समा " इति । एवमुक्त भवति । साङ्गवेदाध्ययनानन्तर तदर्थज्ञाने सति विद्वत्ताया सपादितत्वाद्-दाहानन्तर विशिष्टकुलप्रसूतेन त्वया अर्थिना समर्थेन सता साङ्ग कर्मानुष्ठेयमिति ।

ननु साङ्गकर्मानुष्ठानेन मम किमित्यत आह—तेनेशस्य विधीयतामपचितिरिति । तेन साङ्गमनुष्ठितेन कर्मणा ईशस्य=परमेश्वरस्य अपचिति =पूजा विधीयताम्=विधानेन क्रियताम् । इति यावत् ।

ननु यज्ञादिकर्म स्वर्गाद्यर्थं भवति । "ज्योतिष्टोमेन स्वर्गकामो यजेत ।"

सन्ध्यामुपासते ये तु सतत संशितव्रता ।
विधूतपापास्ते यान्ति ब्रह्मलोक सनातनम् ॥

इति श्रुतिस्मृतिभ्याम् । अतस्तस्य कथ पूजार्थत्व अन्यार्थस्यान्यार्थत्वानुपपत्ते ।

न च नित्याना कर्मणा निष्फलत्वात् स्वर्गाद्यर्थत्वानुपपत्ति श्रुतिस्मृती च स्तुत्यर्थे पूर्णाहुतिवाक्यवत् । न च "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥" इति न्यायेन नित्यस्यापि प्रयोजनवत्त्वम् तदभावे प्रवृत्त्यनुपपत्तेरिति वाच्यम् । अकरणे प्रत्यवायश्रवणेन तन्निवृत्त्यर्थतया तत्र प्रवृत्तेरिति वाच्यम् ।

तर्हि तन्निवृत्त्या प्रयोजनवत्त्वेन निष्प्रयोजनत्वाभावाच्छ्रुतिस्मृतिसिद्धस्वर्गभावस्य स्वर्गादे प्रयोजनत्वासम्भवाच्च । पूर्णाहुतिवाक्यसिद्धस्य सर्वकामादेरितरकर्मसु यज्ञनिवृत्त्यापादकतया इतरकर्मविधिवैयर्थ्यापादकत्वान्न प्रयोजनमिति चेन्न । यूपाद्यर्थस्य खदिरादे वीर्याद्यर्थवत्त्वदत्रापि स्वर्गाद्यर्थस्य यागादेः पूजार्थत्वाविरोधात् ।

अपिच पूजा नाम नार्चा, अपितु फलत्यागः। एवं न यज्ञफलभूतस्य स्वर्गादेरीश्वर-
मुद्दिश्य स्वत्वत्यागसंभवान्न पूजार्थत्वानुपपत्तिरिति।

ननु तदुदितं कर्मेत्यत्र नित्यनैमित्तिकप्रायश्चित्तात्मकं कर्म कर्तव्यमिति प्रतिपादितम्।
तदनुपपन्नम्। काम्यानामपि वेदोक्तत्वाविशेषतः कर्तव्यत्वात्। न च काम्यानां बन्धकत्वान्न कर्त-
व्यता आभिचारवदिति वाच्यम्। नित्यानामपि कर्मत्वाविशेषेण बन्धकत्वापत्तेः। आभिचारस्या-
नर्थजनकत्वस्य वेदेनैव प्रतिपादितत्वात्। काम्यानां तदप्रतिपादकत्वेन कर्तव्यत्वोपपत्तेः।

न च नित्यानामफलत्वान्न बन्धकत्वं काम्यानां तु फलवत्त्वाद्बन्धकत्वं युक्तमेवेति वाच्यम्।
चित्रया यजेत पशुकामः, विश्वजिता यजेत स्वर्गकामः इत्यादिवज्ज्योतिष्टोमेन यजेत स्वर्गकामः
सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ इत्यादिश्रुतिबलान्नित्येऽपि फलसिद्धेः। इयानेव विशेषः।
नित्यानामकरणे प्रत्यवायः। काम्याकरणेन नास्तीति।

न च नित्यकर्मफलस्येश्वरार्पणसंभवान्न तद्बन्धकमिति वाच्यम्। काम्येऽपि उक्तन्या-
यस्य तुल्यत्वात्। तथाच काम्यमपि कर्म अनुष्ठेयमेवेत्यत्राह-**काम्ये मतिस्त्यज्यतामिति**॥ काम्ये
कर्मणीति शेषः। मतिः कर्तव्यताबुद्धिरिति यावत्। अयं भावः—"प्रक्षालनाद्धि पङ्कस्य दूरा-
दस्पर्शनं वरम्" इति न्यायेन काम्यं कर्म कृत्वा तत्फलस्येश्वरार्पणापेक्षयाकाम्यकर्माकरणस्यैव
युक्तत्वात्। "वीरहा वा एष देवानां योऽग्निमुद्वासयते" "अकुर्वन् विहितं कर्म" इत्यादिश्रुति-
स्मृतिभ्यां नित्यनैमित्तिकाकरणेऽनर्थश्रवणेन तन्निवृत्त्यर्थतया, प्रायश्चित्ताकरणे तदनिवृत्त्या तेषां
कर्तव्यतायां सिद्धायां यादृच्छिकफलस्य ईश्वरार्पणसंभवादिति॥

ननु अतियत्नसाध्ययज्ञादिफलस्येश्वरार्पणे कृते सिद्धस्य परित्यागात् अन्यस्य कस्य-
चिदलाभात्। "सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः।" इति न्याय आपन्न इत्यत आह-
**पापौघः परिधूयतामिति**। तेनेत्यनुवर्तनीयम्। तेन ईश्वरमुद्दिश्य परित्यक्तफलेन कर्मणा पापानां
पापफलानां अन्तःकरणदोषाणां रागादीनां, ओघः संचयः, परिधूयतां परित्यज्यतामिति यावत्।
ईश्वरमुद्दिश्य फलत्यागेन चित्तगतदोषरूपानर्थनिवृत्तेः श्रेयोयोग्यतायाश्च संभवान्न त्वयोक्तन्याया-
वतारः इति भावः।

ननु यज्ञादिकर्मणा स्वर्गार्थत्वात्स्वर्गस्य च सुखरूपत्वेन पुरुषार्थत्वात्पुरुषार्थस्य कथं
त्यागसंभवनीत्यत आह-**भवसुखे दोषोऽनुसन्धीयतामिति**। भवे=संसारे, यत्सुखं=विषयजं
तत्र दोषः अनित्यत्वं-दुःखसंभृक्तत्वं वा, अनुसन्धीयतां=अनुस्मर्यतां इति यावत्। अनित्यत्वं-विषय
कालीनत्वाद्विषयाणां चानित्यत्वात्। तथा दुःखसंपृक्तत्वं च वैषयिकसुखार्थं प्रवृत्तस्य व्याध्या-
द्यनेकदुःखदर्शनात्॥ न च तस्य उपादेयत्वं संभवति विषसंपृक्तमधुवत्। तथाच स्वर्गसुखस्य अन्य-
वैषयिकत्वेनानित्यत्वादसुरादिनिमित्तपरिभवेन दुःखदर्शनेन तत्संसर्गित्वाच्च तस्य त्यागेन भवितव्यम्।

एव च स्वस्य द्रव्यस्य राजादिनिमित्तानर्थे दृष्टे सति सद्ब्राह्मणमाहूय दानवदीश मुद्दिश्य फलस्यापि त्यागसभवादिति भाव ॥

ननु स्वर्गादिसुखस्यानित्यत्वादिदोषव वेन तस्य त्यागादन्यस्य कस्यचित्पुरुषार्थस्य अभावात् स्वस्य अकृतार्थत्वमेव स्यादित्याकुलितमन्तेवासिन प्रत्यात्मैव पुरुषार्थ , अतस्तद्विषयेच्छा त्वया कार्या इत्याह—**आत्मेच्छा व्यवसीयतामिति** । आत्मविषयकेच्छा=स्वस्याभिलाष व्यव सीयता=निश्चीयता-क्रियतामिति यावत ॥ आत्मन पुरुषार्थत्र च सत्यज्ञानानन्दस्वरूपत्वात् । सत्यत्व च कालत्रयाबाध्यत्वम् । इदच वाह्यवादिव्यतिरिक्तै सर्वैरपि स्वीकृतमेव । ज्ञानत्व च आदित्यादिज्योतिषा तेजसामपि भासकत्वात् । तथाच श्रुति —

"तस्य भासा सर्वमिद विभाति" इति । आनन्दत्व च परमप्रेमास्पदत्वात् । तथाच आत्मन पुरुषार्थस्य लाभात् न त्वया आकुलतया भवितव्यमिति भाव ।

ननु आत्मविषयकेच्छामात्रेण यदि पुरुषार्थ तर्हि गृहिणोऽपि ममात्मविषयकेच्छाया सत्वेन पुरुषार्थलाभ स्यादित्यत आह—**निजगृहात्तूर्णं विनिर्गम्यतामिति** । निज=स्वकीय, यत् गृह=वेश्म, तस्माद्विनिर्गम्यताम्=विशेषेण निर्गमन च सर्वदा आसक्तिराहित्य बोद्धव्यम् ॥ अय भाव । न केवलमात्मेच्छामात्रेण पुरुषार्थलाभ । अतिप्रसगापत्ते । अपितु तद्विचारात् ।

नच आत्मविषयविचारो गृहासक्तिमत-सभवति, गृहिण पुत्रभार्यादिषु व्याकुल चित्तनयैतद्विषयकविचारासभवात् । अत त्वया तद्विचारार्थं गृहान्निर्गम कार्य एवेति । किं च तव दुस्सगे सति दुष्टाना विषयलोलुपत्वात्तत्सगिनस्तवापि तदासक्तिरेव स्यात् । तथाच आत्मविषयकविचारप्रच्युतेस्तवानर्थ एव प्रसज्येत, तदुक्त भगवता—

सङ्गात्सजायते काम कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति संमोह संमोहात्स्मृतिविभ्रम ॥
स्मृतिभ्रशाद्बुद्धिनाश बुद्धिनाशात्प्रणश्यति ।

इति ॥ तथाच तत्सङ्गपरित्यागेन सत्सङ्ग त्वया कार्य इत्याह—**सङ्गः सत्सु विधीयतामिति**—

**सङ्गः सत्सुविधीयता भगवतो भक्तिर्दृढाधीयता**
**शान्त्यादिः परिचीयता दृढतर कर्माशु संत्यज्यताम् ।**
**सद्विद्वानुपसेव्यतामनुदिनं तत्पादुका सेव्यता**
**ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥**

सत्सु सत्पुरुषु सङ्ग संबन्ध सहवास इति यावत् । विधीयता=क्रियतामिति यावत् ॥

अयमाशय । अत्र सन्तो नामात्मविषयकविचारवन्त । एव च सत्संगेन तत्रापि तद्विषयकविचार सुदृढो भवतीति ॥

ननु दैवकृतविघ्नबाहुल्ये तद्विषयकविचारे प्रवृत्तिरेव नोदयमासादयेत् । अस्तु वा प्रवृत्ति तथापि तत्फल न सिध्येत् । दैवकृपाभावे सत्त्वस्य निष्फलत्वादत आह—**भगवतो भक्तिर्दृढाधीयतामिति** । भग —"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्रिय । ज्ञानवैराग्ययोश्चैव षण्णा भग इतीरणा" ॥ इति श्लोकोक्तवैराग्यादिषड्रूप म्युच्यते। सोऽस्यास्तीति भगवान्षड्गुणैश्च सपन्न । परिपूर्ण परमेश्वर । अनेन भगवत्पादेन ईश्वरस्य सकलान्तरायनिवर्तनसामर्थ्यं द्योतित भवति । तस्य परमेश्वरस्य भक्ति तदेकचित्तता। दृढा=निश्चला। आधीयता=क्रियतामिति यावत्" तत निश्चलेन भगवद्ध्यानेन सूर्योदयेनेव तमोराशेरन्तरायराशेर्निवृत्तिमभगादात्मनि पुरुषार्थत्वनिश्चयवत तत्साधनात्मज्ञानार्थं तद्विचारे प्रवृत्तिसभवाद्भगवत्प्रसादेनप्रसादस्वरा सफलत्वसभवाच्च न त्वदुक्तदोषावकाश इति भाव ।

नचेश्वरार्पणकर्मानुष्ठानादेवेश्वरप्रसादसिद्धे किमनया भक्त्येति वाच्यम् ॥ अधिक नैव दुष्यत इति न्यायेन भक्तेरप्युपयोगोपपत्ते । प्रसादहेतुबाहुल्येन प्रसादाधिक्ये सति विघ्नस्यात्यन्तिकनिवृत्ते सभवाच्चेति भाव ।

ननु रागादिकलुषचित्तस्य पुरुषार्थापुरुषार्थविचाराभावेन तज्ज्ञानाभावात्तत्साधने आत्मविचारे कथ प्रवृत्तिरित्याशक्य कालुष्यनिवृत्त्युपायमाह—**शान्त्यादिः परिचीयतामिति** । शान्ति=अन्तरिन्द्रियनिग्रह । आदिशब्देन बहिरिन्द्रियनिग्रहो गृह्यते । इतरेषा साधनाना मूलकारेणैव तत्र तत्र प्रतिपादितत्वात्। परिचीयता=अभ्यस्यतामिति यावत् । तथाच अभ्यासेन शान्त्यादिलाभे कालुष्यनिवृत्ते । पुरुषार्थविचारयोग्यतायाश्च सभवात्तत्सिध्यर्थं तद्विचारे प्रवृत्तिरुपपन्नैवेति भाव ॥

नच पापौघ परिधूयतामित्यत्रेश्वरमुद्दिश्य फलत्यागादेव कालुष्यनिवृत्ते प्रतिपादितत्वात्पुनस्तन्निवृत्त्यर्थं शान्त्यादिकथनवैयर्थ्यमिति वाच्यम् । ईश्वरार्पणकर्मानुष्ठानेन कालुष्यनिवृत्तौ शान्त्याद्यभ्यासो द्वारमित्यत्रैव तात्पर्यात् ।

अथवा—"पापौघ परिधूयता" मित्यत्र एव व्याख्येयम्—ननु तदुदित कर्मेत्यत्र प्रायश्चित्तकर्मादि कर्तव्यमित्युक्तम् । तन्निष्फलमित्यत आह **पापौघः परिधूयतामिति** । पापाना =प्रमादकृतनिषिद्धकर्मणा, जन्मान्तरार्जिताना वा ओघ =सचय परिधूयता=परित्यज्यतामिति । तथाच श्रुतिनिषिद्धकर्मनिवृत्तिफलत्वात्प्रायश्चित्तस्य तत्साधनत्वमेवेति न वैफल्यशकावकाश इति भाव । एव व्याख्याने च पापशब्दस्य मुख्यार्थ सभवतीति ध्येयम् ।

ननु श्रुतिविहितयज्ञादिकर्मस्ववश्यकर्तव्येषु तद्वैकल्यनिमित्तप्रत्यवायभयेन तदासक्तचित्तस्य कथमात्मविचारेऽवकाश स्यादित्यत आह—**दृढतर कर्माशु संत्यज्यतामिति** । आत्म-

विचारयोग्यतानन्तरमितिशेषः। नित्यनैमित्तिकादिकं सर्वकर्म, दृढतरमपि विहिततया परित्यक्तुमशक्यमपि बहुजन्मसु कृतमपि वा, आशु=शीघ्रतया, विहितं कर्म कथं परित्याज्यमित्यालोचना परित्यज्यैवेत्यर्थः।

ननु विहितस्य कर्मणः कथं परित्यागः संभवति। अकरणे प्रत्यवायश्रवणात्। न च सन्यासविधायकशास्त्रबलात्तस्य त्यागो भविष्यति। अन्यथा तद्विधिवैयर्थ्यापत्ते, इति वाच्यम्। काम्यकर्मत्यागस्यैव सन्यासशब्दार्थत्वात्, तस्य च प्रत्यवायाभावेन परित्यागसंभवात्। तदुक्तं च भगवता "काम्याना कर्मणां न्यासं सन्यासं कवयो विदुः" इति।

न च कर्मत्यागस्यैव सन्यासशब्दार्थत्वेन काम्यकर्मण एव त्याग इति संकोचे मानाभावः। तर्हि कर्मत्वाविशेषाल्लौकिकव्यापाराणामपि त्यागापत्तेः। नच तेषां त्यागानुपपत्त्या तद्व्यतिरिक्तस्यैव त्यागः सन्यासशब्दार्थ इति वाच्यं। तर्हि प्रत्यवायश्रवणेन नित्याना कर्मणामपि त्यागासंभवात्। एवं च कर्मत्यागस्य संकोचे आवश्यके सति काम्यकर्मत्यागस्यैव सन्यासशब्दार्थत्वसंभवादिति चेन्न। विहितस्यैव कर्मत्वेन संकोचे मानाभावेन च सर्वकर्मत्यागस्यैव सन्यासशब्दार्थत्वा — लौकिकव्यापारस्य च अकर्मत्वेन तत्त्यागस्याशब्दार्थत्वात्। सन्यासानन्तरं कर्माधिकाराभावेन नित्यादीनामनुष्ठानायोगादधिकारिणैव कर्मणामनुष्ठीयमानत्वात्। तथाहि—"केन भगवन्कर्माण्यशेषतो विसृजा" मीति कर्मत्यागप्रकारं पृष्टवन्तमारुणिं प्रति"तव पुत्रान्भ्रातॄन् बन्ध्वादींश्छिखां यज्ञोपवीतं याग सूत्रं अध्ययनं च" इति कर्माङ्गभूतशिखायज्ञोपवीतसूत्राध्ययनानां निषेधं प्रजापतिराह।

नहि वेदादिरहितस्य काम्ये नित्ये च कर्मण्यधिकार संभवति। न चैव नित्यकर्मत्यागे प्रत्यवायश्रवणं न स्यात्। यागादित्यागस्य त्वयैव विहितत्वोपादानादिति वाच्यम्। अविधिपूर्वकत्याग एव प्रत्यवायश्रवणेन, विधिपूर्वकत्यागे तदभावाद्यार्थत्वेन विहितस्य कृष्णविषाणादेश्चात्वाले एव परित्यागस्येव।

न च अग्निष्टोमाद्यङ्गस्य विषाणादेरग्निष्टोमसमाप्तेस्त्याग संभवतीति वाच्यम्। एवमविरक्तस्य यज्ञादिकर्मणा विधानेन विरक्तस्य तत्त्यागसंभवात्, अधिकारिण एव तदकरणे प्रत्यवायश्रवणेन अनधिकारिण तदयोगात्। ब्राह्मणाधिकारके बृहस्पतिसवे क्षत्रियस्येव। अस्य च लोकाग्नीनुदराग्नौ समारोपयेत् इति अग्निसमारोपणश्रवणेन फलितं नेति फलितस्यापि परित्यागश्रवणेन अग्निफलितरहितस्य यज्ञादावनधिकारात्, गायत्री च मं च अग्नौ समारोपयेदिति गायत्र्या अप्युपसंहारश्रवणेन सन्ध्याकरणादौ दोषाभ्य।

नच यज्ञादिविधिवैयर्थ्यम् विधाय तस्य परित्यागश्रवणापेक्षया अविधानस्यैव युक्तत्वादिति वाच्यम। अविरक्तस्य यस्मिन्निविनिन्यप्रवृत्तिप्रसक्तौ यज्ञादौ नियम्यमानत्वात्।

नच निषेधे उपनिषदामध्यनध्ययनम् । तस्या अपि अध्ययनत्वादिति वाच्यम् ॥ "न हिंस्यात् सर्वाभूतानि" इति भूतहिंसामात्रं प्रतिषिध्य अग्नीषोमीयं पशुमालभेतेति प्रतिप्रसववदत्रापि स्वाध्यायाध्ययनमात्रं निषिध्य प्रतिप्रसवेन सर्वेषु वेदेषु 'आरुणमावर्तयेदुपनिषदमावर्तये' दिति उपनिषदध्ययनविधानसम्भवात् । तथाच संन्यासविधिना नित्यकर्मत्यागसम्भवेन कर्मसु व्यासक्त्यसम्भवात् साकाङ्क्षतया आत्मविचारे निश्शङ्कप्रवृत्तिरुपपन्नेति भाव ॥

ननु लौकिकपुरुषार्थविचारे कथं मम स्वत एव प्रवृत्तिस्स्यात्, तज्ज्ञानाभावादित्याशङ्क्य अत एव तज्ज्ञानाभावेन स्वत प्रवृत्त्यसामर्थ्येऽपि गुरूपदेशमाहात्म्यात् प्रवृत्तिसम्भवात्त्वया गुरुरुपसरणीय इत्याह—**सद्विद्वानुपसेव्यतामिति** । सन् यो विद्वान्स उपसर्प्यताम् = प्राप्यतामिति यावत् । तदुपसर्पणञ्च सोपहार कार्यम् ॥ "रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्" इति स्मृते, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतेश्च ।

ननु मया गुरुरुपगतोऽपि किमर्थं ममोपदिशति । तस्य मदुपदेशेन प्रयोजनाभावात् । नच त्वया सोपहारतयैव गतत्वात् त्वदुपहारं दृष्ट्वा तुष्टस्तव उपदेक्ष्यति इति वाच्यम् । विरक्तस्य तस्य त्वदुपहारेणापि प्रयोजनाभावात् ।

नच कृपासागरस्य त्वद्दर्शनमात्रेणोपदेश सम्भवतीति न त्वया विचार कार्यं इति वाच्यम् । कृपाया अपि सहेतुकत्वाद्दर्शनमात्रस्याप्यप्रयोजकत्वाच्चेत्यत आह **अनुदिनं तत्पादुका सेव्यतामिति** ॥ तस्य=गुरो, पादुका=पादारविन्द पादुकाशब्देन पादाधारवस्तुवाचिना पादारविन्दस्य लक्ष्यमाणत्वात् । अनुदिनं=प्रतिदिनं । तथाच त्वत्पादुकासेवनेन गुरो कृपा सम्भव । त्वदीन उपदेक्ष्यतीति भाव ।

ननु अर्थिना त्वदुपदिशति गुरु, मया च किमध्येयमित्यत आह—**ब्रह्मैकाक्षरमर्थ्यतामिति** । एक=मुख्य मुख्यार्थप्रतिपादकं वाक्यं । अक्षर=ब्रह्म इत्येवं रूपं यस्य तत् एकाक्षर ब्रह्म । ब्रह्मेतिपदस्य अर्थ, अर्थ्यता=प्रार्थ्यतामिति, तथाच सार्थब्रह्मपदोपदेशे तदर्थस्य ज्ञातत्वेन तद्विषयकविचारसम्भवादिति भाव ।

यद्वा ब्रह्मणस्तदेकमक्षरं वर्णात्मकमोङ्काररूपं तत्पदार्थमर्थ्यतामिति । अत्राप्यभिप्राय पूर्ववदेवोन्नेय ।

अथवा एकं च, तदक्षरं चेति विशेषणसमास । एक=सजातीयविजातीयस्वगतभेदरहित न क्षरति=न नश्यतीतिअक्षरं यद्ब्रह्म तदर्थ्यतामिति ।

ननु चेतद्ब्रह्म मया अर्थितं तद्गुरु कथं ममोपदेक्ष्यति । तस्योपदेशायोग्यत्वादिति पृष्टवन्तं शिष्यं प्रति तत्प्रतिपादकं वाक्यमुपदिशति—**श्रुतिशिरोवाक्यं समाकर्ण्यतामिति** । श्रुते शिर अन्तदेश-पर्यवसानदेश वेदान्त वेदमात्रस्य ब्रह्मण्येव पर्यवसन्नत्वेनतत्प्रतिपादकत्वेन वेदान्तस्य वेदपर्यवसानदेशत्वमुपपद्यते ॥

यद्वा श्रुते शिर उत्तमप्रदेश-वेदान्त तस्य सर्वोत्तमब्रह्मप्रतिपादकत्वेनोत्तमत्वात्। तस्य यद्वाक्य तत्त्वमसीत्यादिरूप स्वस्योपनिषदुक्त तत्, समाकर्ण्यता सम्यक् = सावधानेन आकर्ण्यता=श्रूयतामिति यावत्। ततश्च व्युत्पन्नस्य तव वाक्यश्रवणमात्रेण तदर्थनिश्चयो भवेदिति भाव ।

ननु वाक्यस्य योऽयमर्थ तत्त्वमसीत्येवरूप न सभवति त्वशब्दस्य जीववाचित्वात्तस्य च कर्तृत्वभोक्तृत्वकिंचिज्ज्ञत्वादिविशिष्टत्वात्तच्छब्दस्य चेश्वरवाचकत्वात्तस्य च कर्तृत्वभोक्तृत्वादिरहितत्वात्सर्वज्ञत्वजगत्कारणत्वादिविशिष्टत्वाच्च। न च तयो किंचिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयो कथमप्यसिपदे नाभेदो बोधयितु शक्य, विरुद्धस्वभावत्वात्, विरुद्धस्वभावयोश्च तेजस्तमसोरभेदादर्शनात्।

न च जीवे किंचिज्ज्ञत्वादेरीशे सर्वज्ञत्वादेश्च बाधे चैतन्यस्वरूपमात्रयोरभेदोऽविरुद्ध इति वाच्यम्। प्रमाणसिद्धधर्माणा बाधायोगात्। अन्यथा घटपटत्वादिधर्माणा बाधे स्वरूपस्यैकत्वसम्भवेन तयोर्भेदो दत्तजलाञ्जलिस्स्यात्। यदि च प्रमाणसिद्धस्य भेदस्य परित्याग । तर्हि नाहमीश्वर इति प्रमाणसिद्धस्य जीवभेदस्य परित्यागायोग इति चेत्तत्राह—वाक्यार्थश्च विचार्यता मिति।

**वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां**
**दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसंधीयताम्।**
**ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यतां**
**देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादस्समुत्सृज्यताम्॥ ३॥**

असम्भावनानिवृत्तिपर्यन्तमिति शेष । वाक्यस्य=तत्त्वमसीत्यादिरूपस्य योऽर्थ जीवपराभेदरूप स विचार्यताम् विचार्य असम्भावना निवार्य तत्स्वरूपमेवेति निश्चीयतामिति यावद्। चकारात्पदार्थोऽपि विचार्य । तदर्थोऽप्येवरूप इति निश्चेय इति द्योत्यते। अय भाव—त्वतत्पदवाच्यार्थयो किंचिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयो भेदसम्भवेऽपि लक्ष्यार्थयोरभेद सभवत्येव। यथा तद्देशतत्कालैतद्देशैतत्कालविशिष्टदेवदत्तस्वरूपयोरभेदासम्भवेऽपि सोऽय देवदत्त इति देवदत्तस्वरूपमात्रस्य लक्ष्यस्यैकत्वबोध तद्वत्। नहि घटपटयोरभेदबोधक प्रमाणमस्ति। येन लक्षणयाऽभेदबोधस्स्यात्। न च सर्वज्ञत्वकिंचिज्ज्ञत्वादिविशिष्टजीवेशस्वरूपव्यतिरेकेण जीवेशस्वरूप नास्त्येव येन तल्लक्ष्य स्यादिति वाच्यम्। दृश्यमानजीवेशरूपस्य कल्पितत्वेन तदधिष्ठानस्य पारमार्थिकस्यावश्यमङ्गीकरणीयत्वात् । तथाहि—न देहो जीव, उत्पत्तिविनाशवत्त्वात्तस्य जीवत्वे कृतहानाकृताभ्यागमप्रसङ्गात्। इन्द्रियाणा परस्परविलक्षणकार्यकर्तृणा तेषा योऽहं रूपमद्राक्ष स एवेदानीं स्पृशामीत्येकत्वेन प्रत्यभिज्ञानविषयत्वायोगात्। न मन । मम मन इति भिन्नत्वेनानुभवात्। नाहंकार, जाग्रत्स्वप्नसुषुप्त्योरुत्पत्तिविनाशानुभवेन कालत्रयानुवृत्तिजीवस्वरूपत्वायोगात्तद्रूपत्वे भस्मीभावस्य प्रसङ्गात्। अत परिशिष्ट किंचिद्रूपमङ्गीकरणीयम्। तदेव पारमार्थिक रूप जीवस्य। एव प्रपञ्चस्य दृश्यत्वादसत्त्वेन प्रतीयेत। शशशृङ्गवत्। सर्वत्र सदपेक्षत्वात् सत्य

मसन्त्र चैकस्य निरुद्रमित्यत अनिर्वचनीयत्वात्कुक्तिरजतस्यकल्पित त्वमेव। तत्कारणत्व च कल्पितमेव सनत्त्वादिक तु दूरत एव। अतस्तत्कल्पनाविष्ठान तु किंचिद्रूप अङ्गीकरणीयम्। निरधिष्ठानभ्रान्तेरभावात् तदेव पारमार्थिक रूपमौत्मस्य। नह्युक्ते जीवेश्वरस्वरूपे पारमार्थिके किंचिज्ज्ञत्वसर्वज्ञत्वादीना सभव। सोपाधिकधर्मत्वात्। नहि सोपाधिकधर्मस्य निरुपाधिके सभव नहि जपाकुसुमयुक्ते स्फटिके प्रतीयमानस्य लोहितस्य तद्वियुक्ते सभव। तद्वदत्रापि अन्त करणमायोपाध्यवच्छिन्नयोस्तत्सभवेऽप्युपाधिविनिर्मुक्तयो तदसभवात्। श्रुतिश्च—"यत्र वा अन्यदिव स्या" दित्यादिना इवशब्देन द्वैतस्य प्रातीतिकत्व प्रदर्श्य परमार्थत तदपि निषेधति "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्" दित्यादिना। अत कथ जीवेशभेदसभव।

किंच भेदस्य पारमार्थिकत्वे "उदरमन्तर कुरुते, अथ तस्य भयभवती"ति भेदज्ञानवतोऽनर्थप्रदर्शन न स्यात्। विद्यमानस्य भेदस्य यथावत् ज्ञातत्वेनानर्थानुपपत्ति। विपरीतज्ञानित एवानर्थ इत्यस्य रज्जुसर्पज्ञानिनि दृष्टत्वात्। तथा अभेदस्यापारमार्थिकत्वे तज्ज्ञानिन "तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सपत्स्य" इति तस्य पुरुषार्थप्राप्तिश्रवण न स्यात्। तस्य विपरीतज्ञानित्वात्। नाहमीश्वर इति प्रत्यक्षस्य तत्त्वमसीत्यभेदबोधकवाक्येन प्रत्यक्षसिद्धचन्द्रप्रादेशत्वस्याष्टाशीतिसहस्राणि विस्तीर्ण इति शब्देनेव बाधसभवात्। सएषनेति नेतीत्यादिना आत्मस्वरूपव्यतिरिक्तस्य असत्त्वप्रतिपादनेन किंचिज्ज्ञत्वसर्वज्ञत्वादीनामपारमार्थिकत्वस्य स्वत एव सिद्धत्वात्। एव च त्वशब्दस्य सोपाधिकार्थे किंचिज्ज्ञत्वादिविशिष्टे शक्तावप्युपाधिविनिर्मुक्ते लक्षणासभवात्, तच्छब्दस्य च सोपाधिकसर्वज्ञत्वादिविशिष्टे शक्तावपि तादृशोपाधिविनिर्मुक्ते लक्षणासभवात्तयोश्च लक्षितस्वरूपयो असिपदेनाभेदबोधसभवात्पूर्वोक्तासभावना उक्तप्रकारेण विचारेण निवार्य पदार्थवाक्यार्थसभावना निश्चिनोति।

ननु अनेकैर्महर्षिभि अनेकधात्मस्वरूपस्य पुरुषार्थस्वरूपस्य च प्रतिपादितत्वात् त्वदुक्तप्रकार एव कथ ग्राह्य इत्यत आह-श्रुतिशिरःपक्षस्समाश्रीयतामिति। श्रुतिशिर इत्यस्य पूर्वमेवार्थो वर्णित। तस्य योऽय पक्ष तात्पर्यविषयीभूतार्थरूप। समाश्रीयता सम्यगाश्रीयताम्। तस्य सम्यगाश्रयण च तदुक्तार्थस्येव ग्रहणम्। अय भाव —

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी" इति न्यायेन श्रुते बलवत्प्रमाणत्वेन तदुक्तार्थस्यैव ग्राह्यत्वात्। महर्षिप्रणीतस्य स्मृतिरूपत्वेन दुर्बलत्वात्तदुक्तार्थस्य अग्राह्यत्वात्। तथाच दुर्बलस्मृत्युक्त पक्ष परित्यज्य श्रुतिशिर सम्मत मदुक्तार्थमेव गृहाणेति।

ननु महर्षिप्रणीतमपि युक्तियुक्तत्वाद्ग्राह्यमेव। तथाहि - आत्मा प्रतिशरीर भिन्न सुखदु खवैचित्र्यदर्शनेन आत्मैकत्वे तदनुपपत्ते आत्मा कर्ता, अचेतनस्य कर्तृत्वादर्शनात्। तथासति तृणादीनामपि कर्तृत्वापत्ते। अत एव तस्य भोक्तृत्व, अन्यस्य भोक्तृत्वेऽतिप्रसङ्गापत्ते। दु खाभाव एव पुरुषार्थ। सुखस्य दु खसपृक्तत्वेन परित्याज्यत्वेनापुरुषार्थत्वात् विषसपृक्त-

मधुवदित्यादियुक्तियुक्तमुपादेयम् । "युक्तियुक्तमुपादेयं वचनं बालकादपि" इति न्यायात् । तथाच तदुक्तार्थस्य श्रुत्यपेक्षया दुर्बलत्वेऽपि ग्राह्यत्वमेवेत्यत आह—**दुस्तर्कात्सुविरम्यतामिति ।** दुष्टः आभासः श्रुतिविरुद्ध इति वा, तर्कः=युक्तिरूपः, यस्य महर्षिप्रणीतस्य तस्मात्=दुस्तर्कात् । सुविरम्यता=सुष्ठु विरम्यताम् ।

सर्वदा इच्छाभाव एव विरामस्य सुष्ठुत्वं बोध्यम् । अयभाव । उक्तयुक्तिश्च आभास एव, तथाहि—"कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति कामादीनां मनोधर्मत्वप्रतिपादनेन सुखदुःखयोरपि तद्वृत्तिरूपत्वेन तद्धर्मत्वात्तद्वैचित्र्यस्य प्रतिशरीरं मनोभेदापादकत्वेऽप्यात्मभेदानापादकत्वात्चैतन्यस्य शरीरादेरेव कर्तृत्वदर्शनात् । तृणादीनां च चेतनसन्निधानविशेषाभावेनाकर्तृत्वोपपत्ते आत्मसन्निधानविशेषस्यैव कर्तृत्वप्रयोजकत्वात् । अकर्तृत्वादेवाभोक्तृत्वात् । वैषयिकसुखस्य दुःखमकलितत्वेऽपि नित्यसुखस्य तदभावात् । नित्यसुखस्य विज्ञानमानन्दं ब्रह्मेति श्रुतिसिद्धस्य निरसितुमशक्यत्वादाभासत्वमुक्तयुक्तिनिचयस्य बोध्यम् । श्रुतिविरुद्धता च "द्वितीयाद्वै भयं भवती" ति भेदमात्रनिषेधेनात्मभेदस्य सुतरामनुपपत्ते । आत्मनो ब्रह्मभेदप्रतिपादने कर्तृत्वादे श्रुतिविरुद्धत्वाद्ब्रह्मविदाप्नोति परं इति ब्रह्मप्राप्तेरेव पुरुषार्थश्रवणाच्चेति द्रष्टव्यम् । तथाच श्रुतिविरुद्ध आभासयुक्तिमकलितं तद्वाक्यमनादेयमेवेति । एवं दुस्तर्कसकलितवाग्युक्तिविरामोक्त्या त्वयापि दुस्तर्कानुसन्धानं न कार्यमिति द्योतितम् ।

ननु यदि दुस्तर्काद्विरामः तर्हि किं सर्वथावविशेषात्सुतर्केऽपि विरामः कार्य इत्यत आह—**श्रुतिमतस्तर्कोऽनुसन्धीयतामिति ।** श्रुतिमतः=संमतः—श्रुतितात्पर्यार्थानुगुण इति यावत्, तर्कः=अनुमानम् । अनुसधीयताम्=अनुसर्यतामिति ॥ अयभाव—श्रोतव्यो मन्तव्य इति श्रवणानन्तरं मननविधानेन मननस्य युक्त्यनुचिन्तनरूपत्वेन श्रुतार्थदार्ढ्यार्थतया आवश्यकत्वेन श्रुत्यादयो अनुभवादयश्च यथासम्भवमिह प्रमाणं इति भाष्येण श्रुत्यतिरिक्तप्रमाणस्वीकारेण तस्य आवश्यकत्वेन दुस्तर्कस्य श्रुत्यर्थविरोधित्वेन परिहार्यत्वेऽपि सत्तर्कस्त्वया अवश्यमिह अनुसन्धेय एवेति ।

ननु उक्तविचारेण असम्भावनाया निवृत्तत्वेनाह ब्रह्मास्मीति निश्चये जातेऽपि देहादावहमभिमानेन तत्र च आत्मनिश्चयसत्वेन मम ब्रह्मत्वनिश्चयस्यानेनाभिभूतस्य च कार्यजननासामर्थ्येनोत्पन्नोऽपि ब्रह्मत्वनिश्चयः निष्फलस्स्यात् । तथाच तदर्थविचारोऽपि निरर्थक एव स्यादित्यत आह—**ब्रह्मास्मीति विभाव्यतामिति ।** अनुदिनमित्यध्याहार्यम् । ब्रह्म निरस्तनिखिलोपाधिकः चैतन्यं सत्यज्ञानानन्दस्वरूप सत्तात्मकं, तदहमस्मीति विभाव्यताम् । विशेषेण भावना क्रियतामिति यावत् । भावनाया विशेषस्य या सार्वकालिकत्वं बोध्यम् । एवं च सार्वकालं श्रुत्युक्तब्रह्मध्यानेन तद्विषयनिश्चयस्य रूढत्वमभवादिति भाव ।

ननु त्वदुक्तप्रकारेण वाक्यं सार्थकं श्रुतवन् तदर्थविचारेणासम्भावनां निवर्तितवन् तदर्थध्यानेन तदर्थनिश्चयदार्ढ्यवतो मम कोवा ममान इत्यभिमानिन अन्तेवासिनं प्रति ज्ञानित्वा-

दीना निर्धर्मके आत्मन्यसम्भवादन्तःकरणनिष्ठत्वेन तत्र तद्धर्माभिमाने सत्यज्ञत्वमेव प्रसज्येत। तथाच अज्ञाननिवृत्त्यर्थो विचारादिप्रयासो निष्फलः स्यात्, अतस्त्वया तत्त्याग कार्य इत्याह—**अहरहर्गर्वः परित्यज्यतामिति।** गर्व =ज्ञानित्वाभिमान, अहरह =प्रतिदिनं, जायमान इति शेष। तथाच अभिमाननिवृत्तौ अज्ञानाद्यप्रसक्तेर्विचारादि सार्थक एव स्यादिति भाव।

ननु पूर्वोक्तपरिपन्थिभूतदेहाद्यज्ञाने सति त्वदुक्तब्रह्मध्यानेन कथं निश्चय वृथा भवेदित्याशङ्क्य तत्त्यागपूर्वकमेव त्वया ध्यान कार्यम्। अन्यथा ध्यानस्यव्याहतेरित्यभिप्रेत्याह—**देहेऽहंमतिरुज्झ्यतामिति।** देहे=स्थूले सूक्ष्मे च, अहमति =अहमिति मति, उज्झ्यता=परित्यज्यतामिति, तथाच तत्त्यागपूर्वकमेवात्मध्यानेन देहाद्यज्ञानप्रध्वंसादात्मज्ञानमेव दृढं भवतीति भाव।

ननु आत्मस्वरूपस्य सम्यक्परिज्ञातत्वेन येहि आत्मस्वरूपविपरीतवादिन ते मया जेतव्या इत्युक्तवन्तं शिष्यं प्रति तैस्साकं वादस्यापि जयपराजयहेतुभूतस्य जयपराजयजन्यसुखदुःखद्वारा जितोऽस्मि मत्समान कोऽपि न विद्यते, पराजितोऽस्मि तुच्छा मदीया विद्या इत पर इत्यमन्यस्यामीत्याद्यभिमानापादकत्वात्सोऽपि त्याज्य इत्याह—**बुधजनैर्वादः परित्यज्यतामिति।** वदति वादः विवाद =कलह इति यावत्। तथाच त्यागे न तदभिमानप्रसक्तिरिति भाव।

ननु अस्तूक्तरीत्या विचारसाफल्यम्। तथापि कथमात्मविचारे मनोनैश्चल्यं सिध्यति। क्षुधाधिव्याधिपरिपीडितस्य पुरुषस्य तदाकृष्यमाणसत्वादन्याकृष्टमनसः अन्यत्र मनोनैश्चल्यायोगादित्यत आह—**क्षुद्व्याधिश्च चिकित्स्यतामिति।**

> क्षुद्व्याधिश्च चिकित्स्यतामनुदिनं भिक्षौषधं भुज्यतां
> स्वाद्वन्नं ननु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम्।
> औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यतां
> शीतोष्णादि विषह्यतां ननु वृथा वाक्यं समुच्चार्यताम्॥ ४॥

क्षुद्व्याधिश्चेति भेदे नञारस्यास्याश्चिकित्स्यतामित्यनेनान्वयो योज्यम्। क्षुध चिकित्स्यता व्याधिश्च चिकित्स्यतामिति।

ननु काभ्यां तौ निवार्यौ निवारितावपि पुनरागतौ कथं निवारितौ भवत इत्याशयेनाह—**अनुदिनं भिक्षौषधं भुज्यतामिति।** अनुदिन=प्रतिदिन, व्याधिनिवृत्तौ तन्निवृत्तिपर्यन्तमिति शेष। क्षुन्निवृत्तौ तु यावज्जीव योज्यम्। भिक्षाच औषध चेति द्वन्द्वैकवद्भाव, भिक्षाच—

> माधूकरमसंकृप्तं प्राक्प्रणीतमयाचितम्।
> तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम्॥

इति स्मृत्युक्ता पञ्चविधापि ग्राह्या। सा च यावत् क्षुन्निवृत्ति भोक्तव्यैव। अन्यथा तदनिवृत्त्या पूर्वोक्तमनोनैश्चल्यासिद्धेः तदवस्थत्वात्।

न च अष्टौ ग्रासा इति स्मृतिविरोधः। तस्य विचारानधिकारिविषयत्वात्। औषधं भैषज्यम्। तन्निषेधस्मृतिरपि विचारानधिकारिविषयैव। ननु विचाराधिकारिविषया तदधिकारिणस्तन्निषेधे रोगानिवृत्त्या विचाराप्रसक्तौ पुरुषार्थप्रच्युतिप्रसङ्गात्॥ तथा चानुदिनं भिक्षौषधभोजनाभ्यां क्षुद्व्याधिनिवृत्तिसम्भवाद्विचारे मनोनैश्चल्यं सिध्येदिति भावः।

यद्वा ननु आत्मविचारप्रतिबन्धककर्मादित्यागे भिक्षाशनस्यापि त्याग एव। तस्यापि तत्प्रतिबन्धकत्वादित्याशङ्क्याह—**क्षुद्व्याधिश्च चिकित्स्यतामिति।** व्याधिरिव क्षुत् क्षुद्व्याधिः। यथा व्याधिः शरीरपातपर्यन्त एव क्षुदिति क्षुद्व्याधिरित्युच्यते। चकारश्च अवधारणार्थः। चिकित्स्यतामित्यत्र सम्बन्धः। चिकित्सया निवार्यतामेवेत्यर्थः। चिकित्सा च क्षुन्निवर्तकभक्षणमेव। अयं भावः—भिक्षाशनाभावे शरीरपातप्रसङ्गेन विचारस्य मूलतो हानिप्रसङ्गेन तस्यावश्यकर्तव्यत्वाद्विधिपूर्वककर्मत्यागे च तादृशदोषाभावादिति। केन निवार्यत इत्यत आह—**अनुदिनं भिक्षौषधं भुज्यतामिति॥** औषधमिव भिक्षेति भिक्षौषधम्। यथा औषधं रुचिमनपेक्ष्य तिक्तं कटु वा भुज्यते एवं भिक्षा रुचिमनपेक्ष्यैव भुज्यतामिति यावत्। तथा च भिक्षाशनेनैव तन्निवृत्तिर्भवतीति भावः।

ननु अस्तु भिक्षाशनेन तन्निवृत्तिः। तथापि औषधवत्तस्याशनमित्ययुक्तम्। तथाहि—औषधं कटु तिक्तं वा यद्रोगनिवर्तकं तदेव भोक्तव्यम्। इतरप्रकारस्यानिवर्तकत्वात्। प्रत्युत व्याध्यभिवृद्धिकरत्वाच्च। भिक्षा तु रुचिभूता क्षुन्निवर्तिका। तथा च तन्निवृत्तिसम्भवे किमर्थमौषधवद्भिक्षा भोक्तव्येति स्वादुभूतत्व सम्भवादित्यत आह—**स्वाद्वन्नं न तु याच्यतामिति।** तुशब्दः शङ्काव्यावृत्त्यर्थः। स्वादु=रुचिभूतमन्नं=भक्ष्यभोज्यलेह्यचोष्यचतुर्विधमुद्दिश्येति शेषः। न याच्यतां=यत्नो न कार्यः। तद्विषयकयत्ने तस्य सुखभोगोऽभ्यासेन कथमिदं साध्यमिति विचारे सति आत्मविचारे नैश्चल्यं न सिध्यतीति भावः।

ननु यत्नाभावेन न किञ्चिदपि सिध्यति। सर्वस्यापि यत्नसाध्यत्वादित्यत आह—**विधिवशात्प्राप्तेन सन्तुष्यताम्** इति। विधिः=कर्म जन्मान्तरकृतस्य शरीरारम्भकस्य सुकृतस्य दुष्कृतस्य वा वशात्पारवश्यात्प्राप्तेन अन्नादिना, सन्तुष्यताम्। सम्यक्तोषेण लब्धस्य समीचीनत्वे तदभावे वा समतानुद्धिरेव। अयं भावः—शरीरारम्भकस्य कर्मणो यावच्छरीरं स्थायित्वेन तद्वशादेव लाभसम्भवे यत्नो निष्फलः। ननु कर्मवशात्कदाचिदनिष्टप्रसक्तौ तन्निवारणार्थं यत्न आवश्यक इति वाच्यम्। कर्मणा प्राप्यमाणस्य यत्नेन निवारयितुमशक्यत्वात्। तदुक्तम्—

" यदभावि न तद्भावि भावि चेन्न तदन्यथा " इति। तथाचाभाविनो यत्नेनापि लाभासम्भवाद्भाविनश्च यत्नेन निवारयितुमशक्यत्वाच्च यत्नो निष्फल इति। यद्वा न वस्तु कर्मफलादेरन्नादिप्राप्तिः,यतश्च मास्तु तथापि कर्मफलेन प्राप्यमाणादिष स्वाद्वन्नादिषु प्रीतिः स्यादित्याशङ्क्य तथा सति तद्भोगासक्तमनस आत्मविचारे नैश्चल्यं न सिध्येदतः प्रीतिं मुक्त्वा क्षुन्निवृत्तिमात्रं कार्यमित्याह—**विधिवशात्प्राप्ते नमन्तुष्यतामिति।** विधेः=सुकृतकर्मणो वशात् प्राप्ते स्वाद्वन्नादौ न सन्तुष्यतामिति। तथाच न नैश्चल्याभावप्रसक्तिरिति भावः। एवं व्याख्याने च सन्तोषशब्दस्य मुख्योऽर्थो भवतीति ध्येयम्।

ननु प्रियलाभालाभयोः सुखदुःखदर्शनात् तथा अप्रियलाभालाभयोः सुखदुःखादर्शनाच्च कथमुभयत्र मम समता स्यादित्याशङ्क्याह—**औदासीन्यमभीप्स्यता मिति।** उदासीनस्य भाव औदासीन्यं सुखदुःखहेतावुभये च हर्षविषादराहित्यम् अभीप्स्यता=आप्तुमिष्यताम्। तदनन्तरमभ्यस्यतामित्यर्थः। तथाचाभ्यासपाके उभयत्र लाभालाभयोः समता भवतीति भावः।

ननु मदीयसुखदुःखलाभालाभनिवृत्त्यर्थं मम प्रवृत्त्यभावेऽपि दीनदर्शनेन तदीयदैन्यनिवृत्त्यर्थं कृपया प्रवृत्तिर्भवेत्, तथा यस्यचिद्घातकं कञ्चिद् दृष्ट्वा तद्धननिवृत्त्यर्थं नैष्ठुर्येण प्रवृत्तिसम्भवेन ताभ्यां व्यासक्तचित्तस्य मम कुत आत्मविचारे नैश्चल्यं सिध्येदित्याशङ्क्य ते न कार्ये याभ्यां तव व्याक्षेपः स्यादित्याह—**जनकृपानैष्ठुर्यमुत्सृज्यताम्** " इति। जनेषु कृपा च नैष्ठुर्यं चेति द्वन्द्वैकवद्भावः। उत्सृज्यताम्=परित्यज्यतामिति यावत्। एवं तयोस्त्यागे निश्चलता भवेदिति भावः।

नन्वस्तु दैवादागतलाभालाभादिलाभालाभनिमित्तहर्षविषादाभावः। शीतोष्णादिजन्यविषादो दुर्वार इत्याशङ्क्याह—**शीतोष्णादि विषह्यतामिति।** शीतं च उष्णं च शीतोष्णे शीतं=हिमादि। उष्णं=सौरादिकं तेजः ते आदी यस्य मानापमानादेस्तत्शीतोष्णादि। मानः पूजा। अपमानः=अपूजा तत् शीतोष्णादि विषह्यताम्। विशेषेण सह्यताम्। सहने विशेषश्च तज्जन्यदुःखे प्रियः इव स्थितिः। तत्सहनं च दैववशादागतशीतोष्णादिसहनमेव न तु स्वयमेव गत्वा शीते उष्णे वा स्थित्वा तत्सहनम्। तथा सति तन्निमित्तरोगग्रहितशरीरस्य आत्मविचारानुकूलशरीराभावेन आत्मविचाराभावात् पुरुषार्थो न सिध्येत्। प्रत्युत आत्महननदोषेणानर्थश्च प्राप्नुयात्। एवं च दैववशादागतशीतोष्णादेर्यत्नेनाप्यनिवार्यतया तन्निमित्तविषादेन क्लेशमात्रलाभात् तत्रापि विषादो न कार्य इति भावः।

ननु उपरागजयहेतुभूतवादाभावेऽपि लौकिकवार्तापि स्यादित्याशङ्क्य लौकिकवार्तादिप्रसङ्गेन तदाकृष्टमनसस्तत्रैव मनसोऽस्थिरत्वे आत्मनिश्चये दार्ढ्यं न सिध्येत्। उपरागमात्रस्य पापकत्वात्। अतस्तया गोऽपि त्याज्य इत्याह—न तु **वृथावाक्यं समुच्चार्यतामिति।** वृथा=व्यर्थं। वाक्यं=पदसमूहः। दुरान्तावरावारपाद् वर्णितमहानर्थं पदमपि गृह्यते। उभयमपि न समुच्चार्यताम्।

अत्र पदवाक्ययो. निष्फलत्व पुरुषार्थानुपयोगित्व न तु निष्फलत्वमात्रम्। ततो मन प्रीतिरूप-फलसत्वेन निष्फलत्वाभावात् । एव च व्यर्थवाक्यासमुच्चारणोक्त्या न केवल ज्ञानदार्ढ्यमात्र सिध्येत्। अपितु तादृशवार्तया औचित्यानौचित्यप्रयुक्त हर्षविषादाभावोऽपि सिध्येदिति सूचित मिति ध्येयम्।

ननु व्यर्थवाक्यासमुच्चारण च मम यदा भवेदित्यत आह—**एकान्ते सुखमास्यतामिति**—

> **एकान्ते सुखमास्यतां परतरे चेतस्समाधीयतां**
> **पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम्।**
> **प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैःश्लिष्यतां**
> **प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम्॥ ५॥**

एक अन्त=पर्यवसानभूत यस्मिन् तस्मिन्। स्वव्यतिरिक्तपुरुषरहिते देशे। **सुख**=निर्व्याक्षेप *यथा भवति तथा।* *आस्यता=गम्यतामिति।* *ततश्च वृथावाक्योच्चारण न* भवतीति भाव ।

ननु एकान्तवासेऽपि मनसो विषयलोलुपतया विषयगमने सति ज्ञानदार्ढ्य पूर्ववदेव न सिध्यतीत्याशङ्क्य ब्रह्मास्मीति विभाव्यतामित्यत्रैव प्रयत्नपुरस्सरमितरविषयकध्याननिरासेन ब्रह्म-विषयकध्यानाभ्यासस्योक्तत्वात विस्मर्तव्यमित्यभिप्रेत्याह—**परतरे चेतस्समाधीयतामिति।** परतरे=उत्कृष्टतरे ब्रह्मणि, चेत=मन, समाधीयता=सम्य गाधीयता-तद्विषयध्यानमेव सदा कार्यमित्यर्थ । एव च बालस्य मातरमेव स्मरत इतराभ्यासेन—मातृविस्मरणेनेतरविषयचित्तवदत्रापि विषयासक्तमनसोऽपि ब्रह्मविषयकध्यानेन विषयविस्मरणमभ्यासोक्तदोषावकाश इति भाव ।

ननु ब्रह्मविषयज्ञानाभावे तत्स्वरूपापरिज्ञानात्तद्ध्यानमपि न सिध्येदित्यशङ्क्याह—**पूर्णात्मा सुसमीक्ष्यतामिति।** *पूर्ण=व्यापक स चासावात्मा चेति तथोक्त । सुसमीक्ष्यताम्=* सुष्ठु समीक्ष्यताम्। सुष्ठु समीक्षण च यथार्थज्ञानमेव। तथाच आत्मनो यथार्थज्ञानत्वेन ध्यान संभवतीति भाव ।

ननु आत्मनो व्यापकत्व नाम सजातीय विजातीय स्वगतभेदरहितत्वमित्यभिमतम्। तदयुक्तम्। विजातीयस्य जगत सत्त्वेन तद्भेदराहित्यायोगात्। सत स्वरूपतो भेदे प्रमाणाभावार्थ-त्याशङ्क्याह—**जगदिदं तद्बाधितं दृश्यतामिति।** इद=परिदृश्यमान, जायते पुनर्लय गच्छतीति जगत्। स्थावरजङ्गमात्मक सर्व तद्बाधित तेन परमात्मविषयेक्षणेन बाधित नास्ति, दृश्यतेति दृश्यता=प्रेक्ष्यताम्, जगत तदज्ञान विजृम्भितत्वेन तज्ज्ञानेन बाधनसंभवाच्छुक्त्यज्ञान-कल्पित रजतस्य शुक्तिज्ञानेनेव। एव च विजातीयस्य जगत आत्मज्ञानबाधितत्वसंभवेन सदेव-

सोम्येदमग्र आसीत्" इति श्रुत्या सद्व्यतिरिक्तसर्वनिषेधेन च सदूसदिति प्रतीत्या सत एकत्वेन चोक्तं व्यापकत्वं सुदृढमिति भावः।

ननु स्वात्मविचारात्संसारनिवर्तकं ज्ञानं तथापि न विदेहकैवल्यसिद्धिः। शरीरारम्भकानेककर्मणां सत्वात्। न चेदानीं कर्मसन्यासादेव कर्माप्रसक्तेः न शरीरादिप्रसंग इति वाच्यम्। इदानीन्तनकर्माभावेऽपि पूर्वजन्मकृतानेककर्मसत्वात्तेष्वेव जन्मसु फलदानमित्यत्र नियामकाभावात्। अन्यथा अस्मिन् जन्मनि कृतयज्ञादेः अस्मिन्नेव जन्मनि फलप्रसंगात्। तथाच पूर्वजन्मनि कृतकर्मणां फलमदत्वा नाशे अनियतफलव्यापरया तेष्वप्रवृत्तिप्रसंगेन तेषां नियतफलत्वं अवश्यं वाच्यम्। न च शरीरादिकं विना तत्फलं भवतीति शरीरादिकमपि भवत्येवेत्यत आह—**प्राक्कर्म प्रविलाप्यतामिति**। चितिबलादिति, काकाक्षिन्यायेन पूर्वत्रापरत्र च योज्यम्। चितिः =ज्ञानं आत्मविषयं, तस्य बलात्। प्राक्=पूर्वजन्मसु कृतकर्म सुकृतं च प्रविलाप्यताम्=प्रदह्यतामिति। अयं भावः—न हि बीजं नियताङ्कुरमित्येतावता दग्धमप्यङ्कुरमापद्यते। एवं कर्म निशानाग्निदग्धं कथं फलाय भवेत्।

न चैतावता नियतफलत्वं। तर्हि बीजादावपि तुल्यत्वेन तदङ्कुरार्थिनः प्रवृत्तिप्रसंगात्, श्रुतिश्च कर्मणो ज्ञानाग्निदग्धत्वं दर्शयति—तद्यथा इषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इति। स्मृतिश्च—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति। तथाच नियतफलत्वेऽपि न शरीराद्यापद्यतेति। ननु मास्तु नाम प्राक्तनकर्मणा, शरीरादि। ज्ञानानन्तरं कृतेन कर्मणा तद्भवत्येव, तेषां ज्ञानसमकालत्वेनाविरोधित्वेन ज्ञानेन दाहायोगादित्याशंक्याह—**चितिबलान्नाप्युत्तरैः श्लिष्यताम्**। चितिबलादिति गतन्यायेन व्याख्यानम्॥ उत्तरैः ज्ञानानन्तरं कृतैरपि कर्मभिः न श्लिष्यताम् = न श्लेषो अवाप्यतामिति।

अयं भावः—कर्तुः फलं भवति। न चात्मा कर्ता ईश्वराभिन्नस्य तस्य कर्तृत्वानुपपत्तेः। न च तर्हि ज्ञानात्पूर्वमप्यात्मनः फलभागिता न स्यात्तदापि कर्तृत्वस्य तुल्यत्वादिति वाच्यम्। तर्हि तदानीं स्वतोऽकर्तृत्वेऽपि कर्तृत्वाभिमानेन फलभागितोपपद्यतापि ज्ञानानन्तरं तदभिमानाभावेन फलभागित्वाभावात्। एवं चात्मनः कथं कर्मफलेन संश्लेषः। न चैवं कर्मणा वैफल्यमिति वाच्यम्। "तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां" इति श्रुत्यैव कर्मफलविनियोगस्य दर्शितत्वाच्छ्रुत्यैव ज्ञानिनः कर्मफलासंश्लेषस्य कण्ठरवेण प्रतिपादितत्वात्। "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत" इति। तथाच कर्मणो निष्फलत्वाभावेऽपि तत्फलेनात्मनः संश्लेषाभावान्न तेनापि शरीरादिप्रसक्तिरिति।

ननु तर्हि ज्ञानसमकाल एव विदेहकैवल्यापत्तिः। ज्ञानपूर्वकृतकर्मणां विनाशेन शरीरारम्भकस्यापि विनाशात्, आरम्भककर्माभावे तस्य स्थित्यनुपपत्तेः।

नचारब्धफलस्य ज्ञानेन विनाशो न संभवतीति वाच्यम्। तत्रैव नियामकाभावादित्याशंक्याह—**प्रारब्धं त्विह भुज्यतामिति।** इह अस्मिन् शरीरे हेतुभूतमिति शेषः। अत एव प्रारब्धं=प्रकर्षेण आरब्धं-आरब्धफलमिति यावत्। कर्म भुज्यतां-तत्फलं सुखं दुःखं वानुभूयतामिति यावत्।

अयं भावः—पूर्वोक्तकर्मणः अनारब्धफलस्य ज्ञानेन नाशेऽपि आरब्धफलस्य तेन नाशो न हि संभवत्येव। यथा धानुष्कः स्वतूणीरनिक्षिप्तबाणग्रहणे पुनस्तत्रैव निक्षिपेत्। तथा धनुष्यारोपे पुनर्धनुषो ग्रहणे च सामर्थ्यसद्भावेऽपि मुक्तेषुनिवर्तने सामर्थ्याभावः। तद्वत् स चेषुर्यथा यावद्वेगं गत्वैव पतति तद्वत्कर्मापि यावत्स्वफलं तिष्ठति, तदनन्तरं नश्यति।

न च वेगतो गच्छतः इषोर्यावद्वेगमगत्वैव दण्डादिप्रतिमाभूतेनान्तरा पतनदर्शनात् तद्वदेव प्रारब्धं कर्मापि ज्ञानप्रतिहतं सत् यावत्फलमस्थित्वैव नश्यतीति वाच्यम् दण्डप्रतिमाभूतस्येषुपतनहेतुत्वस्य प्रत्यक्षसिद्धत्वेनेषुवेगविरोधित्वेऽपि ज्ञानस्य तज्जन्यत्वेन तदविरोधित्वात्। नहि कार्यं कारणविरोधि कुत्रचिद्दृष्टम्। नहि भेरीशब्दस्थले शब्दान्तरोत्पत्तिरस्ति। येन प्रथमादिशब्दान्प्रति द्वितीयादिशब्दानां नाशकत्वं स्यात्।

न च द्वितीयादिशब्दानुत्पत्तौ शब्दस्य श्रोत्रेण ग्रहणं न स्यात् शब्दस्य भेरीदेशस्थत्वात् श्रोत्रस्य पुरुषदेशस्थत्वात् तदसंबन्धस्य श्रोत्रस्य तदग्राहकत्वादिति वाच्यम्। अस्मन्मते श्रोत्रस्य कर्णशष्कुल्यवच्छिन्ननभोदेशातिरिक्तत्वेन तस्य शब्ददेशे गमनसंभवात्।

न चैवमपि मथनद्वारा स्वोत्पादककाष्ठं प्रति वह्नेर्दाहकत्वं दृष्टम्, तत्र स्यादिति वाच्यम्। काष्ठस्य मथनद्वारा वह्न्यभिव्यक्तिनिवृत्तिमात्रोपयुक्ततया तदकारणत्वात्। अत्रच बहु वक्तव्यमस्ति। तथापि विस्तरभयादुपरम्यते। श्रुतिश्च ज्ञानानन्तरमपि प्रारब्धकर्मफलस्यावस्थानं दर्शयति। तन्निवृत्त्यनन्तरं विदेहकैवल्यं दर्शयति। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इति, ततो न ज्ञानानन्तरमेव विदेहकैवल्याशङ्का इति।

नन्वस्तु कर्मनिवृत्त्यसंपादकं ज्ञानं तथापि तस्माज्ज्ञानान्न त्वदभिमतमुक्तिसिद्धिः। तथाहि नित्यनिरतिशयसुखाभिव्यक्तिः किं मुक्तिः किंवा अविद्यानिवृत्तिः। नाद्यः, तस्य ज्ञानासाध्यत्वात्। अन्यथा नित्यत्वभङ्गापत्तेः। ब्रह्मण एव नित्यनिरतिशयसुखरूपत्वेन तस्य च त्वदभिमतात्मत्वेन स्वरूपत्वात् स्वरूपस्य च स्वतः सिद्धत्वेन तद्भावार्थं ज्ञानाद्ययोगाच्च। न द्वितीयः अविद्यानिवृत्त्या सद्वितीयत्वेनाद्वितीयत्वसिद्धान्तविरोधात्।

नहि भावाभावयोरैक्यं संभवतीत्यत आह-"अथ परब्रह्मात्मना स्थीयता" मिति। अथ=प्रारब्धकर्मक्षयानंतरं, परब्रह्मात्मना=परब्रह्मस्वरूपेण, स्थीयतामिति। अयं भावः—मुक्ति-

द्विविधा, अनर्थनिवृत्तिः, आनन्दावाप्तिश्चेति, अत्र अनर्थनिवृत्तिः ज्ञानादुत्पन्नायाः विद्यायाः अविद्याविरोधित्वेन तन्निवर्तनक्षमत्वेन स्वहेतुभूताविद्यानिवृत्तौ अनर्थस्य कर्तृत्वादेःनिवृत्त्युपपत्तेः।

न च तया अनर्थनिवृत्त्या सद्वितीयत्वापत्तिः। अनर्थस्य कल्पितत्वेन तन्निवृत्तेरपि सुतरां कल्पितत्वात्काल्पनिकस्य परमार्थवस्तुना साकं द्वितीयत्वानापादकत्वात्। नहि मैत्रीपुत्रेण वन्ध्यापुत्रः कल्पितः द्वितीयतामापद्यते। वस्तुतस्तु कल्पितवस्तुस्वभावस्य अधिष्ठानातिरिक्तत्वाभावेन सकार्याविद्यायाः कल्पितत्वेन तन्निवृत्तेरपि तदधिष्ठानातिरिक्तत्वाभावात्।

नच तन्निवृत्तेरधिष्ठानानतिरेके अधिष्ठानस्य नित्यत्वेन ज्ञानजन्यत्वं न स्यादिति वाच्यम्। अधिष्ठानस्य स्वरूपाकारेणाजन्यत्वेऽपि तन्निवृत्तित्वाकारेण तज्जन्यतोपपत्तिः, नाशकाभावाच्च नाशाभावात्।

नहि ज्ञानानन्तरं कस्यचिन्नाशकस्य संभवः। स्वाकारेणैव नित्यत्वस्य श्रुतिसिद्धत्वात्।

नचाभावस्य भावरूपत्वमनुपपन्नमिति वाच्यम्। घटाभावाभावस्य घटत्वदर्शनेन तादृशनियमाभावात्। तथाच ज्ञानादनर्थनिवृत्तिरिति सुष्ठूक्तम्। आनन्दावाप्तिश्च औपचारिकी, पूर्वमप्राप्तस्यानन्दस्येदानीं प्राप्त्यभावात्।

न चानन्दस्य स्वतस्सिद्धरूपत्वेन प्रारब्धस्य क्षयानन्तरं ब्रह्मानन्दात्मनाऽवस्थितिप्रतिपादकमूलकारवाक्यविरोध इति वाच्यम्। स्वत एव पूर्वं ब्रह्मात्मना स्थितस्यापि जीवस्याविद्यामहिम्ना भिन्नावस्थितस्य अज्ञानकार्यनिवृत्तौ "अथ परब्रह्मात्मनास्थीयता" मिति वक्तुं शक्यत एव, पूर्वं तदवस्थाया एव मुक्तेः स्वाज्ञानमहिम्ना अतथाभूतवत्स्थितायाः तन्निवृत्तौ स्वरूपापत्तिरेवेति न कोऽपि दोष इति संक्षेपः॥

अज्ञातं ब्रह्मतत्त्वं ये ज्ञातुमिच्छन्ति ते नराः।
समाश्रयन्तु सततं किरणावलिमादरात्॥

मदीयकृतिमध्ये यो भूषणं दूषणं जनः।
विचारयेत्तदेतस्मै महते निधये नमः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याद्वैतविद्याचार्यवर्यश्रीमत्सच्चिदानन्दयोगीन्द्रचरणकमलयुगलध्यायमानमानसराजश्रीकृष्णानन्दसरस्वतीविरचिताऽद्वैतपञ्जरसत्किरणावली सव्याख्या संपूर्णा॥



# विवेकमुकुरः

## श्रीनृसिंहभारतीविरचित'

रज्जौ सर्पवदध्यस्त यस्मिन् विश्व प्रतीयते ।
उपास्महे नृसिंह त सर्वाधिष्ठानचिद्घनम् ॥ १ ॥

त्रीन् देशान् पञ्चकोशाश्च विश्वादींस्त्रीन् शरीरिण ।
विराट् सूत्रात्मविश्वेशान् विविनच्मि यथाक्रमम् ॥ २ ॥

नित्यानित्यविवेकेन विविक्तश्शान्तमानस ।
भूत्वा मुमुक्षु क्रमशो मुच्यते गुरोरनुग्रहात् ॥ ३ ॥

देह स्थूलश्च सूक्ष्मश्च तृतीय कारणाभिध ।
देवनारकमर्त्यादिभेदात् पृथगथात्रहि ॥ ४ ॥

यज्ञादिसभव पुण्य देवदेहस्य कारणम् ।
पाप नारकिदेहस्य निषिद्धाचरणोत्थितम् ॥ ५ ॥

जायते पुण्यपापाभ्या मनुष्यादिकलेवरम् ।
देवादीना स्थूलदेहा बहुभेदा भवन्ति हि ॥ ६ ॥

नृदेहेनैव कर्माणि क्रियन्ते विविधान्यपि ।
फलान्यप्युपभुज्यन्ते प्रारब्धानेककर्मणाम् ॥ ७ ॥

देवादीनामय देह केवल भोगसाधनम् ।
यत्किंचित्कुरुते कर्म सुखदु खफल यत ॥ ८ ॥

मनुष्यमधिकुर्वाते शास्त्रे विधिनिषेधयो ।
तस्मान्नृदेह एवाय साधन पुण्यपापयो ॥ ९ ॥

देहस्य पतनात्पूर्वं साधयदीप्सित तत ।
रोगाणामास्पदो देहो रक्षितोऽपि विनश्यति ॥ १० ॥

मूत्रादिभाजन नित्य नवद्वारस्रवन्मलम् ।
यतोऽशुचिरशुचिरिति शौचस्नानादिकर्मभि ॥ ११ ॥

दोषाणामाकरो देहो निन्द्य एव मनीषिभि ।
तथापि मनुते नर गुणाकरमविद्यया ॥ १२ ॥

सर्वदोषाकरस्यापि देहस्यैको महान् गुणः ।
चतुर्विधपुमर्थानां साधनं कामनावशात् ॥ १३ ॥

धर्मार्थकाममोक्षाख्यं स्यात्पुमर्थचतुष्टयम् ।
धर्मादित्रयहेतुत्वं प्रसिद्धं लोकतः खलु ॥ १४ ॥

कामनारहिताद्धर्मात् चित्तशुद्धिर्भवेत्ततः ।
ब्रह्मज्ञाने भवेन्मुक्तिः स्यादेवं मोक्षसाधनम् ॥ १५ ॥

भूतैः पञ्चभिरारब्धो देहः पञ्चीकृतैरपि ।
आकाशतेजोवाय्वम्बुभुवो भूतान्यनुक्रमात् ॥ १६ ॥

शब्दस्पर्शरूपरसगन्धास्तन्मात्रसंज्ञिताः ।
सूक्ष्मभूताश्रयाश्चैषां पञ्चीकरणमुच्यते ॥ १७ ॥

द्विधा विभज्य चैकैकं चतुर्धान्यान् क्रमात् पुनः ।
स्यात्पञ्चीकरणं तत्र स्वान्यखण्डेषु योजनम् ॥ १८ ॥

भूतैः पञ्चीकृतैरण्डं तत्र लोकाश्चतुर्दश ।
अन्नपानानि भोग्यानि साधनानि बहून्यपि ॥ १९ ॥

आरभ्यन्ते क्रमात्स्थूलदेहा भोगाश्रयास्तथा ।
कृत्स्नस्य जगतोप्येवं पञ्चभूतानि कारणम् ॥ २० ॥

भूतभौतिकरूपः स्यात् प्रपञ्चस्सकलोऽप्यतः ।
भौतिकः स्थूलदेहोऽयं कोशः स्यादन्नसंज्ञितः ॥ २१ ॥

अद्यते प्राणिभिर्यद्वा तानत्तीत्यन्नमुच्यते ।
अन्नेन जायते सोयं जातश्चान्नेन वर्धते ॥ २२ ॥

अतोऽन्नविकृतित्वेन कोशोऽन्नमयसंज्ञितः ।
कुशदासायं देहः चित्प्रकाशाश्रयत्वतः ॥ २३ ॥

उपचाराद्भवेत्कोशो मणेस्तु कोशनं यथा ।
संछादयत्यात्मनं वै सच्चिदानन्दलक्षणम् ॥ २४ ॥

अयं देहो यतस्तस्मात् कोशः स्यात् शस्त्रकोशवत् ।
पुनर्यत्नाद्यदा कोशो हेमादिकोशवत् ॥ २५ ॥

गौणो वाऽयं कोशशब्दः चैत्रादौ सिंहशब्दवत् ।
अथवा कोशशब्दोऽयं रूढो डित्थादिशब्दवत् ॥ २६ ॥

आन्तरोऽस्मात् प्राणमय ततोऽपि स्यान्मनोमय ।
अतोप्यभ्यन्तर कोशो विज्ञानमय उच्यते ॥ २७ ॥

सूक्ष्मदेहे त्रयोप्येते कोशा लिङ्गाभिवे स्थिता ।
भूतहेमादिक यद्वत् गुहास्थं स्यात् तदावृति ॥ २८ ॥

तयोत्तरोत्तर कोश पूर्वपूर्वावृतिर्भवेत् ।
कर्मेन्द्रियाणि गायन्ते सूक्ष्मभूतरजोशकै ॥ २९ ॥

वाक्पाणिपादपायूपस्थानान्यनुक्रमात् ।
रजोंशैस्सहितैस्सर्वै प्राणोऽभूत् पञ्चवृत्तिक ॥ ३० ॥

प्राणोपानस्समानश्चोदानोव्यानश्च वृत्तय ।
नासाश्रोत्राक्षसस्थाना प्राणनात्प्राण उच्यते ॥ ३१ ॥

पायूपस्थस्थितापानस्याधागमनेन तु ।
द्वासप्ततिर्लक्षाणि सिरा आर्थर्वणश्रुतौ ॥ ३२ ॥

निष्क्रपयासु तास्वेन व्याननाद्व्यान इरित ।
उदानो मृतिकालस्य स्यादूर्ध्वगमनेन हि ॥ ३३ ॥

समानो देहमध्यस्थो भुक्तान्नादिसमुचितम् ।
रसमङ्गानि नयति समभियुच्यते बुधै ॥ ३४ ॥

नागाद्यै पञ्चभि सार्धं दशेत्याहुर्मनीषिण ।
नाग कूर्मश्च कृकरो देवदत्तो धनजय ॥ ३५ ॥

उद्गारोन्मीलने तद्वत् क्षुतजृम्भणमेव च ।
शरीरोन्नयनमित्येषा व्यापारा स्युर्यथाक्रमम् ॥ ३६ ॥

अन्तर्भवन्तितेप्वेव तस्मात्पञ्चैव ते तन ।
प्राण कर्मेन्द्रियै साक कोश प्राणमयो भवेत् ॥ ३७ ॥

सत्त्वांशै सूक्ष्मभूताना व्यस्तैर्ज्ञानेन्द्रियाणि तु ।
श्रोत्रत्वगक्षिरसनाघ्राणाख्यान् वाहयन् क्रमात् ॥ ३८ ॥

तैरेव सहितैस्सर्वै स्यादन्त करण पुन ।
द्विविध तत् समाख्यात मनोबुद्धिविभेदत ॥ ३९ ॥

सकल्पविकल्पि मनो बुद्धिर्निश्चयरूपिणी ।
सहाहकारचित्ताभ्यां चतुर्धान्ये प्रचक्षते ॥ ४० ॥

तयोरपि मनोबुध्योरन्तर्भावात् द्विधैव तत् ।
मनो ज्ञानेन्द्रियैः साकं भवेत्कोशो मनोमयः ॥ ४१ ॥

तैरेव सहिता बुद्धिर्विज्ञानमय उच्यते ।
कर्तासौ पुण्यपापानां भोक्ता स्यात् सुखदुःखयोः ॥ ४२ ॥

जडत्वेनास्य कर्तृत्वभोक्तृत्वे भवतः कथम् ।
इति चेन्न चिदाभासयुक्तः स्याच्चेतनो यतः ॥ ४३ ॥

दर्पणादि यथा सूर्यप्रतिबिंबेन संयुतम् ।
दीप्तिमत्स्यात् तथाऽऽभासयुक्तोऽयं चेतनो भवेत् ॥ ४४ ॥

अविवेकान्मूर्खतादि कूटस्थेऽध्यस्यते वृथा ।
ज्ञानकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया ॥ ४५ ॥

स्यात्सप्तदशकैः सूक्ष्मदेहोऽय लिङ्गमुच्यते ।
लिगिगतौ लिङ्गतीति लोकान् लिङ्गमतो भवेत् ॥ ४६ ॥

स्थिते संसृतिरस्मिन् हि देहे निर्धीयते यतः ।
संसारज्ञापकाद्वापि लिङ्गवल्लिङ्गमुच्यते ॥ ४७ ॥

विनष्टे स्थूलदेहेऽस्मिन् कर्ता तदनुरोधतः ।
याति लोकान्तरं तत्र स्थित्वा कर्मवशात् पुनः ॥ ४८ ॥

ततोऽमुं लोकमायाति यात्यस्मात्पुनरेव स. ।
इत्थं सर्वेषु लोकेषु परिभ्रमति कर्मणा ॥ ४९ ॥

नाशस्सूक्ष्मशरीरस्य मोक्षावधि न विद्यते ।
सुषुप्तिप्रलयादौ तु वासना कर्मभिस्सह ॥ ५० ॥

कारणे लीयते देहे तस्मादुत्पद्यते पुनः ।
वासनाकर्मसहित. कारणाविद्यया सह ॥ ५१ ॥

देहो नष्टो यतो मुक्तौ पुनस्तस्मान्न जायते ।
प्राणस्य विद्यमानत्वात् सुप्तौ लिङ्गं न लीयते ॥ ५२ ॥

इति चेन्न तदाऽस्यापि दग्धिसूर्यावमावत. ।
पक्षान्तरेपि देहेस्मिन् इच्छाज्ञानक्रियात्मके ॥ ५३ ॥

इच्छाज्ञानाख्यशक्त्योस्तु त्याच्तउय उच्यते ।
सच्चित्सुखात्मकं ब्रह्म व्याप्तं नित्यं तथाऽद्वयम् ॥ ५४ ॥

प्रतिबिंबत्वविद्यायां इत्याहुःशास्त्रपारगाः ।
परिच्छिन्नत्वविद्या तत् ब्रह्मैवेत्यपरे जगुः ॥ ५५ ॥

पक्षद्वयेप्यविद्या सा शरीरं कारणाभिधम् ।
हेतुत्वात् कृत्स्नजगतो देहोयं कारणं भवेत् ॥ ५६ ॥

चिन्मात्रस्थं तम.कृत्वा विभेदं ब्रह्मजीवयोः ।
जीवांशपक्षपातेन तमेव परिमोहयेत् ॥ ५७ ॥

मुखमात्रेण संबद्धं विमलं दर्पण यथा ।
बिंबाभासौ स्फुटं हित्वा प्रतिबिंबं विकारयेत् ॥ ५८ ॥

निराश्रया निर्विषया नाविद्या कल्पयेद्विदाम् ।
जीवेशयोः पुरासाचेत् अन्योन्याश्रयता भवेत् ॥ ५९ ॥

नायं दोषो यथालोके स्याद्धर्मिप्रतियोगिभि. ।
भेदबुद्धिर्भवेत् तस्यां स्याद्धर्मिप्रतियोगिधीः ॥ ६० ॥

वस्तुगत्याप्यविद्याया आश्रयो विषयो न च ।
चिदेवातो न दोषोऽत्र भवेद्भेदानपेक्षणात् ॥ ६१ ॥

विषयाश्रयतैकस्य न विरुद्धा चिदात्मनः ।
गुहाया तमसो लोके विनिधाश्रयता यथा ॥ ६२ ॥

विरोधबुध्या केचित्तु विषयत्वाश्रयत्वयो. ।
जीवाश्रया ब्रह्मविषया स्यादविद्येति मेनिरे ॥ ६३ ॥

सच्चित्सुखात्मकं ब्रह्म व्याप्तं नित्यं तथाऽद्वयम् ।
परिच्छिन्नत्वविद्या सा शरीरं कारणाभिधम् ॥ ६४ ॥

हेतुत्वात् कृत्स्नजगतो देहोऽयं कारणं भवेत् ।
अवच्छेदः कल्पित.स्यात् अवच्छेद्यं तु वास्तवम् ॥ ६५ ॥

घटान्त.स्थं यथा व्योम घटधर्मैर्हि युज्यते ।
अस्यैव ब्रह्मणा साकं ऐक्यं वाक्यैर्निरूप्यते ॥ ६६ ॥

आभासस्य [redacted] तेनैक्यं अयुक्तं स्यायतस्तत ।
वाच्यलक्ष्यविभेदेन वाक्यार्थो द्विविधस्य च ॥ ६७ ॥

महावाक्यविवेकाख्यग्रन्थेऽस्माभिर्निरूपितः ।
आनन्दमयकोशोऽयं देहः कारणसंज्ञितः ॥ ६८ ॥

आनन्दमयता स्वस्य नानन्दविकृतित्वतः ।
अनादित्वादविद्याया विकृतित्वं न युज्यते ॥ ६९ ॥

आनन्दप्रचुरत्वेन कोशोऽयं तन्मयो भवेत् ।
सत्यप्यावरणाज्ञाने विक्षेपाणां विनाशतः ॥ ७० ॥

आनन्दप्रचुरस्सुप्ते प्रतिबिम्बक्षये भवेत् ।
आनन्दस्य प्रचुरता सुषुप्तावनुभूयते ॥ ७१ ॥

सुषुप्तिकाले सकले इत्यप्यत्र श्रुतिर्भवेत् ।
आनन्दविकृतित्वाद्वा स्यादानन्दमयाभिधः ॥ ७२ ॥

न विकारि स्वतो ज्ञानं यद्यपि स्यात् तथापि तत् ।
कार्याभिन्नं विकारि स्यात् नास्य कारणतो भिदा ॥ ७३ ॥

प्राचुर्यं वृत्तिकाराद्या आहुस्सूत्रानुसारतः ।
आचार्यास्त्वस्य कोशस्य परानन्दविकारताम् ॥ ७४ ॥

सूत्रश्रुत्यविरोधेन प्रायपाठादिहेतुभिः ।
आनन्दमयसूत्रस्य भाष्ये सम्यङ् न्यरूपयन् ॥ ७५ ॥

तादात्म्याध्यासतः कोशैरसङ्गोऽपि तदाश्रयः ।
आत्मा स्थूलादिदेहानां त्रयाणामभिमानिनः ॥ ७६ ॥

स्युर्विश्वतैजसप्राज्ञा भवन्ति व्यष्टयश्च ते ।
जाग्रत्स्वप्नसुषुप्तीनामपि स्युरभिमानिनः ॥ ७७ ॥

एकैकस्मिन्नेव देहे व्याप्त्यैषा व्यष्टिता भवेत् ।
भोग्यं विविधमन्नादीयेन या व्यष्टिता मता ॥ ७८ ॥

प्रारब्धकर्मवैविध्यात् भोग्यवैविध्यमिष्यते ।
देवतिर्यङ्मनुष्यादिदेहान् प्रविशतीति वा ॥ ७९ ॥

जाग्रति स्थूलदेहस्थः स्वभेऽन्तर्विशतीति वा ।
विश्व इत्युच्यते जीवः स्थूलदेहाभिमानवान् ॥ ८० ॥

तैजसस्साक्षिणः साक्षात् संबन्धी सूक्ष्मदेहगः ।
भूतभौतिकरूपेऽस्मिन् जगत्यस्याभिमानवान् ॥ ८१ ॥

विविधं राजतीत्येव विराडित्युच्यते बुधैः ।
प्रधानभेप्यतो विश्वः नरः संबन्धतो भवेत् ॥ ८२ ॥

A

सूक्ष्मभूतेषु तत्कार्यशरीरेष्वखिलेष्वपि ।
आत्माभिमानवान् देव सूत्रात्मा सूत्रवद्भवेत् ॥ ८३ ॥

सूत्रे तिष्ठति सस्यूता सर्वे मणिगणा यथा ।
चराचरात्मक विश्व स्थित तस्मिंस्तथा भवेत् ॥ ८४ ॥

हिरण्मये ब्रह्मणोऽण्डे गर्भेऽतस्तिष्ठतीति वा ।
तेजो हिरण्यमिति वा अन्यस्यापि तिरोहित ॥ ८५ ॥

असौ हिरण्यगर्भ स्यात् विक्षेपावरणोत्थित ।
स्थूलसूक्ष्मप्रपञ्चस्य कृत्स्नस्याप्येष कारणम् ॥ ८६ ॥

सर्वज्ञस्सर्वसाक्षीस्यात् तत्त्वमीशपदाभिधम् ।
ईशनस्यानवच्छिन्नप्रभूतैश्वर्ययोगत ॥ ८७ ॥

नैव व्याक्रियते यद्धि तत्त्वमीशपदाभिधम् ।
तदव्याकृतमज्ञ स्यात् जगतो मूलकारणम् ॥ ८८ ॥

समश्नुवते विश्व यतोऽतस्ते समष्टय ।
एवाभिमानसत्ताभामात्राभि तिसृभिस्तथा ॥ ८९ ॥

विश्वादीना क्रमादैक्य ध्यायेद्वैश्वानरादिभि ।
व्यष्टिबुद्धौ विनष्टाया समष्टित्वे दृढे सति ॥ ९० ॥

विराज संहरेत्सूत्रे सूत्र चेशे लय नयेत् ।
ईश तत्त्वे परानन्दे नादेनैव विलापयेत् ॥ ९१ ॥

सदानन्दघने तत्त्वे सदानिश्चलमानस ।
समाधिस्थस्तदातिष्ठेत् सच्चिदानन्दविग्रह ॥ ९२ ॥

समाधयो बहुविधा योगपञ्चाशिकाभिधे ।
ग्रन्थे निरूपितास्सम्यक् तत्र तानवलोकयेत् ॥ ९३ ॥

समाधिनिष्ठ प्रविलीनचित्त सच्चित्सदानन्दघनश्च भूत्वा ।
प्रारब्धभोगाननुभूय साक्षी विदेहकैवल्यपद प्रयाति ॥ ९४ ॥

विवेकमुकुराख्येऽस्मिन् देहाद्यास्तु विवेचिता ।
नित्यानित्यविवेकोऽस्मिन् परिदृष्टे भवेद् ध्रुवम् ॥ ९५ ॥

स्वास्यमुकुरे दृष्टे जडात्मा दृश्यते यथा ।
विवेकमुकुरे दृष्टे चिदात्मा दृश्यते तथा ॥ ९६ ॥

विचारमकरपूर्णचन्द्रोद्वेलसुधाब्धिना ।
नृसिंहभारतीशेन ग्रन्थोऽय मुनिरूपित ॥ ०७ ॥

इति श्रीनृसिंहभारतीविरचितः विवेकमुकुरः

---

शिवाभ्यां नमः

श्रीमच्छंकरभगवत्पादविरचितः

## ॥ षट्पदीस्तवः ॥

श्रीमच्छंकरानन्दतीर्थविरचितया
मञ्जर्याख्यया व्याख्यया
संवलितः



निजेष्टसंप्रदानकल्पभूरुहाकृतिं कृतिं
दुरन्तविघ्नवारिदप्रभञ्जनं निरञ्जनम् ।
मदीयचित्तसारसप्रबोधभास्करं परं
रसालमूलवासिनं भजामि विघ्ननायकम् ॥ १ ॥

श्रीनन्दनन्दनममन्दसुरेन्द्रवृन्द-
सान्द्रानुरागपरिभावितपादपद्मम् ।
वंशीरवामृतविमोहितगोपगोपी-
संदोहमिन्दुमुखमच्युतमाश्रितोऽस्मि ॥ २ ॥

श्रीभाष्यकृच्चरणसारसमादरेण
योगीन्द्रवृन्दमधुपैरुपगीयमानम् ।
सद्भागधेयमखिलार्थनिदानभूतं
कैवल्यपुष्परससंभृतमानतोऽस्मि ॥ ३ ॥

वेदान्तार्थविचारजन्यधिषणाविध्वस्तभेदाशयं
नानातन्त्रपदार्थसंशयघनध्वान्तार्कमानन्ददम् ।
नानादेशदिगन्तसंततयशः प्रासावकाशं गुरुं
श्रीनारायणतीर्थपादमनिशं भक्तान्तपूर्तिं भजे ॥ ४ ॥

यदीयपादजीवनं नृणामघं धुनोत्यलं
सुरापगेव संततं तनोति शं दृगञ्चलम् ।
यदाननाब्जरङ्गके विभाति भारतीनटी
नतोऽस्मि तान् मदम्बया सदाशिवाख्यदेशिकान् ॥ ५ ॥

अथ सच्चिदानन्दात्मकमद्वितीयं ब्रह्म विशुद्धसत्त्वप्रधानमायोपाधिकं सदीश्वरभाव-मुपगतम् । "जीवेशावाभासेन करोति" इत्यादिश्रुतेः । स च मायाप्रतिबिम्बित ईश्वर इति संक्षेपकार-प्रकटार्थविवरणकार-विद्यारण्यमतानुसारिणः । बिम्बभूत इति विवरणकाराद्यनुसारिणः । जीवनिष्ठाज्ञानाभिन्नमायाविषय इति वाचस्पतिमिश्रमतानुसारिणः । सर्वथापि प्रति-बिम्बादय मायाप्रयुक्तप्रतिबिम्बत्वादियोगिनः शुद्धचिद्रूपेणया आभासा इति, "जीवेशावाभासेन करोति" इति श्रुतिरुपपद्यते ।

नच 'दर्पणे मुखाभासः' इत्यादौ प्रतिबिम्ब एवाभासशब्दप्रयोगः । न बिम्बादाविति कथं तत्राभासशब्दप्रयोग इति वाच्यम् । 'हेत्वाभासः ब्राह्मणाभासः' इत्यादौ तदभावात् । अतस्तल्लक्षणरहितत्वे सति तद्वद्भासमानत्वमेव तदाभासत्वम् । तच्च शुद्धभिन्नेषु प्रतिबिम्बादिषु परमार्थसद्रूपत्वाभावात् चित्त्वेनाभासमानत्वाच्चाम्नातं प्रतिबिम्ब इव बिम्बादावप्याभासशब्द-प्रयोग उपपद्यते । स चेश्वरः तां मायां वशीकृत्य सर्वज्ञः सर्वशक्तिः सन् जीवानां सर्वेषामनुग्र-हार्थं स्वच्छस्फटिकसङ्काशः पार्वतीमनोहरः सर्वाङ्गसुन्दरविग्रहः समभूत् ।

स च भगवान् सर्वज्ञः शङ्करः स्वाज्ञानहेतुकजननजरामरणप्रवाहलक्षणसंसारसागरे निमज्जज्जनतामुद्दिधीर्षया कस्यचित्पुण्यधौरेयस्य द्विजश्रेष्ठस्य काम्यप्रतिषिद्धवर्जनेन तत्कृतनित्य-नैमित्तिकानुष्ठानोपासनात्मकमर्चापरितोषितः पुत्रत्वेन सत्तमभगवत्पादाचार्यरूपेणावततार ।

अथ समवतीर्णः श्रीभाष्यकारः निखिललोकान् नित्याद्यनुष्ठानपरम्परया नितान्त-निर्मलीकृतस्वान्तान् मुमुक्षूनधिकारिणः पुरस्कृत्यैव मकच्छमात्रेणाविद्यानिविडान्धकारपटीयसा सकलसूत्रव्याख्यानरूपश्रीमच्छारीरकमीमांसाभाष्यनिर्माणेनानुजग्राह ।

तदनु स्वावतारकृत्यशेषं परिसमालोच्य कथं नु नाम सकलसंसारविनिदानतया मोक्ष-प्रतिबन्धकाविद्याविशिष्टा निरन्तरकथालोचनया व्यर्थीकृतजीवना मनो मन्दधियः सन्तरेयुरिति ताननुद्धर्तुकामः श्रीभाष्यकारः सकृत्पठनमात्रेण "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन,"

"विष्णोर्नामैव पुंसः शमलमपनुदत् पुण्यमुत्पादयच्च
ब्रह्मादिस्थानभोगाद्विरतिमथ गुरोः श्रीपदद्वन्द्वभक्तिम् ।
तत्त्वज्ञानं च विष्णोरिह मृतिजननभ्रान्तिबीजं च दग्ध्वा
पूर्णानन्दैकबोधे महति च पुरुषं स्थापयित्वा निवृत्तम् ॥"

इत्यादिश्रुतिस्मृत्युक्तजन्मनिवृत्त्यादिसाधनपरम्परया समासादितज्ञानाय तत्प्रयोजनं करकलित-मणियोगसमर्पणत्वप्रयोजनमतिगम्भीरभाष्यार्थमूलकं षट्पदीस्तोत्रमारभमाणः प्रथमं प्रार्थनापद्यक-मये निखिलानर्थनिदानानादिदम्भसम्पादितनयादिदम्य पुरुषार्थसिद्धिसन्निवृत्तिं प्रार्थयते—

अविनयमपनय विष्णो
दमय मनः शमय विषयमृगतृष्णाम्।
भूतदयां विस्तारय
तारय संसारसागरतः ॥ १ ॥

अविनयमिति। ननुः "चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यति" इत्यादिभविष्यपुराणवचनैः, "शंकरः शंकरः साक्षाद्व्यासो नारायणः स्वयम्" इत्याद्यभियुक्तवरोक्त्या सकलदिगन्तकिंवदन्त्या चावगतपरमेश्वरावतारत्वस्य तस्यैकस्मिन् कर्मकर्तृत्वविरोधेन स्तुत्यस्तावकत्वानुपपत्तौ स्तावकत्वानुपपत्तेरिति चेन्न। एकत्वेऽपि लोकहिताचरणप्रयोजनावतारस्य श्रीशंकराचार्यस्य

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः॥
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः।
उत्सीदेयुरिमे लोका न कुर्या कर्म चेदहम्।"

इत्यादिस्वोक्तश्रीभगवदुक्त्या, अभेदेऽपि श्रुतिस्मृतीतिहासपुराणागमेषु प्रख्यातानां श्रीरामकृष्णाद्यवताराणां स्वगुरुपूजनादिधर्मवत्तदुपपत्तेः। हे नाथ! सर्वानर्थनिदानमविनयं तु न दारापत्यभृत्यपरिजनविद्याकुलयौवनादिषु सत्स्वपि भजमानेषु तद्विपरीतेषु च दास्यसौहार्दाचरणविनयस्तदभावः, 'कामः संकल्पः' इत्यादिश्रुतेः अन्तःकरणपरिणामविशेषो वाऽविनयः तं अपनय निवारयेत्यर्थः

ननु विनयाभावस्याविनयस्यानर्थहेतुत्वं न क्वापि दृष्टचरमिति तन्निराकरणप्रार्थना काकदन्तपरीक्षावत् निष्प्रयोजनेति चेन्नोक्तलक्षणस्याविनयस्य विष्णुव्रतपरायणस्यापीन्द्रद्युम्नाख्यभूपालस्य गजयोनिप्राप्तिलक्षणानर्थहेतुत्व, नलकूबरयोः यक्षसुतयोः वृक्षभावलक्षणानर्थप्राप्तिहेतुत्वं, रावणशिशुपालादीनामविनयादेवानर्थसिद्धिश्च तत्तत्पुराणप्रसिद्धैव श्रुतं च रामायणभागवतादिष्विति न काकदन्तपरीक्षातुल्यता।

ननु नेयं प्रार्थना युक्ता। युष्मत्प्रसादेन पुनः तदविनयस्यालक्षणया तन्निराकरणस्य तत्साध्यत्वात् न तन्निवारणं मत्कर्तव्यमित्याशङ्का लोकेऽङ्गीकृता, तथापि नित्यसिद्धस्य संसारानलस्य नाशनिमित्तेन भगवता न तत्र मदीयबुद्धिसामर्थ्यमिति सद्गुरूपदेशैः निवारणं कुरु इत्याह—विष्णो इति।

ननु सर्वकारणत्वमप्रामाणिकं घटादौ कुलालकर्तृत्वस्य प्रत्यक्षसिद्धत्वेनासिद्धत्वमिति चेन्न, "इदं सर्वमसृजत यदिदं किंच", "स इमाँल्लोकानसृजत" इत्यादिश्रुत्या, "मत्तः सर्वं प्रवर्तते" इत्यादिस्मृत्या च तदप्रामाणिकत्वस्यासिद्धेः तत्तदवान्तरकारणकुलालादिव्यतिरेकेण घटादिप्रपञ्चकर्तृत्वस्य, 'तदभिध्यानादेव तु तल्लिङ्गात्' इत्यस्मिन्नधिकरणे स ईश्वरः तत्तदात्मना स्थितोऽपि साक्षादेव सर्वकर्ता, कुतः? तल्लिङ्गात् तस्येश्वरस्यान्तर्यामित्वलिङ्गात् जीवद्वारा कर्तृत्वं नाम जीवस्यैव कर्तृत्वमित्यन्तर्यामिणि कर्तृत्वसिद्धेरन्तर्यमनयोगात्। कथं तर्हि भूतेक्षणमिति चेन्न, तदभिध्यानादीश्वरेक्षणादेव भूतेषु भूतेक्षणोपपत्तेरित्यर्थके भाष्यकृता स्थापितत्वाच्च न कश्चिद्दोषः।

नन्वथापि प्रपञ्चकारणत्वं तदुपादानत्वं, निमित्तत्वं वा। नाद्यः। उपादानकारणत्वे मृदादेः परिणामित्वेन सावयवत्वानित्यत्वादिदोषदर्शनेन प्रकृतकारणेऽपि तत्प्रसङ्गात्। न द्वितीयः। निमित्तकारणस्य "पत्युरसामञ्जस्यात्" इत्यधिकरणभाष्ये भाष्यकारेणैव निराकृतत्वात् उभयविधकारणत्वस्य लोकेऽदृष्टचरत्वेनासंभवाच्च न तत्सिद्धिरिति चेन्न। अतत्त्वतोऽन्यथाभावलक्षणविवर्तोपादानत्वाभ्युपगमात् वियदादिकार्यरूपेण विवर्तमाने ब्रह्मणि सावयवत्वादिदोषाप्रसङ्गात्। "पत्युरसामञ्जस्यात्" इत्यधिकरणभाष्ये, पत्युः निमित्तमात्रभूतेश्वरस्यासामञ्जस्यात् अनुपपत्तेरित्यादिना वैदिकतटस्थेश्वरकारणत्वस्यैव निराकृतत्वात् वियदादिकमभिन्ननिमित्तोपादानकं भावकार्यत्वात् जीवगतसुखादिवत् ईश्वरघटसंयोगवच्चेति लोके उभयकारणत्वस्य दृष्टत्वेनादृष्टचरत्वासंभवाच्च।

अत एव "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यधिकरणे, "येनाश्रुतं श्रुतं भवति" इति श्रुतिसिद्धैकविज्ञानेन सर्वविज्ञानप्रतिज्ञया, "यथा सोम्यैकेन मृत्पिण्डेन" इत्यादि मृदादिदृष्टान्तैश्चशब्देन, "सोऽकामयत" "तदात्मानं स्वयमकुरुत" इत्यादिश्रुतिभिश्चोभयविधकारणत्वं भाष्यकारैरेव प्रतिष्ठापितमिति सुस्थं तत्कारणत्वम्।

नन्वेवमपि "यद्यत्कारणं तत्तदन्यतो जन्यम्" इति व्याप्तेराकाशादौ दर्शनात् आकाशादिकारणस्यापि विष्णोरन्यजन्यत्वानुमानेन जन्यसर्वोपादाननिमित्तत्वलक्षणं तस्मिन्ननुपपन्नमिति चेन्न। किं सद्रूपस्य ब्रह्मणोऽसत्कारणत्वम्, उत सत्कारणकत्वम्। नाद्यः। "कथमसतः सज्जायेत" इति श्रुत्यैवासद्वादस्य निराकृतत्वात्। द्वितीयेऽपि किं जडं सत्कारणमभ्युपगम्यते उत चेतनम्। नाद्यः। जडस्याकाशादेः ब्रह्मकार्यत्वेन तस्य तदनुपपत्तेः। न द्वितीयः। स्वस्य कारणत्वानुपपत्तेः। "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुत्या चेतनान्तरस्य निराकृतत्वाच्च। तत्सत्त्वे वा तस्यापि कारणत्वेनान्यजन्यत्वानुमानेन चेतनानवस्थाप्रसङ्गात्। कस्यचिदन्यजन्यत्वे वा तत्रैव कारणत्वहेतोर्व्यभिचारात् तस्यैव ब्रह्मत्वाङ्गीकारात्। "न चास्य कश्चिज्जनिता न चाधिपः", "स एष महानज आत्मा", "असंभवस्तु सतोऽनुपपत्तेः" इत्याद्यजत्वप्रतिपादकश्रुतिन्यायकलापविरोधाच्च। न तस्यान्यजन्यत्वानुमानमिति जन्यसर्वोपादाननिमित्तत्वमिति न काप्यनुपपत्तिः।

यद्वा—लोकाधीश्वराणां ब्रह्मादीनां सर्वेषां विद्यमानत्वेन तानतीत्य स्वकीयाविनयाद्यपनुत्तये मामेव किमिति प्रार्थयते इत्याशङ्क्य ;

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तंऽह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥"

"न तत्समश्चाभ्यधिकश्च दृश्यते", "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव" ;

"महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥"

"नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।"

"को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।

"अवात्तावग्रसंभूताविति केशवनामवान् ॥
हरिरेकः सदाध्येयो भवद्भिः सत्त्वसंस्थितैः ॥"

"वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणा-
दौदार्यादघशोषणादगणितश्रेयः पदप्रापणात् ।
सेव्यः श्रीपतिरेक एव जगतामेते च षट्साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥"

इत्यादिश्रुतिस्मृतिपुराणवचनशतैस्त्वद्व्यतिरिक्तब्रह्मादीनां त्वदुत्पन्नानां त्वद्रूपदशानवगमेन तव सर्वोत्तमत्वावेदकनिखिलकल्याणगुणनिदानतया पुमर्थार्थिजनतासंभावनीयत्वावगमात्त्वामुद्दिश्यैव निरतिशयसुखार्थिनो मम प्रार्थना युक्ततरेत्याह—विष्णो इति । विषेर्व्याप्त्यभिधायिनः नुप्रत्ययान्तस्य रूपं विष्णुरिति । हे विष्णो ! व्यापनशील ! सर्वकारणत्वेन सर्वानुगतेत्यर्थः । एतच्च प्रतिपादितं भगवता बादरायणेन—

"व्याप्ते मे रोदसी पार्थ कीर्तिश्चाप्यधिका स्थिता ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिधीयते ॥
यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः ।
तस्माद्विष्णुरिति ख्यातो विशेरन्तः प्रवेशनात् ॥"

इति महाभारते । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः," "इदं विष्णुर्विचक्रमे" "त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः" "विष्णोः कर्माणिपश्यत, तद्विष्णोः परमं पदम् ;" "यतो विष्णुर्विचक्रमे" इत्याद्यया मातृवत् हितैषिण्या श्रुत्या च ॥

यद्वा—"जीवात्मनोऽर्जुनस्य करुणया गीतामृतं श्रुतं दत्तं येन श्रीकृष्णेन लोकत्रयोपकाराय तस्मै कृष्णात्मने नमः" इत्यादिवचनात्। ननु पक्षिवाचिनो विशब्दस्य कथं जीववाचकत्वमिति चेन्न। जीवस्यापि, "द्वा सुपर्णा सयुजा सखाया," "तस्य प्रियमेव शिरः" इत्यादिश्रुत्या तत्सम्भवात्।

यद्वा—जटायोः करुणामृतं येन रमानाथेन भगवता दत्तं तस्मै। उक्तं च श्रीहनूमता श्रीनृसिंहानुष्टुब् मन्त्रार्णव्याने—

"यो महान् पूजितो व्यापी महायेः करुणामृतम्।
कृतं येन जटायोश्च महाविष्णुं नमाम्यहम्॥"

इत्यादिना। तथा च ममारभीतिनिवृत्तिकामैः सर्वप्रयत्नेन जिज्ञास्यमूलस्थब्रह्मशब्दार्थभूतः विष्णुरेव सम्भजनीय इति भावः।

उक्तलक्षणाविनयापनयस्य मनोनिग्रहपूर्वकत्वात् लोके निगृहीतमनसामेव विनयसंपत्तिदर्शनात् तन्निरोधं प्रार्थयते—दमय मन इति। हे विष्णो! मे मनो दमय। निवृत्तविषयाकारवृत्तिकं कुरु। तन्मनस्तु महताप्यशक्यम्। उक्तं च—

"अप्यब्धिपानान्महतः सुमेरून्मूलनादपि।
अपि वन्ह्यशनात्साधो विषमश्चित्तनिग्रहः॥"

इति। तथाच दमय मन इति प्रार्थनोपपन्नेति भावः।

अन्तरिन्द्रियनिरोधलक्षणमादौ दमं सम्प्रार्थ्य, "पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्" इत्यादिश्रुत्या, "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः" इत्यादिस्मृत्या च,

"जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित्।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिः
बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति॥"

"बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" इत्यादिपुराणवचनैश्च बाह्येन्द्रियाणामतिप्रबलत्वेन तन्निरोधलक्षणं शमं प्रार्थयते—शमय विषयरसतृष्णामिति। विषयाः स्रक्चन्दनवनितादयः सिन्वन्ति बध्नन्ति प्राणिचित्तं स्वाकारेण परिणमयन्तीति विषयाः रागवाचकेन रसशब्देन विषयज्ञानद्वारा रागोत्पादकानि इन्द्रियाणि लक्ष्यन्ते। तथा च विषयरसैः विषयग्राहिकबाह्येन्द्रियैर्या शब्दादिविषया तृष्णा, रसशब्देनोपस्थितेन्द्रियेषु वा या तृष्णा ममेन्द्रियाणि सर्वदा भोगसमर्थान्येव भवन्तु, न कदाचिदपि वशानि भवन्तीति तां वा दमय निवारयेत्यर्थः।

न च लक्षणया रसशब्देन बाह्येन्द्रियविवक्षायामपि तद्धेतुकतद्विषययोः मनोधर्मयोरेव तृष्णयोः निवृत्तिप्रार्थना प्रतीयते, न बाह्येन्द्रियनिग्रहप्रार्थनेति वाच्यम् । पूर्वोक्तमनोदमनप्रार्थना-सिद्धमनोनिग्रहेणैव मनोधर्मतृष्णानिवृत्तिप्रार्थनायाः सिद्धत्वेन पुनस्तत्प्रार्थनायाः वैयर्थ्यापत्तेर्विषय भोगतृष्णानिवृत्तौ इन्द्रियेष्वपि पूर्वोक्तायाः सर्वदा भोगप्रदसामर्थ्यवैकल्यरूपप्रार्थनारूपबाह्येन्द्रिय-विषयकतृष्णानिवृत्तेरपि सिद्धत्वाच्च उक्ततृष्णाद्वयनिवृत्तौ तात्पर्यं न युज्यते । किं [illegible] सविशेष-णन्यायेन रसशब्दविवक्षितबाह्येन्द्रियनिवृत्तिप्रार्थनापरत्वमेवास्योचितम् । तस्मादतिप्रयत्नबाह्येन्द्रिय-निवृत्तिपरत्वमपि सिद्धम् ।

यद्वा—पूर्वोक्तमनोदमनरूपविषयाकारवृत्तिनिवृत्तौ तृष्णाक्षयः हेतुः । अन्यथा विषयेषु रागपूर्वकमनः प्रवृत्तेः पवनपक्षिराजगतेरिव निरोद्धुमशक्यत्वात् तृष्णाक्षयप्रयत्नेनैव मनो निगृहीतुं शक्यत इति मनोदमनहेतुत्वेन तृष्णोपरतिं प्रार्थयते—**विषयरसतृष्णामिति** । विषयाः पूर्वोक्ताः तेषु रसाः मधुराम्लादयः तेषु तृष्णा ।

यद्वा—रसशब्दोऽत्र परमार्थबुद्धिपरः तेन विषयेषु रसः परमार्थबुद्धिः तज्जनिता तृष्णा विषयरसतृष्णा । लोके हि परमार्थबुद्ध्या विषयेषु प्रवर्तमानाः तृष्णावन्तो दृश्यन्ते तां निवारयेत्यर्थः ।

यद्वा—विषयरसः, विषयेषु रागः तृष्णापि रागविशेष एव । न च पौनरुक्त्यमिति वाच्यम् । असन्निहितविषयेच्छा रागः, संनिहितविषयेच्छा तृष्णेति भेदात् । विषयपदं च सन्निहिता-संनिहितविषयपरम् । न चैकवचनानुपपत्तिरिति वाच्यम् । विषयेषु रसः विषयरसः तेन सहिता तृष्णा विषयरसतृष्णेति मध्यमपदलोपिसमासाभ्युपगमात् । तथाच सामान्याकारेणाप्राप्तविषयानुरागं रसं शमय । संनिहितविषयां तृष्णां च शमयेति फलितोऽर्थः ॥

यद्वा—रसशब्दः सुखवचनः; "रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यादौ तथा प्रसिद्धेः । तथा च विषयरसः विषयजं, सुखं तस्मिन् तृष्णां शमय । अथवा रसः वासनात्मकः, सूक्ष्मो रागः, तृष्णा स्थूलो रागः, तदुभयं शमयेत्यर्थः । सूक्ष्मस्थूलत्वभेदेन रागद्वैविध्यस्य "योऽकामो निष्कामः इत्यादिप्रसिद्धत्वात् । विषयमृगतृष्णामिति पाठेत्वयमर्थः—विषया मृगतृष्णेव विषयमृगतृष्णा तत्सारूप्यं च दृष्टनष्टस्वरूपत्वेन । तथा च तां शमय । विषयान् मृगयति विषयीकरोतीति विषयमृगतृष्णा तां शमयेत्यर्थः ॥

अविनयादिनिवृत्तिफलत्वेन दयां प्रार्थयते—**भूतदयामिति** । यद्वा—दुर्विनीता अदान्तचित्ताः प्राणिमात्रवधे प्रवर्तन्ते, प्राणिमात्रे परदुःखासहिष्णुतालक्षणदयोत्पत्तौ तु सर्वाऽमङ्गललक्षणभूतदेहानुपातो भवति इत्यभिप्रायेण तां प्रार्थयति—**भूतदयामिति** । भूतेषु प्राणिषु दया भूतदया निरुपाधिकपरदुःखप्रहाणेच्छा तां विस्तारय संपादय, ब्रह्मात्मैक्यज्ञानफलपर्यन्तां प्रत्यहमत्ययां प्रापयेत्यर्थः ॥

B

यद्वा—

"दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥"

इत्यादिभगवद्वचनात् मोक्षप्रतिबन्धकीभूतासुरसंपन्निवारणमादौ संप्रार्थ्य, मोक्षकारणदैवीसंपत्सु स्वेष्टभूतां भूतदयां प्रार्थयते—**भूतदयामिति** । अक्षरार्थः पूर्ववत् ।

उक्तसाधनसमुदायस्य फलत्वेन संसारनिवृत्तिं प्रार्थयते—**तारयेति** । जन्मजरामरणप्रबन्धलक्षणसंसरणहेतुः संसारः अविद्याकामकर्मविषयासक्त्यादिः, स एव सागर इव सागरः संसारसागरः, आसक्तिरपि जडभरतस्येव जन्महेतुर्भवति । यथा सागरपतिततृणकाष्ठादीनां वीचीतरङ्गपतितानां न नैश्चल्यं तथा इह कर्मप्रवाहपतितानामुत्कृष्टापकृष्टकर्मानुसारेण नानायोनिपरिभ्रमणान्न नैश्चल्यमिति सागरोपमः संसारः संसारसागरः, संसारसागरादिति यावत् । तारय स्वकृपयोत्पादितब्रह्मात्मैकत्वज्ञानापरोक्षेणाविद्यातत्कार्यबाधं द्वारीकृत्य संसारसागरपारभूतात्मभावं प्रापयेत्यर्थः । ईश्वरकृपानुपेतेन श्रवणादिना तत्त्वज्ञानं न भवति, तदुपेतेन च भवतीश्वरकृपैवासाधारणं कारणं तत्त्वज्ञानोत्पत्तौ, "यमेवैष वृणुते तेन लभ्यः," "मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्" इति श्रुतिस्मृत्योः सत्त्वात् । ननु गुणिनिष्ठगुणाभिधानलक्षणायाः स्तुतेरप्रतीयमानत्वात् कथं स्तोत्रत्वमिति चेन्न; विष्णुपदेनैव सर्वव्यापकत्वसर्वानुगतत्वसर्वसंक्रान्त्यादिधर्मैः स्तुत एवेति स्तुतित्वोपपत्तेः न काप्यनुपपत्तिः ॥ १ ॥

ननु सकारणसंसारोच्छेदस्तत्त्वज्ञानसाध्यः, तत्त्वज्ञानं च यज्ञाद्यनुष्ठानसाधनपरंपरया श्रवणादिनियतं, तथा च तं विना कथं तत्त्वज्ञानोत्पत्तिः? न हि दण्डजन्यो घटः तेन विना निष्पाद्यमानो दृष्टः, इत्याशङ्क्य श्रवणाद्यनुष्ठानासमर्थानां, "यमेवैष वृणुते तेन लभ्यः;"

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥"
"ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥"

"ईश्वरप्रणिधानाद्वा" इत्यादिश्रुतिस्मृतीतिहासपुराणयोगसूत्रैः मोक्षफलतत्त्वज्ञानोत्पत्तावन्तरङ्गसाधनत्वेनावगतां;

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥"

इत्युक्तनवविधभक्तीनां मध्ये श्रीभगवत्प्रचुरानुग्रहसादितां भगवच्चरणप्रणतिरूपां भक्तिं परमकारुणिको भगवान् भाष्यकारः समाकलयति—

"दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे ।
श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥ २ ॥

**दिव्येत्यादिना । श्रीपतिपदारविन्दे;** अहं वन्दे नमस्करोमि । पदे अरविन्दे इवारविन्दे, पातीति पतिः श्रियः पतिः श्रीपतिः । तत्रामृतनिर्मथनवेलायां विधिप्रमुखनिखिलनिलिम्पपरिवृढानतीत्य क्षीरसागरतनया कमला भगवत्पार्श्वमुपजगामेति **भारतादि**प्रसिद्धेः श्रीपतित्वसिद्धिः, तस्य पदारविन्दे वन्दे ।

ननु पादयोररविन्दपदप्रयोगः किं रूढ्या लक्षणया वा । आद्ये अरविन्दशब्दस्य श्रीपतिपदयोः प्रवृत्तौ निमित्तभूतो धर्मोऽवश्यं वाच्यः । अन्यथा तेन विना प्रवृत्तौ पदमात्र, पदार्थमात्रे प्रवर्तेतेतीश्वरेच्छारूपा वा तदतिरिक्ताभिधारूपा वा शक्तिरस्तीयात् । स चात्र पद्मत्वजातिरेवेति चेत्, सा तु तज्जातारविन्दनिष्ठैव न सच्चिदानन्दयोः श्रीपतिपदारविन्दयोरेतौ अतो न रूढ्या तत्रारविन्दशब्दप्रयोगः संभवति ।

नापि द्वितीया—प्रवाहतीरवत् पदारविन्दयोरविनाभावाभावात् । उक्तंच भट्टपादैः अभिधेयाविनाभूते प्रतीतिर्लक्षणोच्यते इत्यभिधेयस्य वाच्यस्य योऽविनाभावः संबन्धः तत्प्रतीतिः लक्षणेति तदर्थः । तस्माच्छक्तिलक्षणान्यतरपदवृत्तेरभावात् कथमरविन्दशब्दस्य भगवत्पदयोः प्रयोग इति चेन्न । गौण्या वृत्त्यन्तरत्वस्य स्वीकारात् । तया वृत्त्या अरविन्दशब्दस्य तत्र प्रयोगोपपत्तेः ।

तथाहि यथा लोके देवदत्ते सिंहशब्दप्रवृत्तौ सिंहनिष्ठक्रौर्यशौर्यादिकं निमित्तं, तथेहापि भगवत्पदयोः अरविन्दपदप्रवृत्तौ तन्निष्ठाह्लादकत्वमधुकराश्रयत्वादिधर्मजातं निमित्तमिति तत्प्रवृत्त्युपपत्तेः । तद्यथा—मधुकराः दिनकरकिरणानलसंपर्कजनितसंतापा अरविन्दोदरमाविश्य गलितसंतापाः सुखिनो भवन्ति । एवं नितान्तभक्तस्वान्तभ्रमराः तापत्रयानलसंतप्ताः शममलभमानाः दैवात्कृतसुकृतपरिपाकवशात् भगवच्चरणारविन्दमाविश्य गलितसंतापाः सुखिनो भवन्तीत्यरविन्दसाम्यमस्माभिरुक्तं सुप्रसिद्धम् । स्वयं भाष्यकारोऽपि प्रकारान्तरेणारविन्दसाम्यं दर्शयति—**दिव्यधुनीमकरन्दे** इति । दिविभवा दिव्या साचासौ धुनी च दिव्यधुनी गङ्गा सैव मकरन्दो ययोस्ते तथा स्नानपानदर्शनस्मरणादिभिः प्राणिनां दुरितानि धुनोति कम्पयति नाशयतीति धुनीत्वं गङ्गायां च द्रष्टव्यम् ।

ननु प्रसिद्धकमलस्य मनोहरगन्धविशिष्टत्वेनास्यापि तदपेक्षत्वस्य वक्तव्यत्वादित्याशङ्क्य प्रकारान्तरेणारविन्दसादृश्यविवक्षया चाह—**परिमलेति**। परिमल परिभोग सच्चिदानन्द, ययोस्ते तथा, परिमलो जनमनोहरो गन्ध तस्य परिभोग औत्कण्ठ्यम्। सचासौ चिचासावानन्दश्चेति सच्चिदानन्द । स एव परिमलगुणसाम्यात् परिमल सच्चिदानन्दस्यापि भक्तमनोभ्रमहरत्वात् परिमलाभेदोपचार.।

अत्र सदित्युक्ते वैशेषिकादीना सत्तासामान्यमादाय सिद्धसाधनता, तद्व्यावृत्त्यर्थं चिदिति पदम्। तैस्तस्याचिद्रूपत्वानङ्गीकारात्। नात्युक्ते तस्य मनोभ्रमराकर्षकत्वाभावात् आनन्दपदमुपात्तम्। तस्य तु तत्सम्भवति सुखतृष्णाकडिशाकृष्टहृदय एव सर्वो जन्तु प्रवर्तते। तथापि नैय्यायिकादिसुखवदनित्यता स्यात्। तन्निराकरणार्थं सदिति। तज्जाड्यशङ्का तु चित्पदेनैव प्रत्युक्ता।

ननु सुखस्य धर्मफलतया जन्यत्वेनानित्यत्वावगमात् कथ नित्यतेति चेन्न। "विज्ञानमानन्द ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" "योवै भूमा तत्सुख नाल्पे सुखमस्ति" इत्यादिश्रुतिशतेन सुखस्य ब्रह्मरूपताप्रतिपादनात् न तस्य जन्यत्वेनानित्यत्वम्। न च तदजन्यत्वे तदर्थिना विषयोपादान न स्यादिति वाच्यम्। नित्यसुखाभिव्यञ्जकतद्वृत्युत्पत्तौ तेषामुपयोगान्न तदुपादानवैयर्थ्यशङ्का।

ननु भगवतश्चरणयो भेदप्रतीते भगवत सच्चिदानन्दात्मकत्वेऽपि तच्चरणयो कथ सच्चिदानन्दात्मकत्वमिति चेत्, न। प्रज्ञानघन एवाभरणात् सुवर्ण इत्यादिभि घृतकाठिन्यन्यायेन च विमलसत्त्वप्रधानमायोपाधिकस्य सच्चिदानन्देश्वरस्यातिमनोहरलक्ष्मीकान्तविग्रहरूपेणावस्थितत्वावगमात् तच्चरणयोरपि तदात्मकत्वोपपत्ते।

ननु पदारविन्दसच्चिदानन्दयोरभेदात् कथ बहुव्रीहिसमासोपपत्तिरिति चेन्न। सत्यप्यभेदे भजनार्थं शिलापुत्रस्य शरीर राहो शिर इत्यादिवदौपचारिकषष्ठ्यर्थभेदमादायोक्तसमासोपपत्ते। यद्वा—परिमलपरिभोगस्थानीये सता भक्ताना चिदानन्दौ ज्ञानसुखे याभ्या ते, तथा भक्ताना विस्तारेण ज्ञानसुखजनके इत्यर्थ। श्रीपतिपदारविन्दे प्रणतिप्रयोजनपुमर्थकत्वेन विशिनष्टि—**भवभयखेदच्छिदे** इति। भव ससार अविद्यालक्षण तस्मात् भय भीति भवभयं तद्धेतुको नानायोनिगर्भप्रसवत्रिविधतापरूप खेदश्च, तयो छिदा छेदनमात्यन्तिकनिरासो याभ्या सकृदनुस्मरणमात्रेणेति तथेत्यर्थ ॥ २ ॥

ननु "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "तत्सृष्ट्वा तदेवानुप्रविशत्," "तत्त्वमसि," "नान्योऽतोऽस्ति श्रोता" "क्षेत्रज्ञ चापि मा विद्धि सर्वक्षेत्रेषु भारत"

इत्यादिश्रुतिस्मृतिप्रमाणैः जीवब्रह्मणोरभेदस्य प्रतिपादनात् अभेदे सति कथं सेव्यसेवकभावः? तस्य भेदोपजीव्यत्वादित्याशङ्क्यौपाधिकं जीवेश्वरयोर्व्यावहारिकं भेदं दर्शयन् प्रसादयितु भगवन्तं स्तौति—

सत्यपि भेदापगमे
नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः
क्वचन समुद्रो न तारङ्गः ॥ ३ ॥

सत्यपीत्यादि। "एकमेवाद्वितीयं ब्रह्म," "योऽसावसौ पुरुषः सोऽहमस्मि "तत्त्वमसि" "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" "नेह नानास्ति किंचन" इत्यादिभिः जीवब्रह्माभेदप्रतिपादकैः प्रमाणैः यद्यप्यभेद एव प्रतिपाद्यः पारमार्थिकः, तथापि अज्ञानावस्थायामविद्याकामकर्मवासनावासितहृदयानां भेद एव भासत इति तदुपजीव्यसेव्यसेवकभावमुपपादयति—सत्यपीति। "नाथृनाधृयाच्ञोपतापैश्वर्याशीष्षु" इति धातुपाठात्, हे नाथ हे ईश्वर!; यद्वा—अतुलितबलबलिबाहुभयबलभित्प्रमुखसुरसुखाय कपटवटुवटुरूपेण बलिमुपेत्य पादत्रयपरिमितामनन्तां पृथिवीं नाथति प्रार्थयत इति, तथा ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां नियन्तृत्वात् भेदापगमेऽनुभवे सति तवाहं भृत्यः। यद्वा—अग्नेर्विस्फुलिङ्गवत्त्वदंशः ईशितव्यश्चेत्यर्थः। "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यादिस्मृतेः। अपिशब्द एवकारार्थः। तथा च मिथ्या न प्रयुक्तः अभेदे सत्येव तवाहं नान्यथा।

"देहबुद्ध्या तु दासोऽहं जीवबुद्ध्या त्वदंशकः।
आत्मबुद्ध्या त्वमेवाहमिति मे निश्चला मतिः॥"

"त्वयि मयि च गण्यमाने मशकान्मशकोऽहमेव देहदृशा।
विश्वाधिकेश ते मे सद्बोधानन्दपूर्णता तुल्या॥"

इत्यादिवचनात्। तर्हि स्वप्रकाशचिद्रूपत्वेन परमार्थभिन्नयोरावयोः तवाहमिव सेवैव ममापि त्वं प्राप्तमेवेति चेत्, नेत्याह—न मामकीनस्त्वमिति। अपिशब्दस्तुशब्दस्थानीयश्च। एवं च भेदानुभवदशायां तवाहमंशः, त्वं मामकीनस्तु न; न मदंश इत्यर्थः। तदनेन पुराणोक्तनवविधभक्त्यन्तर्गत त्रिविधभक्तीनां मध्ये आद्या भक्तिः प्रतिपादिता। उक्तं च "तवैवाहं ममैवासौ स एवाहमिति त्रिधा भक्तिः" इत्यादिना भक्तिरात्मप्रत्यवेंऽशांशिभाव-ईशेशितव्यादिभावो मायानिर्धारितो। नत्वपीधर्मेऽन्येन, परमात्मनामायानादचीनत्वाच्च जीवोऽप्यस्त्येव अंशांशत्वं, न तु निरवयवत्वान्मनोऽभावभावः। तन्त्रगामाप्रमादार्थमेवात्। "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति"

" ममैवांशो जीवलोके जीवभूत सनातन " इत्यादिश्रुतिस्मृतिभ्यामशांशिभावस्य यथावद्यथाचित्प्रतिपादनात् अपिशब्दसूचितभेदहेतुकांशांशिभावमुक्त दृष्टान्तेन व्यक्तीकरोति—**सामुद्रो हीति।**

यद्वा—परमार्थाभिन्नयो व्यावहारिकभेदेऽप्यंशांशिभावव्यवस्थायां दृष्टान्तमाह—**सामुद्रो** हीति। समुद्रस्याय सामुद्र तरङ्ग सामुद्रस्यांश इत्यर्थ । क्वचन देशकालादौ समुद्र तारङ्ग तरङ्गांशो न भवति । दृष्टान्तप्रमेये हिशब्द स्वानुभवप्रसिद्धिद्योतनार्थ । ' सत्यपि भेदापगमे इति पाठे त्वयमर्थ —हे नाथ! परमेश्वर! आवयो भेदापगमे भेदाभावे सत्यपि तवाह त्वदंश ' न मामकीनस्त्वम् न मदीयांश त्वमिति औपाधिक एव स्वस्वामिभावो न परमार्थत इतीममर्थं दृष्टान्तेन स्पष्टयति—**सामुद्र** इति । दृष्टान्तस्तु प्रदर्शितार्थ । ननु पारमर्थिक एव भेद किमिति नाङ्गीक्रियते ? जीवेश्वरयो अन्यथा गुरुशिष्यबद्धमुक्तगुरवदुपास्यउपासकवव्यवस्था न स्यादिति चेन्न। तथा सति द्वयोरपि जाड्य स्यात् । तदितरघटपटादिवत् । ततश्च तयोरनात्मत्वादयो दोषा प्रसज्येरन्। तद्यथा—जीवो जड ब्रह्मभिन्नत्वात् घटवत् ब्रह्मभिन्नस्य जडत्वेन कस्यापि विप्रतिपत्तिरस्ति! एव जीवाद्भिन्नस्य ब्रह्मणोऽपि जाड्यादिक द्रष्टव्यमिति द्वयोरप्यनात्मत्वादयो दोषा प्रसज्येरन्निति यस्य ज्ञानेनाविद्यातत्कार्यनाश स्यात् । को वा साधनानुष्ठाता। द्वयोरपि जडत्वात् । व्यवहारस्तु कुम्भाद्यनुगतभिन्नांशिनभसा भेदप्रतीतिवदाविद्यक, अन्त करणेन्द्रियादीना भेदाभ्युपगमात् तैरेव भविष्यतीति न काप्यनुपपत्ति । किंच द्वैतसत्यत्वे "नेह नानास्ति किंचन" "मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति" "उदरमन्तर कुरुते अथ तस्य भय भवति" "नान्य कांचन भिदास्ति" "एकमेवाद्वितीय ब्रह्म" "अजो ह्येक" "क्षेत्रज्ञ चापि मा विद्धि सर्वक्षेत्रेषु भारत" "सर्वमिदमह च वासुदेव परम पुमान् परमेश्वर स एक" इत्यादि-श्रुतिस्मृतिपुराणवचनाना द्वैतनिराकरणपूर्वकतया एकत्वप्रतिपादनपराणामप्रामाण्य स्यात् ।

तदनेन श्लोकत्रयेण समन्वयसाधनाविरोधाध्यायत्रयार्था सक्षेपेणोक्ता द्रष्टव्या । तत्र विष्णो इति पदेन समन्वयाध्यायार्थ प्रथमेन समूचित । द्वितीयेन श्लोकेन तु भगवच्चरणप्रणतिलक्षणसाधनवर्णनेन साधनाध्यायार्थ, तृतीयेन श्लोकेनाविरोधाध्यायार्थश्चेति विभाग ॥ ३ ॥

ननु यद्यपि मामकीनस्त्व नाह त्वदीय तथापि तव मत्प्रार्थनाया निष्प्रयोजनतापत्ति भदेकशरणताया प्रयोजनवत्त्वेनादृष्टचरत्वादित्याशङ्क्य त्वदाश्रिताना त्वदवलोकनपरिमुदितनिततहृदयनिधानानामेव परमपुरुषार्थलाभो नेतरेषामिति प्रत्यक्षभूता सुखेन त्वच्छरणा, अतस्त्वमेवैक पुमर्थार्थिभि सभजनीयो नाथ इति भगवन्त तद्भक्तपरिपालनरूपकर्मानुसरणपूर्वक स्तौति—**उद्धृतेत्यादिना ।**

यद्वा — तवाहमित्यनेन भगवदधीनतोऽप्यभगवदनुग्रहलब्धतत्साक्षात्कारादेव कैवल्यसिद्धिरिति यदुक्त, तत्र "अक्षय्य ह वै चातुर्मास्ययाजिन सुकृत भवति," "अपाम सोमममृता अभूम," "कर्मणैव हि ससिद्धिमास्थिता जनकादय" इत्यादिश्रुतिस्मृतिप्रमाणै कर्मणामेव

मोक्षहेतुत्वावगमात् केवलात्कर्मणः सकाशात् ज्ञानसहिताद्वा ह्यकैवल्यसिद्धिरिति कर्मजडानां निरीश्वराणां मतमाशङ्क्य; "ज्ञानादेव तु कैवल्यं" "नान्यः पन्था विद्यतेऽयनाय,"

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

"ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिभिः श्रुतिभि. केवलात्मज्ञानस्यैव मोक्षहेतुत्वावगमादुदाहृतश्रुतीनामपरमार्थभावात् भगवदुक्तसंसिद्धिशब्दस्य चित्तशुद्धिपरत्वात् समुच्चयवादस्याचार्यैरेव बहुधा दूषितत्वाच्च न केवलात्कर्मण· सकाशात् ज्ञानसहिताद्वा मोक्षफललाभः । किं तु भगवत्प्रसादात् लब्धसंसारनिवर्तकतत्साक्षात्कारादेवेति तत्साक्षात्काराय निखिलभक्तसंरक्षणविचक्षणकृपाकटाक्षं भगवन्त बहुधा संबोध्य स्तौति—उद्धृतनगेत्यादिना । यद्वा—श्लोकत्रयेणाध्यायत्रयार्थं संक्षेपेण प्रतिपाद्य, अधुना चतुर्थेन चतुर्थाध्यायार्थं वदन् साधकानां भगवति भक्तिप्रकर्षलाभाय भगवन्तं पुनः पुनः स्तौति—

उद्धृतनग नगभिदनुज
दनुजकुलामित्र मित्रशशिदृष्टे ।
दृष्टे भवति प्रभवति
न भवति किं भवतिरस्कारः ॥ ४ ॥

उद्धृतेति । हे मित्रशशिदृष्टे! मित्रस्तपनः, शशी शीतकिरणः तावेव दृष्टी नेत्रे यस्य वैश्वानरस्य भगवतः स तथा तत्संबोधनम् । तथा श्रुत्या चायमर्थः प्रतिपादितः "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्याद्यया "भूः पादौ यस्य नभं चोदरमसुरनिलश्चन्द्रसूर्यौ च नेत्रे कर्णावाशाः शिरो द्यौः" इत्यादिस्मृत्या च ।

यद्वा—भक्तानां हृदयकुहरसंशयदुरन्ताज्ञानपङ्कशोषकत्वेन तेषामेव तापत्रयानलजनितसंतापोपशामकत्वेन श्रद्धाभक्तिध्यानादिलक्षणदैवीसंपद्भिर्व्यक्तत्वेन वा मित्रशशिनौ दृष्टी नेत्रे यस्य स तथा भवति । तस्मिं दृष्टे सति तत्त्वमस्यादिमहावाक्यैरपरोक्षीकृते सति भवगादिजनिताखण्डाकारकारितायां चित्तवृत्तौ प्रतिबिम्बिते सति पूर्वोक्तलक्षणस्य भवस्य संसारस्य तिरस्कारः संसारस्य तस्योच्छेद आत्यन्तिकी निवृत्तिः किं न भवति, अपि तु भवत्येवेत्यर्थः ।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

"ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिश्रुतेः।

ननु मत्साक्षात्कारेणाविद्यालक्षणभवतिरस्कारो यः प्रतिपादितः स न संभवति। अन्यदीयज्ञानस्यान्यज्ञाननिवर्तकस्य लोकेऽदृष्टचरत्वात् इत्याशङ्क्य जीवो ब्रह्म नान्यत् सच्चिद्रूपत्वात्। ब्रह्मवदित्याद्यनुमानेन "तत्त्वमसि" "नान्योऽतोऽस्ति द्रष्टा" "नात्र काचन भिदास्ति" "क्षेत्रज्ञं चापि मां विद्धि" "सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः" इत्यादिश्रुतिस्मृतिपुराणवचनैश्च जीवेश्वरयोरनन्यत्वावगमात्, "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादितदीयवचनेन मायालक्षणसंसारतरणस्य त्वदधीनतावगमाच्च शुक्त्यधिष्ठानज्ञानेन कल्पितरजतभ्रमनिरासवत् ऐन्द्रजालिकसमाश्रयणेन तद्विनिर्मितमायानिवृत्तिवच्च; त्वत्साक्षात्कारेणैव "माया चाविद्या च स्वयमेव भवति" इत्यादिश्रुतिसिद्धमायालक्षणमदीयाविद्यानिरास इत्यभिप्रेत्य भगवद्रूपत्वमाविष्करोति—**प्रभवतीति**। प्रकर्षेण भवतीति प्रभवति, विद्यते सत्तासुखादिरूपेणेति प्रभवः, तस्मिन् अपरोक्षीभूते इति यावत्। "सत्यं ज्ञानमनन्तं ब्रह्म," "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इत्यादिश्रुतिस्मृतिप्रमाणैः सच्चिदानन्दात्मकस्य तस्य सर्वानुभूतितया सर्वान्तर्यामित्वेन च विद्यमानताप्रतीतेः।

**उद्धृतनगेति**। स्वमखविघातसंजातप्रततरोषभाषणप्रेरितप्रबलशिलाप्रवर्षप्रचलितगोकुलनिवासिनिजभक्तपरिपालनार्थम् उद्धृतो नगो गोवर्धनाख्यः पर्वतो येन स तथा तत्संबोधनं तथा। उद्धृतौ शापनगौ धनदसुतौ यमलार्जुनौ तत्स्वरूपात् येन स तथा। यद्वा — स्वर्गनरकनानायोनिजन्मदुःखकामक्रोधशोकमोहादिलक्षणा पीडा नाधिगच्छतीति नगः अयोध्यावासिनरवानरादिरूपो जन्तुः स उद्धृतः स्वस्वरूपं नीतो येन स उद्धृतनगः। न गच्छतीति नगः इति निरुक्तेः तत्रापि संभवात्। यद्वा—श्रीवराहावतारे गिरिसरित्सरोवरसागरसहितवसुमतीलक्षणो नगो दंष्ट्राग्रेण लीलयोद्धृतो येन स तथा। यद्वा—अमृतनिर्मथनवेलायां तत्प्रदानद्वारा निजशरणसुरनिवहपरिरक्षणार्थं मन्दराख्यो नगो धृतो येन कूर्मरूपिणा भगवतेति स तथा। एतेन पारतन्त्र्यं भगवतो दर्शितं भवति। उक्तं च भगवता, "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः" इत्यादिना।

**नगभिदिति**। प्रचण्डबलिबाहुदण्डखण्डिताखण्डलमंदाखण्डलसुरनिवहप्रार्थनया बलिगर्वनिर्वापणद्वारा सुरहितार्थं नगान् भिनत्तीति नगभिदिन्द्रः तस्यानुजत्वेन अदित्यां कश्यपात् जातो नगभिदनुजो वामनः तत्संबोधनम्। **दनुजाकुलामित्रेति**। तत्र दनुजा दानवाः वृत्रासुरप्रमुखाः तेषां कुलं समूहः वंशपरंपरा वा तस्यामित्र शत्रो दनुजकुलनाशकेति यावत्। दनुजशब्देन दैत्यादयोऽपि ग्राह्याः। एतद् दैत्यादिनिग्रहणं भगवतो भक्तपरिपालनार्थमिति गम्यते। तथाच भगवतैवोक्तम्—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥"

इति। तदनेन श्लोकेन यज्ञाद्यनुष्ठानसाधनसमार्जितबुद्धिशुद्धिसहितश्रवणादिप्रसादलब्धतत्त्वसाक्षात्कारप्रयोजनाविद्यालक्षणभवतिरस्कारसमनियतानन्दावाप्तिप्रतिपादनेन फलाध्यायार्थो दर्शितः ॥ ४ ॥

"यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह," "यत्तदद्रेश्यमगोत्रमवर्णं," "न चक्षुषा गृह्यते नापि वाचा" इत्यादिश्रुतिप्रदर्शितप्रणाल्या इन्द्रियावगोचरोऽपि भगवान् मत्स्यादियोन्याश्रयणमतिगर्हितं दूरीकृत्य स्वभक्तपरिपालनार्थमङ्गीचकारेति समालोच्य भक्तपक्षसंरक्षणविचक्षणमधोक्षजं भवदरविदलनाय पुनः स्तौति—

मत्स्यादिभिरवतारै-
रवतारवताऽवताखिलवसुधाम्।
परमेश्वर परिपाल्यो
भवता भवतापभीतोऽहम् ॥ ५ ॥

मत्स्यादिभिरित्यादिना। परमेश्वर; परा विचित्रा जगदुपादानकारणीभूता मा परमा तस्या ईश्वरः स्वामी नियन्ता परमेश्वरः; "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेः। यद्वा—परमाः प्रकृष्टाः हिरण्यगर्भादयः तेषामीश्वरः। यद्वा—परमश्चासावीश्वरश्चेति परमेश्वरः। हे परमेश्वर! भवता त्वया अहमासारसागरान्तः प्रविष्टः कामक्रोधलोभमोहशार्दूलैः कवलीकृतगात्रः मदीयशरणोऽयमिति मत्वा परिपाल्यो रक्षणीय इत्यर्थः।

ननु परिपालनं रक्षणं तच्चानिष्टनिवृत्त्या भवितव्यमित्यतो जगदनिष्टनिवृत्त्या भवितव्यमित्यतो जगदनिष्टनिचयहेतुभूतदशवदनप्रमुखराक्षसान् हत्वा दूरीकृतं साधूनामनिष्टमस्तीत्याशङ्कायामाह—भवतापभीतोऽहमिति। भवन्ति स्वर्गनरकबन्धमोक्षविभ्रमा यस्मिन् सः। भवसंबन्धितापः कामक्रोधादिजन्यो हृदयनिदाहः तस्मात् भीतः संत्रस्तः व्याघ्रादिमुखपतित इव गतदेहानुसंधानः। कथंभूतेन भवता अखिलवसुधाम् अवता रक्षता। यद्वा—नन्वीश्वरं संबोध्य स्वपरिपालनार्थना न युक्ता यतः तमोगुणप्रधानमायोपाधिकस्य जगत्संहर्तृत्वप्रसिद्ध्या पालयितृत्वाप्रसिद्धेरित्याशङ्क्य तद्गुणप्रधानमायोपाधिकस्य तथात्वेऽपि विमलसत्त्वप्रधानमायोपाधिकस्य

तस्यैवेतिहासपुराणादिषु पालकत्वप्रसिद्धेः तं प्रति मत्परिपालनप्रार्थना युक्ततरा इत्याह—**अवतेति**। ननु—अनुकूलप्रतिकूलयोः पालनापालने प्राकृतानामपि संभवतः किमाधिक्यं भगवत इत्याशङ्क्य परिच्छिन्नदशां तेषां कतिपयपदार्थपरिपालकत्वेऽपि निखिलजगद्रक्षकत्वानुपपत्तेः सर्वज्ञस्येश्वरस्यैव तदुपपत्तेः तदाधिक्य केन वर्णनीयमित्याशयेनाह—**अखिलवसुधामिति**। अखिला चासौ वसुधाचेत्यखिलवसुधा तामवतेत्यनेन तन्निवासिजनपरिपालनमप्यर्थादुक्तमेवेति वेदितव्यम्।

ननु—यदुक्तमनन्ताश्रितजनतापरिरक्षकत्वं भगवतः तन्न, धरणीतलवासिजनवर्गमध्यगतरावणमुरनरकमुखदनुजकुलहन्तृत्वेन भगवतस्तत्पालकत्वानुपपत्तिरिति चेन्न। तानपि नरकफलकदुरितसंपादितदानवादिजन्मबन्धनिरसनद्वारा परमानन्दलक्षणस्वपदं प्रापितवान् भगवानिति परमकारुणिकस्य भगवतः तद्रक्षकत्व समुदाचरद्वृत्तिकमेव। तथाचोक्तं भगवता महाभारते, भागवते च आचार्येण श्रीबादरायणेन;

"लालने ताडने मातुर्नाकारुण्यं यथार्भके।
तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः॥"

"ये ये हताश्चक्रधरेण दैत्यास्त्रैलोक्यनाथेन जनार्दनेन।
ते ते गता विष्णुपुरीं नरेन्द्र क्रोधोऽपि देवस्य वरेण तुल्यः॥

अहो बकीयं स्तनकालकूटं जिघांसयापाययदप्यसाध्वी।
लेभे गतिं धात्र्युचितां कुतोऽन्यं कं वा दयालुं शरणं व्रजेम॥"

इति। ननु—सत्त्वोपाधिकस्य वैकुण्ठवासिनो मम स्वाकारेण धरणीरक्षकत्वस्यादर्शनात् कथं तद्रक्षकत्वमित्याशङ्क्य तत्कालीनधर्मसेतुविघातकृदनुजदमनद्वारा निजसेवकसंतरणार्थं स्वीकृततत्तल्लीलाविग्रहेण त्वयैव परिपालिता वसुधेत्येतत्सुप्रसिद्धमित्याहः—**मत्स्यादिभिरिति**।

यद्वा—त्वदीयाज्ञाननिरसनद्वारकत्वात् परिपालनस्यातिकठिनतया मत्प्रार्थना तावन्निरर्थिना इत्याशङ्क्यास्मदादिदृष्टया अतिप्रयाससाधितबहुविधशरीरैः परिमार्जितमहीभारस्य विश्वंभरस्य तव त्वन्निष्पाद्यानर्थहेतुभूताज्ञाननिवृत्तिलक्षणंम परिपालनं पृथुतरदुर्भरगिरिवरनिवहसंवहनप्रथितविभवस्य श्रीहनूमतः श्रीरामाङ्गुलीयकसंवहनवत् न श्रमसंपादकमित्याशयेन वसुधापरिपालनप्रकारमेव भगवतो विशदयति—**मत्स्यादिभिरिति**। मत्स्यादिभिः अवतारैः प्रादुर्भावैः, अवतारवता; स्वीकृतावतारेण, अवता; रक्षता, परिपालयता, अनेन पुत्रेणाहं पुत्रीतिवदत्र तृतीया। हिशब्दः सकलपुराणागमभगवन्महीपरिपालनप्रसिद्धिद्योतनार्थः॥ ५॥

एवं बहुविधलीलावतारैः गुरुतरभिराऽऽश्रयमाणैर्निरैः भगवतो भक्तपरिपालनमाकलय्य तं चानन्तविचित्रमायाशक्तिनिर्यन्तं भक्तवत्सलं भगवन्तं हृदि ध्यात्वा तत्परिपालनलब्धनिजानन्दाति-

शयेन पूर्वोक्तफलसंकीर्तनेनैव भगवल्लक्षितब्रह्मविद्यानमित्र भगवान् भाष्यकारः प्रगायति । यद्वा—प्रायेणास्मिन् कलिकाले दुरितनिचयसंदूषिताशयाना विषयविषपरिमुषितशेमुषीणा-मन्यत्रानधिकारमालोच्य तेषामेव निखिलकल्मषनिरसनद्वारा परमपुरुषार्थप्रयोजनकभगवन्नाम-कीर्तनेन ;

"रामेति वर्णद्वयमादरेण सदास्मरन् मुक्तिमुपैति जन्तुः ।
कलौ युगे कल्मषमानसानामन्यत्र धर्मे खलु नाधिकारः ॥

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

एवं निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥

कलिं सभाजयन्त्यार्याः गुणज्ञाः सारभागिनः ।
यत्र संकीर्तनेनैव सर्वस्वार्थो हि लभ्यते ॥

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥"

इत्यादिवचनैः मतिं स्थिरीकर्तुं फलोक्तिपूर्वकम् ;

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥"

इत्यादिप्रमाणमनुरुध्य भाष्यकारः स्वयं तत्करोति—

दामोदर गुणमन्दिर
सुन्दरवदनारविन्द गोविन्द ।
भवजलधिमथनमन्दर
परमं दरमपनय त्वं मे ॥ ६ ॥

दामोदरेत्यादिना । हे दामोदर! त्वं मे परमं दरम् अपनयेत्यन्वयः । कदाचिद् बाल्ये कृतानयो यशोदया स्वरूपमबुध्वा उदरे दाम्ना बद्धः तेन दाम उदरे यस्य स दामोदरः ।

"दाम्ना बद्धो यतो मध्ये गोपीभिः परिगीयते ।
ततश्च दामोदरतां स ययौ दामबन्धनात् ॥"

अथवा—दाम जगद्बन्धनरज्जुः माया उदरे स्वरूपे वाध्यतया यस्य स तथा । कदाचिद् बाल्ये मृद्भक्षणव्याजेन यया मायया स्थावरजङ्गमात्मकं विश्वं मुखे प्रदर्शितवान् भगवान् मातुः । उक्तं च ;

"मायिन तु महेश्वरम्" "मम माया दुरत्यया" "अनादिमायया सुप्त." इत्यादि श्रुति-स्मृत्यो । यद्वा—दमादिसाधनोपेतत्वे न हिता उदरा उत्कृष्टा अवगतिर्या तया अवगम्यत इति दामोदर । श्रवणादिजनिताखण्डाकारवृत्तिविषय इति यावत् । "दामाद्दामोदर विदु" इति व्यासवचनात् । दामानि लोकनामानि स्थापयत्युदरान्तरे" इति दामोदरो देवश्च । तेन, "श्रीधर श्रीसमाश्रित" इति वा दामोदर । यद्वा—जगद्बन्धनरज्जुस्वरूपाज्ञान दाम उद् अर परिच्छिन्न यस्मात् स तथा, स्थूलसूक्ष्मप्रपञ्चकारणाज्ञानादपि व्यापक इति यावत् । "अक्षरा-त्परत पर" इति श्रुते ।

ननु—दामबद्धस्य तस्येतरमोचकत्व कथम् । लोके बद्धस्य स्वेतरमोचकत्वादर्शनात् । चिद्रूपत्वेन तथात्वे चेतनत्वेनाभिमताना जीवानामपि सामर्थ्य स्यादिति चेन्न । यशोदावात्सल्यो-पात्तबन्धनस्यापि मायोपाधेरीश्वरस्य वशीकृतमायत्वाद्वा रजस्तमोभ्यामनभिभूतनिरतिशयसत्त्वोत्कर्षा-दनादिस्वाभावत सच्चिदात्मकत्वात् सच्चित्स्वरूपसामर्थ्याद्वा तत्सामर्थ्यम् । अस्मदादीना तु अविद्या-परतन्त्रत्वात् तत एव कर्तृत्वभोक्तृत्वलक्षणसमारामिमानाच्च न तत्सामर्थ्यमिति ईश्वरोचितान् गुणानौपाधिकानाह—गुणमन्दिर इति । गुणा सर्वज्ञत्वपरमकारुणिकत्वजगन्नियन्तृत्व-सत्यकामत्वसर्वेश्वरत्वादयो ब्रह्मादिभिरपि सख्यातुमशक्या, तेषा मन्दिरमिव स्थिति स्थानम् । गुणमन्दिर तत्स्थान तथा। "एष सर्वेश्वर एष भूपाल" "सत्यकाम सत्यसङ्कल्प" इत्यादिश्रुते । न च गुणाश्रयत्वे घटादिवज्जडत्वादयो दोषा स्युरिति वाच्यम् । तेषा तत्र कल्पितत्वेन पारमा-र्थिकानामभावान्न तदापादकत्वम यथा कल्पितस्य वस्तुविपर्ययसामर्थ्याभ्युपगमे कल्पितरजता-द्याश्रयाणा शुक्तिशकलादीना रजताद्यात्मकत्वैव स्यादिति न किंचिदेतत् । न च क्वचित् पार-मार्थिकस्यैवान्यत्रारोपोऽन्यथाऽऽरोप्यस्य सर्वथाऽपारमार्थिकत्वे शशशृङ्गादीनामारोप स्यादिति वाच्यम् । लौकिकपारमार्थिकत्वस्येहानुपस्थिते, इहोपस्थितस्य च क्वचिदप्यपारमार्थिकतैव । अन्यथा तस्यैवोपस्थितौ नेदमिति तस्यैवतद्बाधप्रतियोगित्व जगति रजतादेरेव न स्यात् । तस्मात् माया-गुणरूपाधिष्ठानतयैव गुणमन्दिरतेति भाव । न चान्यथाख्यातिशङ्कासमुद्भव । गुणिगुणयोरपि जीवेशानाभासेन करोति ।"

"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥"

इत्यादिश्रुत्या सन मायाकल्पितमित्यचार्यैस्तथा चारोपाभ्युपगमात्र तच्छ्रवासर ।

"द्रक्ष्यामि नूनं सुकपोलनासिक-
स्मितावलोकारुणकञ्जलोचनम् ।
मुखं मुकुन्दस्य गुडालकावृतं
प्रदक्षिणं मे प्रचरन्त्यमी मृगाः ॥"

"कुटिलकुन्तलं श्रीमुखं च ते
जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥"

"चन्द्रकान्ताननं राममतीव प्रियदर्शनम् ।
यावन्न चन्द्रसंकाशं द्रक्ष्यामि शुभमाननम् ॥
मातुः पद्मपलाशाक्षं न मे शान्तिर्भविष्यति ॥"

"प्रसन्नहासारुणलोचनोल्लस-
न्मुखाम्बुजध्यानपराश्चतुर्भुजः ॥"

इत्यादिभागवतरामायणवचनैः स्वकृतकटाक्षलेशेनैव सौन्दर्यसंपत्सारस्वतेन्दिराया निरन्तर-सान्द्रानुरागपूर्वकावलोकनविषयत्वेन च भगवतः श्रीवदनसौन्दर्यं केन वर्णयितुं शक्यमित्याशये-नाह—सुन्दरवदनारविन्देति । वदनमेवारविन्दं वदनारविन्दं सुन्दरम् अतिमनोहरं वदनारविन्दं यस्य सः, तथा तत्संबोधनम् । तथा महाख्यमधुकरसमुचितस्यापि मकरन्दनिर्भरत्वेनारविन्दसाम्यं भगवद्वदनस्य ।

इदानीम्—

"अच्युतः कल्पवृक्षस्तु अनन्तः कामधुग्भवेत् ।
चिन्तामणिस्तु गोविन्दो नामत्रयमुदाहृतम् ॥"

इत्यादिश्लोकोक्तरीत्या वाञ्छितार्थफलत्वेन चिन्तामणिकल्पस्य गोविन्दनाम्नः,

"ऋग्वेदं मा यजुस्तात मा साम पठ किंचन ।
गोविन्देति हरेर्नाम गेयं गायस्व नित्यशः ॥"

इत्यादिवचनैः रागादिपरिवर्जनपूर्वकं गेयतां दर्शयन्ति—गोविन्देति । व्रजे विद्यमाना गावस्तु आकल्पध्यानेनापि ब्रह्मादिभिरपि गणयितुमशक्याः तास्तत्त्वज्ञानपुरःसरं स्वभावादेव विन्दन्ति जानातीति गोविन्दः, तत्संबोधनम् । यथोक्तं च भागवते;

"कृष्णवर्त्मरसांस्यार्वैर्यूथीकृत्य स्ववत्सकान् ।
चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥"

इति । यद्वा—स्वत्वाभिसंबन्धेन गाः विन्दते लभते इति गोविन्दः तत्संबोधनम् । तथा.

"नष्टा वै धरणीं पूर्वमविदं वै गुहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥"

इति **विष्णुधर्मोत्तर**वचनात् गां धरणीं विन्दते इति वा गोविन्दः । अथवा—

"अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥"

इति वचनात् गवामिन्द्रत्वेन गतो गोविन्दः । अथवा—

"गौरेषा तु तथा वाणी तां विन्दति यतो भवान् ।
गोविन्देति ततो देव मुनिभिः कथ्यसे सदा ॥"

इति **हरिवंश**वचनात् गोभिः वेदान्तवाक्यैः विन्दते इति वा गोविन्दः । "तं त्वौपनिषदं पुरुषं पृच्छामि" "नावेदविन्मनुते तं बृहन्तम्" इति श्रुतेः । "गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः" इति **विष्णुतिलके** च प्रतिपादनात् ।

इदानीमाचार्यो भगवन्नामकीर्तनस्य;

"अलमलमियमेव प्राणिनां पातकानां
निरसनविषये या कृष्ण कृष्णेति वाणी ।
यदि भवति मुकुन्दे भक्तिरानन्दसान्द्रा
करतलकलिता सा मोक्षसाम्राज्यलक्ष्मीः ॥"

इत्यादिप्रमाणोक्तरीत्या पापनिवृत्त्यादिसाधनकज्ञानफलाज्ञाननिवृत्तिलक्षणं मोक्षफलं भगवतो भवदरविदलनसामर्थ्यप्रदर्शनपूर्वकमाविष्करोति— **भवजलधिमथनमन्दरेति**। जलधिमथने अचलमन्दरादिवत् सेवकस्य भवः संसारः स एव जलधिः तन्मथने तन्निवृत्तौ मन्दरवत् अचलोऽत्यर्थं क्षम इत्यर्थः । तत्सम्बोधनम् । तथा हे गोविन्द त्वं मे मम परमं दरं तपनतनयात् अन्तकात् भयम् अपनय निवारय दूरीकुर्वित्यर्थः । अन्यानि दराणि उपायैरन्यथाकर्तुं शक्यन्ते । अस्य तु परमत्वमन्यथयितुं विधिप्रमुखैरप्यशक्यत्वात्कालस्य, उक्तं च,

"बहूनीन्द्रसहस्राणि देवानां च युगे युगे ।
कालेन समतीतानि कालो हि दुरतिक्रमः ॥"

इति ।

यद्वा—"अभयं वै जनक प्राप्तोऽसि" इत्यस्याः श्रुतेः व्याख्यानावसरे भाष्यकारा-दिभिः भयशब्दस्याशनायत्वया व्याख्यानतो प्रागुदरशब्दस्यापि भयवाचिनः तत्पर्यायोचि-

त्वात् बहुकामप्रलोभितनचिकेतसा प्रदर्शितकामतिरस्करणपूर्वकं दरशब्दिताज्ञाननिवर्तकात्मज्ञानस्य पृष्टत्वात् । विष्णुपुराणे च—दंष्ट्राकरालवदनश्रीनरसिंहसदर्शनभीतभीतसुरनिकरप्रेरितप्रह्लादेनापि श्रीनृसिंहं प्रति नाहं बिभेमि त्वद्रूपात् किंतु त्वदीयाया मायायाः सकाशादिति तन्निवृत्तेरेव प्रार्थितत्वात् सुप्रसन्नं सार्वभौमसविधं प्राप्य वराटिकालाभप्रार्थनावदेव यमभीतिनिराकरणप्रार्थनाया अकिंचित्करत्वात् परमेश्वरानुगृहीतानां भीष्मप्रभृतीनां योगशास्त्रनिरतानां चोद्दालकनीतहव्यादीनां स्वेच्छया देहत्यागश्रवणेन तन्निराकरणप्रार्थनामन्तरेणापि तन्निवृत्तेः संभवात् परमशब्दोपपदाच्च सकलानर्थनिदानाज्ञानमेवात्र दरशब्दार्थः । तथा च परमं कारणत्वेन प्रवृद्ध, तत एव व्यापकं दरम् अज्ञानलक्षणं भयम् अपनय निवारय दूरीकुर्वित्यर्थः ।

ननु—भवजलधिमथनमन्दरेत्यनेनैव विशेषणेनास्यार्थस्य सिद्धत्वात् पौनरुक्त्यमिति चेन्न । पूर्वत्र जन्ममरणलक्षणभयनिवृत्तेरवगतत्वेऽपि तत्कारणाविद्यानिवृत्तेरनवगमात् प्रथमतस्तु गुणोपसर्जनतया प्रतीयमानायाः प्राधान्येनात्र प्रतिपादनाद्वा न पौनरुक्त्यम् ।

ननु—अज्ञानस्याभावरूपत्वमङ्गीकृत्य तन्निवृत्तिः प्रार्थ्यते उत भावरूपत्वम् । नाद्यः—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यादिश्रुत्या आकाशादिप्रपञ्चोपादानेनावगताज्ञानस्याभावरूपत्वायोगादनङ्गीकृतत्वाच्च । नापि द्वितीयः—तस्यानध्यस्तत्वात् स्वेनैव स्वस्याध्यासे आत्माश्रयात् अज्ञानान्तराङ्गीकारे चानवस्थापत्तेः लोकेऽनध्यस्तस्य घटादेर्ज्ञानान्निवृत्त्यदर्शनात् । किं च भावरूपाज्ञानस्यानादितया निवृत्तिर्न संभवति । अनादिभावस्यात्मवन्नित्यत्वनियमात् परमाणुश्यामताया अनादित्वस्याप्रतिपत्तेः ।

किं च—किमज्ञाननिवृत्तिः सती उतासती, सदसती वा सदसद्विलक्षणा वा । न आद्ये चात्मभिन्ना, उतात्मभिन्ना भिन्नाभिन्ना वा, भिन्नाभिन्नविलक्षणा वा नाद्यः, द्वैतापत्तेः । न द्वितीयः, आत्मनोऽनादित्वेनाविद्यानिवृत्तेः ज्ञानसाध्यत्वानुपपत्तेः । नापि तृतीयः, विरोधात् । अत एव न चतुर्थोऽपि भिन्नाभिन्नत्वव्यतिरेकेण प्रकारान्तराभावात् । न च प्रथमद्वितीयः, असत्त्वे शशशृङ्गतुल्याया तस्याः साध्यत्वानुपपत्तेः । पुरुषार्थत्वाभावप्रसङ्गाच्च । नापि तृतीयः । विरोधादेव उक्तपक्षद्वयदूषणापत्तेश्च । न चतुर्थोऽपि सदसद्विलक्षणत्वेऽनिर्वचनीयत्वेन तस्याः अज्ञानावस्थानप्रसङ्गात् । अनिर्वचनीयाज्ञाननिवृत्तेः अनिर्वचनीयत्वानुपपत्तेश्च । नहि घटनिवृत्तिर्घटो भवति । ततश्च सर्वथाप्यनुपपत्तेः नाज्ञानस्य निवृत्तिः संभवतीति चेत्,

अत्रोच्यते—न तावदज्ञानस्य कल्पकाभावेनाकल्पितत्वया ऽज्ञाननिवृत्त्यसंभवः । प्रदीपादिवत्तस्य स्वपरनिर्वाहकतया तस्य स्वप्रकाशे आत्मनि वस्तुतोऽसंभवेन कल्पितत्वस्य युक्तिमुचितत्वात् । "अनृतेन हि प्रत्यूढा इमे सत्याः कामा अनृतापिधानाः," "नासदासीन्नो सदासीत्" इत्यादिश्रुतेः । नाप्यनादिभावत्वेन तस्य निवृत्त्यनुपपत्तिः । अनादिभावस्यानिवृत्तिरिति

सामान्याव्याप्ते । ज्ञानेनाज्ञाननाश इत्यनुभवसिद्धविशेषव्याप्तिविरोधेन, "तरति शोकमात्मवित्," "भूयश्चान्ते विश्वमायानिवृत्तिः," "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्यादिश्रुत्या, "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते, योगी मायाममेयाय" इत्यादिस्मृत्या चाज्ञानव्यतिरिक्तस्थले सङ्कोचस्यैवोचितत्वात्, तस्यास्माभिः भावत्वानङ्गीकारादभावविलक्षणत्वमात्रेण भावत्वव्यपदेशाच्च । अत एव न प्रथमः कल्पः । अज्ञाननिवृत्तेश्च "प्रपञ्चोपशमम्" इत्यादिरीत्या सद्रूपात्मभेदाङ्गीकारात्, न चात्माभिन्नाया अज्ञाननिवृत्तेः ज्ञानसाध्यत्वानुपपत्तिः, यस्मिन् सति यस्याग्रिमक्षणसम्बन्धः, असति यस्मिन् यस्याभावः तत् तत्साध्यमिति साध्यलक्षणस्य ज्ञाने सत्यज्ञाननिवृत्तिरूपात्मनोऽग्रिमक्षणसम्बन्धः ज्ञानाभावे ऽज्ञाननिवृत्त्यभावोऽज्ञानमिति, अज्ञाननिवृत्तिरूपात्मन्यपि सत्त्वोपपत्तेः । भिन्नसत्ताकयोः भावाभावयोर्विरोधाभावाच्च नित्यसिद्धायामप्यज्ञाननिवृत्तौ साध्यत्वभ्रान्त्या पुरुषप्रवृत्त्युपपत्तेः सर्वथाप्यज्ञाननिवृत्तेः संभवात् प्रार्थनोपपन्नेति भावः ॥ ६ ॥

एवं भगवान् भाष्यकारः;

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥"

इति श्लोकोक्तनवविधभक्तीनां मध्ये द्वितीयभक्तिनिरूपणद्वारा भगवन्तं स्तुत्वेदानीं,

"ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं
वन्दामहे पुरुष ते चरणारविन्दम् ॥

प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ।
फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥"

इत्यादिवचनैः सकलदुःखापनोदकत्वेन निखिलपुरुषार्थनिदानतया मुमुक्षुजनशरणत्वेनावगता श्रीमन्मुकुन्दहृदयानन्दनदसहितेन्दिरया सान्द्रानुरागमस्पर्धिता भगवच्चरणकमलपरिभजनाभिधां चतुर्थीं भक्तिं दर्शयन्नेव अन्तरङ्गसाधनषट्पदीपठनप्रार्थनापूर्वकमेव प्रकरणमुपसंहरति—

नारायण करुणामय
शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये
वदनसरोजे सदा वसतु ॥ ७ ॥

नारायणेत्यादिना । नारं जीवसमूहोऽयनमाश्रयो यस्यान्तर्यामिणः स नारायणः, उक्तं च;

> "ब्रह्मादीन्यस्य भूतानि चराणि स्थावराणि च ।
> अयनं यत्पुरा विष्णोस्तेन नारायणः स्मृतः ॥
> नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
> तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥"

इति महाभारते । अथवा—नारस्य जीवसमूहस्य अयनं प्रवृत्तिः यस्मात् स तथा, तत्संबोधनं तथा । यद्वा—सर्वसाक्षित्वात् नारमयते साक्षादपरोक्षतया पश्यतीति नारायणः तत्संबोधनं तथा, गत्यर्थानां ज्ञानार्थतायाः प्रसिद्धत्वात् । यद्वा—नारा आपस्ता अयनमाश्रयो यस्य सः नारायणः । तथा च दर्शितम्—

> "आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
> ता एता अयनं पूर्वं तेन नारायणः स्मृतः ॥"

इति मनुस्मृतौ । ननु—

> "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
> मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥"

इत्यादिश्रुत्या सकलोपसंहारकर्तृत्वेनातिनिष्ठुरस्वभावतयावगतं मामुद्दिश्य तव प्रार्थना निरर्थिकेत्याशङ्क्य प्राण्यदृष्टाद्वारा जगदुत्पत्तिस्थितिलयलक्षणविविधविचित्रकल्पनैकशिल्पिनस्तव ।

> "सकृदेव प्रपन्नाय तवास्मीति च याचते ।
> अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥"

इत्यादित्वदीयवचनेनैव निसर्गकरुणैकस्वभावत्वावगमात् त्वामुद्दिश्यैव मत्प्रार्थना सफलेत्याह—करुणामयेति । हे करुणामय ! करुणाप्रचुर करुणैकस्वभावेति यावत् । करुणैकस्वभावत्वं च सुप्रसिद्धम् ।

> "द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं
> संतानबीजं कुरुपाण्डवानाम् ।
> जुगोप कुक्षिं गत आत्तचक्रो
> मातुश्च मे यः शरणं गतायाः ॥"
>
> श्रुत्वा हरिस्तं शरणार्थिनमप्रमेय-
> श्चक्रायुधः पतगराजभुजाधिरूढः ।

चक्रेण नक्रवदनं विनिपात्य तस्मा-
द्धस्ते प्रगृह्य भगवान् कृपयोज्जहार ॥"

"पस्पर्श बालं कृपया कपोले"

"विषजलाशयाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतोऽनलात् ।
वृषमयात्मजाद्विश्वतो भयादृषभ ते वयं रक्षिता मुहुः ॥"

इत्यादिश्रीभागवतात् अहं तनैतौ तावकौ चरणौ शरणं आश्रय करवाणि इति स्थापयामि । भ्याज्ञानहेतुकससारात् भीत तावकौ चरणौ आश्रयामीत्यर्थ. ।

ननु—शरणे करवाणीति किं न स्यादिति चेन्न । एकवचनान्तोऽपि शरणशब्दो द्विवचनान्तचरणशब्दविशेषणत्वादेकवचनम् "वेदा प्रमाणम्" इतिवत् । न च करणार्थ एव कृधातु न स्थापनार्थ इति वाच्यम् । मच्छिरसि हस्त कुरु" 'चरणौ पृष्ठे कुरु' इति दानस्थापनयो सभवात् । एव 'दान कुरु' 'पात्रवस्त्रादिक गृहाभ्यन्तरे कुरु' इत्यादौ दानस्थापनार्थ कृधातु सुप्रसिद्ध एव । यद्वा—वरणार्थ एव कृधातु । न च तथात्वेऽन्वयानुपपत्ति न हि चरणयो कार्यत्व सभवतीति । "सविशेषणे विधिनिषेधौ विशेषणमुपसक्रामत" इति न्यायेन स्वर्गी स्यामित्यत्रेव विशेषणे आश्रयणक्रियाया रक्षणक्रियाया वान्वयोपपत्ते ।

इदानी भगवच्चरणध्यानसाधन षट्पदीपठन प्रार्थयते—इतीति । इति पूर्वोक्तपदानि पद्यन्ते गम्यन्तेऽर्था एतैरिति पदानि श्लोका, षण्णा पदाना समाहार षट्पदी । यथा षट्पदी भ्रमरी स्वैर्येण सरोजे निवसति, तथैव श्रीमच्छकरवदनसरोजविनिर्गता षट्पदी तत्कर्तुर्मम वदनसरोजे सदा वसतु । तदनेन भगवच्चरणध्यानपूर्वकषट्पदीस्तोत्रपठनस्य पुरुषार्थचतुष्टयहेतुत्व सूचित भवति ।

ननु—नेय षट्पदी । किं तु सप्तपदी । नारायण करुणामयेति श्लोकेन सप्तश्लोकरूपत्वात् । सत्यम् । नारायणेति श्लोकस्य फलस्तुतिपरत्वेन बहिर्भूतत्वादिति षट्पदीत्वमेव ।

अथवा—षड्भि उपक्रमादिभि लिङ्गै पद्यते तात्पर्येणावगम्यते इति षट्पद परमात्मा । सोऽस्य प्रतिपाद्यत्वेन वर्तते इति षट्पदी सप्तश्लोकात्मको ग्रन्थ । स मम वदनसरोजे वसत्विति, तस्मिन् पक्षे न पूर्वोक्तो दोष ।

केचन टीकाकारा —नारायणेत्यादि चरणाविलन्तानामेव षण्णां पदानां समाहार. षट्पदी, सा मम वदनसरोजे सदा वसत्वित्यर्थ कुन ? एवशब्दस्याव्यवहितपरामर्शकत्वे संभवति व्यवहितपरामर्शकत्वस्यायाय्यत्वादित्याहु ।

ननु—पदशब्दस्य पादचतुष्टयात्मकश्लोकपरतया व्याख्यानत्वेन आर्याषट्कस्य कथं षट्पदीत्वमिति चेन्न। आर्याया अपि पादचतुष्टयात्मकत्वेनापि श्लोकार्ययोरभेदात् आर्याषट्कस्य तदुपपत्तेः। आर्यालक्षणं चोक्तं छन्दोग्रन्थविद्भिः;

" यस्याः पादे प्रथमे
द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये
चतुर्थके पञ्चदश सार्या॥"

इति॥ ७॥

श्रीभाष्यकृद्वदनपङ्कजसंप्रसूतं
सद्भक्तिबोधसुनिदानवचोमरन्दम्।
आस्वाद्य माद्यतितरां मम मानसालिः
निःसीमसान्द्रनिजभूमपदं हि लब्ध्वा॥

षट्पदीनौकया सर्वानुदधार नतोऽस्म्यहम्।
संसारसागरे मग्नान् यस्तं शांकरदेशिकम्॥

भगवद्भक्तिगन्धाढ्यैः कुसुमैर्वाङ्मयैः कृता।
षट्पदीमञ्जरी सम्यग्योजिता कृष्णपादयोः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीशिवनारायणानन्दतीर्थ-
गुरुचरणसेवकश्रीशंकरानन्दतीर्थविरचिता
षट्पदीस्तोत्रव्याख्या मञ्जरी
समाप्ता.



श्रीशङ्करभगवत्पादविरचितम्

## ॥ श्रीगोविन्दाष्टकम् ॥



### श्री आनन्दज्ञानकृतटीकया समलङ्कृतम्

इह खलु सकललोकहितावतारः भगवान् श्रीमहाविष्णुः भुवनहिताभ्यर्थितो भूभारजिहीर्षया यदुकुलेऽवतीर्णस्सनकादिमुनिजनैरनुगीयमानसुचरितो भगवान् नन्दगोपवेश्मनि विजहार। तमेव विहारमद्य्‌मि श्लोकैस्सत्यमित्यादिभिरुपवर्णयन् भगवत्पूज्यपादमुनिः अस्तसमस्तविशेषं सच्चिदानन्दाद्वयं परमात्मानमभिप्रैति—सत्यमिति।

श्लो॥ सत्यंज्ञानमनंतं नित्यमनाकाशं परमाकाशं
गोष्ठप्राङ्गणरिङ्खणलोलमनायासं परमायासम्।
मायाकल्पितनानाकारमनाकारं भुवनाकारं
क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥

परमश्चासावानन्दश्चेति परमानन्दः तं निरतिशयानन्दं, गोभिः गीर्भिः, तत्त्वमस्यादिवाक्यैः वेद्यत इति गोविन्दः तं निरतिशयानन्दं, प्रणमत, प्रकर्षेण भक्तिश्रद्धातिशयेन नमत, वाङ्मनःकायैरर्चयत। अर्चनायाः किं फलमित्याकाङ्क्षायां परमेश्वरप्रसादेन सत्यज्ञानादिलक्षणपरमार्थप्राप्तिरेव मुख्यफलमित्यभिप्रेत्य तं विशिनष्टि, सत्यं, अबाध्यं ज्ञानान्तरेण विषयासत्त्वप्रतीतिनिरोधः, यथा, तद्योग्यस्य शुक्तिकादावारोपितस्य रजतादेः विवेकज्ञानेन बाध्यत्वं न तथा बाध्यत्वमस्य अविकल्पितत्वात्, स्वरूपभूतत्वात्, व्यापारप्राप्त्यभावाच्च। ननु सत्यत्वे प्रमाणमस्ति वा न वा, अस्ति चेत्तद्विषयत्वेन घटादिवत् विषयत्वमापद्यते, नास्ति चेत्, कथं सत्यत्वसिद्धिरित्याशङ्कायामाह, परमात्मनः स्वयंप्रकाशत्वात् सत्यत्वमित्यभिप्रायेण तं विशिनष्टि, ज्ञानमिति। "विज्ञानमानन्दं ब्रह्म" "प्रज्ञानं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतेः ज्ञप्तिमात्रविग्रहः, अत एव स्वयंप्रभमित्यर्थः। सत्यत्वात् ज्ञानत्वाच्च अनन्तं, अन्तः, सीमा, इयत्ता न विद्यते यस्य सोऽनन्तः, न देशतः कालतः वस्तुतोऽप्यपरिच्छिन्नम्। तथाहि, न तावद्देशतः परिच्छिद्यते, "यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति परमात्मनः सर्वगतत्वाम्नानात्। नापि कालतः परिच्छिद्यते "न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः" इत्यात्मनो जन्मविनाशप्रतिषेधात्। नापि वस्तुतः, अस्य निमित्तोपादानत्वेन व्यतिरिक्तवस्त्वन्तराभावात्। "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा" इति न्यायात् अनाद्यविद्यापरिकल्पितस्य निखिलद्वैतस्य रज्जुभुजंगादिवत्

दृश्यत्वेनाधिष्ठानमात्रावशेषत्वात्। अत एव नित्यमविनाशि "नित्यं विभुं सर्वगतं सुसूक्ष्मं" इति श्रुतेः। "अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्" इति स्मृतेश्च सर्वदापि विद्यमानमित्यर्थः। ननु आकाशादेरात्मनः सकाशादुत्पत्तिश्रवणात् ब्रह्मणोऽपि आकाशादिप्रपञ्चान्तःपातित्वेनानित्यत्वमित्याशङ्क्य तस्य च आकाशादिविलक्षणत्वेन जन्माद्यभावान्नित्यत्वं सुस्थितमित्याशयेनाह **अनाकाशमिति**। "अतमोऽवाय्वनाकाशम्" इति श्रुतेः। आकाशात् व्यतिरिक्तं तत्सङ्गरहितं चेत्यर्थः। जन्मादिमद्भूतविलक्षणत्वादेव परमाकाशं, आसमन्तात् काशते इत्याकाशः, परमश्चासावाकाशश्चेति परमाकाशः, तं, परमाकाशं इत्यर्थः। "येन सूर्यस्तपति तेजसेद्धः" "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः, "ज्योतिषामपि तज्ज्योतिः" इतिस्मृतेश्च। एवं तत्पदलक्ष्यमभिधाय त्वम्पदलक्ष्यमभिधत्ते—**गोष्ठप्राङ्गणरिङ्गणलोलमिति**। गावः श्रोत्रादीनि इन्द्रियाणि तिष्ठन्त्यस्मिन्निति गोष्ठं "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः लिङ्गं चिह्नशेफसोः" इति विदग्धिष्ठिताहङ्कारः। स एवास्य प्राङ्गणं अभिव्यक्तिस्थानं, वृत्तरूपो वा, तत्र रिङ्गणं स्वतन्त्रं कार्यकारणसङ्घातप्रेरकत्वं तत्र लोलं, "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमयती"ति श्रुतेः, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" इति भगवद्वचनाच्च कार्यकरणसङ्घातप्रेरकत्वे लोलमित्यर्थः। तर्हि प्रेरकत्वेनायासः स्यादित्याशङ्क्याह—**अनायासमिति**। अयस्कान्तवत् सन्निधिमात्रेण प्रेरकत्वेनानायासम् आयासरहितमित्यर्थः। परमः अत्यन्तः आयासः, कर्तृत्वभोक्तृत्वलक्षणः यस्य सः परमायासः, तं, **परमायासं** "श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च। अधिष्ठाय मनश्चायं विषयानुपसेवते" इति भगवद्वचनात् समारब्धु खादिविषयमिति यावत्।

नन्वेकस्मिन् एतदुभयं कथं घटते इत्याशङ्कायामस्य मायामयत्वान्नायं दोष इत्याशयेनाह—**मायाकल्पितनानाकारमिति**। अघटितघटनापटीयसी माया, तया परिकल्पितं नानाकारं शरीरं भोगायतनं यस्य सः तथोक्तः, तं, शरीरादेः मायामयत्वात् तन्निबन्धनः स आयासोऽपि तथाविध एवेत्यर्थः। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः। स्वतस्तु **अनाकारम्**, अशरीरं, "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।" "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इतिश्रुतेः अशरीरस्य सुखदुःखभोगराहित्यश्रवणात् नित्यमुक्तमित्यर्थः। ननु नानाकारश्चेत् कथं ब्रह्माद्या स्थावरान्ता ये प्राणिनो मम प्रसूता इति वेदान्तवाक्यं सङ्गच्छत इत्यत आह—**भुवनाकारमिति**। भुवनं मायामयं आब्रह्मस्तम्बपर्यन्तं आकारः यस्य सः तथोक्तः, तं, सर्वात्मने सर्वशरीरिणे भगवत्पादवचनादर्थात्यर्थः "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः। **क्ष्मामानाथं**, क्ष्मा भूमिः मा लक्ष्मीः तयोर्नाथं वल्लभं तं, स्वयं अनाथं नाथरहितं स्वतन्त्रमित्यर्थः। स्वातन्त्र्यमेव प्रकटयति—**परमानन्दमिति**। "आनन्दो ब्रह्म" "अयमात्मा ब्रह्म" इत्यादिश्रुतेः परमानन्दं निरतिशयानन्दं गोविन्दं प्रणमतेत्यन्वयः॥

गोविन्दं नम गोविन्दं नम गोविन्दं नम गोविन्दम् ।
श्रीहरि गोविन्दं नम गोविन्दं नम गोविन्दं परमानन्दम् ॥

श्रीहरि गोविन्दाय नम इत्युत्तरोत्तरश्लोकानां गानकाले वक्तव्यम् ॥ १ ॥

"यथा मातृमान्पितृमानाचार्यवान् ब्रूयात्" "आचार्यवान्पुरुषो वेद" इति श्रुतेः अस्यापि मातृशिक्ष्यत्वं दर्शयति—मृत्स्नामिति ।

श्लो ॥ मृत्स्नामत्सीहेति यशोदाताडनशैशवसंत्रासं
व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् ।
लोकत्रयपुरमूलस्तंभं लोकालोकमनालोकं
लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥ २ ॥

श्री हरिगोविन्दाय नमः । हे कृष्ण इह अस्मिन्मन्दिरे क्षीरनवनीतादिभिराढ्ये मृत्स्नां मृत्तिकां किमर्थं निमित्तं भक्षयसीति यशोदाकर्तृकं ताडनं यशोदाताडनं तस्मिन् समये शैशवसन्त्रासः भीतिः यस्य स तथोक्तः तं बालवदतिभीतमित्यर्थः ॥ मृद्भक्षणापराधपरिहारत्वेन मात्रे विश्वरूपं दर्शितवानित्याह, **व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् ।** व्यादितं विवृतं यद्वक्त्रं तस्मिन्नालोकिता दर्शिता लोकालोकचतुर्दशलोकानां आलिः पङ्क्तिः येन स तथोक्तः तं । लोक्यन्त इति लोकाः पृथ्व्यादयः सप्त, न लोक्यन्ते ताभिरिति अलोकाः अतलादयः सप्त, अतएव चतुर्दश लोकाः तेषामालिरिति विग्रहः । किंच **लोकत्रयपुरमूलस्तंभं** इति लोकानां भुवनानां त्रयं लोकत्रयं, तदेव पुरं तस्य मूलस्तम्भं स्थितिहेतुमित्यर्थः । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ इति भगवद्वचनात् लोकालोकं लोकाः आत्मस्वरूपभूता आलोक्यन्ते प्रकाश्यन्ते येन स तथोक्तः तं । स्वयं तु **नालोकः** आलोकरहितः तं । अन्यथा अनवस्था प्रसज्येत "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इति श्रवणात् । **लोकेशं** लोकानां वाय्वादीनामीशं शास्तारं "वातादयो महावीर्यास्स्वतन्त्रा बाहुशालिनः । तेऽपि भीताः प्रवर्तन्ते भगवतोऽपि महत्तमाः ॥" इति सुरेश्वराचार्यवचनात् । किं च **परमेशं** परमाः इन्द्रादिभ्यस्त्वधिका ब्रह्मादयः तेषामपीशं "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥" इति ब्रह्मादीनामप्युपदेष्टृत्वश्रवणात् सर्वेश्वरं चेत्यर्थः ।

श्लो॥ त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं
कैवल्यं नवनीताहारमनाहारं भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं
शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥ ३ ॥

श्री हरिगोविन्दाय नम ॥ त्रिविष्टपे वसति ये त्रैविष्टपा स्वर्गलोकवासिनो देवा तेषा रिपव शत्रव दानवा, तेषु ये वीरा शूरा तान् हृ तीति, त्रैविष्टपरिपुवीरघ्न त क्षिति भारघ्नमिति दुष्टसहारेण क्षितेर्भार हन्ति हरतीति क्षितिभारघ्न त। नन्वेतावता कथनिश्शेषा नर्थनिवृत्तिर्लोकस्येत्यत्राह, भवरोगघ्नमिति, भवरोग ससाररोग हन्ति नाशयतीति भवरोगघ्न त। "मिषक्तम त्वा मिषजा शृणोमि" इति श्रुते ममास्त्वैवमित्यर्थ। तत्र हेतुमाह कैवल्यमिति, गुरूपसर्पणपुरस्सर महावाक्यश्रवणजनितेन ज्ञानेन अज्ञानतत्कार्यनिवृत्तौ निरतिशयानन्दावाप्तिरूप कैवल्यपदमित्यर्थ। "पूतात्मा परमात्मा च मुक्ताना परमा गति" इति व्यासवचनात्। अथापि अध्यारोपवशेन नवनीताहार, नवेन नूतनशरीरेण नीत प्रापित विषय जात आहारो यस्य स नवनीताहार, अविद्यावस्थाया विषयझमित्यर्थ। "अनश्नन्नयोऽभिचाकशीति" इति श्रुते अपवाददशायामनाहार अभोक्तार। "यस्य ब्रह्म च क्षत्र चोभे भवत ओदन" इति श्रुते भुवनाहार, भुवन नामरूपात्मक जगत् आहार चिन्मात्रतावशेष यस्य स तथोक्त त। तर्हि कीदृग्विध केन प्रकारेण मुमुक्षोपलभ्यत इत्याकाङ्क्षाया, निष्कल्मषबुद्धौ श्रुत्याचार्य प्रसादेनेत्याह, वैमल्यस्फुटचेतोवृत्ति विशेषाभासमिति। वमल्येन रागादिमलराहित्येन स्फुटा व्यक्ता या चेतोवृत्ति बुद्धि तस्या विशेषेण अपरोक्षतया आभासो यस्य स तथोक्त त। तर्हि ग्राह्यत्वेन जडत्वप्रसग इत्यत आह, अनाभासमिति "यस्यामत तस्य मत मत यस्य न वेद स। अविज्ञात विजानता विज्ञातमविजानता॥" इति श्रुते दृश्यत्वनिषेधात् विषयतया आभासो न विद्यते यस्यसोऽयमनाभास त। "न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मन। न विद्मो न विजानीम" इति श्रुते चक्षुरादीनामगोचरतया स्वतस्स्फुरत्तमित्यर्थ। अत एव शैवं, स्वार्थे तद्धितविधानात् शिव मङ्गल निरपद्रवमित्यर्थ। तत्र हेतु केवलशान्तमिति "साक्षी चेता केवलो निर्गुणश्च" इति श्रुते, केवलतया चिन्मात्रावशेषतया शान्तमुपशान्त सारभूतमित्यर्थ। यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन क पश्येत् तत् केन क जिघ्रेत् तत्केन क विजानीयादि" इति श्रुते मुक्तावस्थाया दर्शनादिक्रियाशून्यत्वात् केवलचिद्रूपत्वमिति भाव ॥ ३ ॥

केवलचिद्रूपत्वे कथ भक्तानुग्राहकत्वमिति चेत्, मैव चोद्य अस्याचिन्त्यशक्तित्वेन स्वेच्छावतारत्वमित्याह—गोपालमिति।

श्लो॥ गोपाल प्रभुलीलाविग्रहगोपालं कुलगोपाल
गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम्।
गोभिर्निगदितगोविन्दस्फुटनामान बहुनामान
गोधीगोचरदूर प्रणमत गोविन्द परमानन्द ॥ ४ ॥

श्रीगोविन्दाय नम ॥ गोपवेषेण गा पशून् पालयतीति गोपाल त। प्रभुलीला विग्रहगोपाल, कर्तुमकर्तुमन्यथाकर्तुं शक्तत्वात् प्रभु, स्वभावादेव लीला तया स्वेच्छाशक्त्या

परिगृहीत विग्रह तेन। गा वेदान् पशुश्च यज्ञादींश्च पालयतीति तथोक्त। **कुलगोपालं,** कौ, भूमौ लीयत इति कुलं शरीरं तच्च गाश्च इन्द्रियाणि च पालयतीति कुलगोपाल त। सुषुप्तिमूर्च्छादौ भ्रान्तिपरिहाराय प्राणेन शरीरादिरक्षकमित्यर्थ । **गोपीखेलनगोवर्धनधृतिलीलालालित गोपालमिति ।** गोपीभिस्सह खेलन विहरण तदर्थं वन प्राप्ते वृष्टिनिवारणाय गोवर्धनगिरे धृति धारणा सैव लीला अयत्नसाध्यत्वात् तया लीलया लालिता पालिता गोपाला येन स तथोक्त त। "आस्यजानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे" इत्यादिभि वेदै निगदित, गोविन्देतिस्फुट प्रसिद्ध नाम यस्य स गोभिर्निगदितगोविन्दस्फुटनामान। बहुनामान बहूनि असंख्यातानि नामानि यस्य स त **बहुनामानं**"। सर्वाण्येतानि परब्रह्मण नामेति पुराण वचनात् असंख्यातनामानमित्यर्थ । तर्हि नामरूपसद्भावात् असङ्गब्रह्महानिरित्यत्र आह **गोधीगोचरदूरमिति** "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुते गोगोचराच धीगोचराच दूरे निर्गुणे निष्कलपरमानन्दचिद्रूपे परमात्मनि शब्दप्रवृत्तिनिमित्तानां जातिगुणक्रिया दीनां असंभवाद्वाङ्मतिगम्यमित्यर्थ ॥ ४ ॥

ननु अवाङ्मतिगम्यत्वे "तं त्वौपनिषदं पुरुषं पृच्छामि" इति उपनिषद्वेद्यत्व कथमित्याशङ्क्य आत्मनि अविद्याध्यारोपिततद्धर्मनिरसनमुखेन कथंचित् प्रतिपादकत्वादित्यभिप्रायेण तथोक्तमित्याशयेनाह—**गोपीमण्डलेति ।**

श्लो ॥ गोपीमंडलगोष्ठीभेदं भेदावस्थमभेदाभं
शश्वद्गोखुरनिर्धूतोद्धतधूळीधूसरसौभाग्यम् ।
श्रद्धाभक्तिगृहीतानंदमचिन्त्यं चिन्तितसद्भावं
चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम् ॥ ५ ॥

श्रीहरिगोविन्दाय नम ॥ गोपीनां मण्डल समूह तेन सह गोष्ठीभेद क्रीडाविशेषो यस्य स तथोक्त त, रासक्रीडासक्तमित्यर्थ । अत एव **भेदावस्थं** भेदेनावतिष्ठत इति भेदावस्थ त "रूपं रूपं प्रतिरूपो बभूव" इति श्रुते अनेकोपाधिवशादनेकरूपमित्यर्थ । स्वतस्तु **अभेदाभमभेदेनाभान** यस्य स तथोक्त त। **शश्वद्गोखुरनिर्धूतोद्धतधूळीधूसरसौभाग्यं** इति शश्वत् अनवरत गवां खुरेण चरणेन निर्धूता निरावर्पिता उद्धता च या धूळि रज पटलिका तया धूसर ईषत्पाण्डुर तदेव सौभाग्य रमणीयत्वं यस्य स तथोक्त त। **श्रद्धाभक्तिगृहीतानंदमिति,** "श्रद्धत्स्व सौम्य" "श्रद्धयैव मनुते" "अद्रथाश्रद्धानश्च संशयात्मा विनश्यति" भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत " इति श्रुतिस्मृतिवचनात् श्रद्धाभक्तिभ्यां धृत्वित् गृहीतश्चेत् प्रत्यगात्मानन्द मुक्तानां निर्वाणसुखमित्यर्थ । तर्हि प्रागन्तेर जडत्वे प्रामाण्यासंभवात्, **अचिन्त्यमिति,** "अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" इतिभगवद्वचनात् अचिन्त्यं मनसोऽप्यविषयमित्यर्थ । मनसोऽप्यविषयश्चेत् नास्त्येव शशविषाणवदित्याशं-

क्याह—**चिन्तितसद्भावमिति** "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्मेति॥" "कोह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति" इति श्रुतेः चिन्तितो निश्चितः सद्भावः सत्ता यस्य सः तथोक्तः तं। चिन्तितसद्भावत्वादेव **चिन्तामणिमिति,** चिन्तामणिः चिन्तितं ददाति तं "आयुरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतान्नित्यं सर्वार्थान्प्रददन्हरिः॥" इति पुराणवचनात् वांछितार्थप्रदमित्यर्थः। "अणोरणीयान्महतो महीयान्" इति श्रुतेः अणिमानं सूक्ष्मात्सूक्ष्मं अतर्कितमित्यर्थः। गोविन्दाख्यं परमानन्दं उत्कृष्टमानन्दस्वरूपं प्रणमत प्रकर्षेण नमस्कारं कुरुतेत्यन्वयः॥ ५॥

"जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा" इति श्रुतेः अस्य जीवन्मुक्ततां दर्शयतिः **स्नानव्याकुलेति**

श्लो॥ **स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं**
**व्यादित्सन्तीरथदिग्वस्त्रा दातुमुपाकर्षन्तन्ताः।**
**निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तस्थं**
**सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम्॥ ६॥**

श्रीहरिगोविन्दाय नमः। स्नानार्थं जलक्रीडार्थं व्याकुलाः संभ्रान्ताः याः योषितः तासां वस्त्रमुपादाय स्वीकृत्य अगं वृक्षं उपारूढमारूढं अच्युतमित्यागमवचनात्। पुनः कीदृग्विधमित्याह **अथेति।** अथानन्तरं दिग्वस्त्राः दिगंबराः, अत एव वस्त्रं व्यादित्सन्तीः आदातुमिच्छन्तीः ताः योषितः उपसमीपे आकर्षन्तं स्वनिकटमानयन्तं। तर्हि स्त्रीलम्पटत्वादयमप्यसंपूर्णकाम इत्यत आह—**निर्धूतद्वयशोकविमोहमिति।** निर्धूताः नितरां कंपिताः द्वयशोकविमोहा येन सः तथोक्तः। तं। द्वयं रागद्वेषादिकं शोकश्च विषयालाभजनितं दुःखं, विमोह च शोकादिहेतुरज्ञानं एते सर्वे निर्धूताः येनेति स्वभावतश्चायं विषयलंपटो न भवतीत्याह—**बुद्धमिति।** प्रबुद्धं, अप्रबुद्धानामेव विषयपारवश्यं ननु प्रबुद्धस्येत्यर्थः "मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः" इति भगवद्वचनात् बुद्धेरप्यन्तस्थं तत्साक्षितया स्थितं सत्तामात्रशरीरं "सदेव सोम्येदमग्र आसीत्" इति श्रुतेः सन्मात्रविग्रहं प्रणमतेत्यन्वयः॥ ६॥

"परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगेयुगे॥"

इति भगवद्वचनात् लोकसंरक्षणार्थं यदुकुलेऽवतीर्णमतिप्रसन्नं परममङ्गलरूपं परमात्मानं प्रस्तौति **कान्तमिति—**

"कान्तं कारणकारणमादिमनादिं कालघनाभासं
कालिन्दीगतकालियशिरसि सुनृत्यन्तं मुहुरत्यन्तम् ।
कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं
कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥ ७ ॥

श्रीहरिगोविन्दाय नमः ॥ "आर्द्रेक्षुचापमवलंबितपुष्पबाणमारक्तनेत्रमपरोद्धृतशंखचक्रं । विन्यस्य वेणुमधरे सुनिनादयन्तं संमोहयन्तमिह पाशसृणी वहन्तं ॥" इति रहस्यागमवचनात् कान्तं कमनीयं अत्यन्तसुन्दरं—

"कदाचिदाद्यो ललितः पुरुषः कृष्णविग्रहः वंशनादविनोदेन करोति विवशं जगत्,"

"योऽयश्चकास्ति गगनार्णवरत्नमिन्दुः यो वा सुरासुरगुरुः पुरुषः पुराणः ।
यद्वाममर्धमिदमन्तकसूदकस्य देवि त्वमेव तदिति प्रतिपादयन्ति ॥"

इति वचनात् त्रैलोक्यसुन्दरावतारमित्यर्थः ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥"

इति श्रुतेः कारणकारण. जगत्कारणप्रकृतेरपि कारणमधिष्ठानभूतं, "ब्रह्म वा इदमग्र आसीत्" "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादिश्रुतिभ्य. आदिं जगदुपादानं, स्वयं चानादिं आदिः कारणं न विद्यते यस्य सः अनादिः त स्वतस्सिद्धमित्यर्थ. । उपासनसमये कालघनाभासं "कृष्णवर्णं कलौ युगे" इति वचनात्. नीलमेघवर्णमित्यर्थः । कालिन्दी यमुना तद्गतस्य कालियनागस्य शिरसि मुहुर्मुहुरत्यन्तमतिशयेन सुष्ठुनृत्यन्तं "कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्त." इति भगवद्वचनात्, कालं कालात्मक संहर्तारं, स्वय तु कालकलातीतं कालो भूतभविष्यद्वर्तमान लक्षण· कलाश्च निमेषकाष्ठनिवृत्तिप्रतिष्ठादयः । कालं कलाश्चातीत्य वर्तत इति, कालकलातीतं "अत्यतिष्ठद्दशाङ्गुलं. अतो ज्यायांश्च पूरुषः" अन्यत्र धर्मादन्यत्राधर्मादनन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥" "अन्यदेव तद्विदितादथो अविदितादधि" इति श्रुते. कार्यकारणगन्धरहितमिति भाव· । अथापि संसारावस्थायां **कलिताशेषं** "तस्य वाक्तन्तिः नामानि दामानि तस्येदं वाचा तन्त्या नामभिर्दामभिस्सर्वं सितमि"ति श्रुतेः. कलिताः बद्धा. नामरूपैर्योजिता. अशेषा जीवा येन सः तं. अभक्तानां भवहेतुमित्यर्थः, भक्तानां बन्धनिवर्तकमित्याह, **कलिदोषघ्नमिति** । कलौ काले ये दोषाः संभवन्ति विहिताकरणप्रतिषिद्धकरणलक्षणास्तान्दोषान् स्मरणमात्रेण हन्ति नाशयतीति कलिदोषघ्नः "कलावप्यतिदोषाढ्ये , विषया

दृष्टमानसः । कृत्वापि सकलं पापं गोविन्दं संस्मरञ्छुचिः ॥ अतिपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥ शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये । भवाश्रयणां वन्धानामुद्वेजनकरोहि सः ॥" इति पुराणवचनात्. कलिमलापहमित्यर्थः । सूर्यान्मना कालत्रयगतिहेतुमिति, कालत्रयस्य गतिहेतुः तं प्रणमतेत्यन्वयः ।

पुनरप्यशेषगीर्वाणवन्द्यतया वृन्दावनस्थं गोविन्दं प्रस्तौति-वृन्देति ॥७॥

श्लो॥ वृन्दावनभुवि वृन्दारकगणवृन्दाराधितवन्द्येहं
कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् ।
वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वम्
वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥ ८ ॥

श्रीहरिगोविन्दाय नमः ॥ वृन्दावनभुवि वृन्दावनप्रदेशे रासक्रीडायां प्रवृत्तायां वृन्दारकगणाः देवगणाः तेषां वृन्दं समूहः तेन आराधिताः पूजिताः वन्द्याः श्लाघनीयाः ईहाः चेष्टाः क्रीडा यस्य सः तथोक्तः तं । कुन्दस्य कुन्दवल्लीकुसुमस्य आभेवाभा कान्तिर्यस्य सः कुन्दाभश्चासौ अमलमन्दस्मेरः स एव सुधा पीयूषमिति कुन्दाभामलमन्दस्मेरसुधा तया आविर्भूतानन्दविशेषो यस्य सः तथोक्तः तं । सुहृदानन्दमिति । सुहृदां सुष्ठुचित्तानां आनन्दं मुक्तानां निर्वाणसुखमित्यर्थः । वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वंद्वं इति । वन्द्याश्च ते अशेषमुनयश्चेति वन्द्याशेषमहामुनयः नारदादयः तेषां मानसेन हृदयेन वन्द्यं ध्येयमानन्दप्रदं पदद्वंद्वं यस्य सः तथोक्तः तं । वन्द्याशेषगुणाधिमिति, वन्द्याश्च ते अशेषगुणाः शान्त्यादयश्चेति वन्द्याशेषगुणाः ते। आधीयन्ते आसमन्ताद्धीयन्ते पूर्यन्ते येनेति वन्द्याशेषगुणाब्धिः तं। प्रणमतेति लोकान्प्रति-पुरुषबहुवचनम् ॥ ८ ॥

यस्तु एतद्गोविन्दाष्टकमनुदिनं पठति भक्तसकामश्चेत् कामानां फलमाप्नोति निष्कामानां मोक्षो भवतीति स्तोत्रपाठकानां फलं कीर्तयति—

श्लो॥ गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यः
गोविन्दाच्युत माधवविष्णो गोकुलनायक कृष्णेति ।
गोविन्दांघ्रिसरोजध्यानसुधाजलधौतसमस्ताघो
गोविन्दं परमानन्दामृतमन्तस्थं स समभ्येति ॥ ९ ॥

यस्तु निरन्तरं गोविन्दार्पितचेतास्सन् एतद्गोविन्दाष्टकमधीते गोविन्दाच्युत माधव विष्णो गोकुलनायक कृष्णेतीत्येतानि नामानि कीर्तयन्, स गोविन्दांघ्रिसरोजध्यानसुधाजल-धौतसमस्ताघः, प्रक्षालिताशेषपापो भूत्वा गोविन्दं परमानन्दामृतमन्तस्थं [illegible]

सम्यक् निरपद्रवस्थानं आप्नोति "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति भगवद्-वचनात्—

"मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥"

इत्यर्जुनं प्रति भगवतोक्त, तस्माद्यस्य ब्रह्मभावना दृढा भवति सः ब्रह्मैव भवति । "तरति शोक-मात्मवित्" "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः॥ इति श्रीभगवत्पादीयकृतौ टीका समाप्ता॥ ओं तत्सत् ॥ हरिः ओं ॥

विप्राणां यतियोगिनां श्रुतिमतां वेदान्तिनां कर्मिणां
चण्डालादिषु यौवनश्च भजतां एकान्ततो वासिनां ।
हत्यापानसुवर्णचौर्य गुरुदारासंगमं कुर्वतां
सर्वेषामिदमेव नाम शरणं विष्णोः परं मङ्गलम् ॥

ओम्



इति श्रीमत् परमहंसपरिव्राजकाचार्यवर्य
श्रीमदानन्दज्ञानविरचितं
**गोविन्दाष्टकविवरणं**
सम्पूर्णम् ॥



श्री श्रीगणेशाय नमः ।

'श्रीमच्छङ्करभगवत्पादाचार्यप्रणीतम्

## ॥ मनीषापञ्चकम् ॥

श्रीबालगोपालेन्द्रमुनिविरचितमधुमञ्जरीटीकासहितम् ।



श्रीमद्यतीन्द्रनाथस्य जगन्नाथमुनिं गुरुम् ।
मनीषापञ्चकव्याख्या तन्यते मधुमञ्जरी ॥

तत्रादौ कथा निरूप्यते —

कदाचिच्छंकराचार्यः काशीं प्रति पुरीं ययौ ।
तस्य ज्ञानपरीक्षार्थं कश्चिद्देवस्समागतः ॥

चण्डालरूपी तं दृष्ट्वा गच्छ गच्छेति चाब्रवीत् ।
तथोक्तवन्तमाचार्यं स देवः पुनरब्रवीत् ॥

तथाहि —

अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात् ।
द्विजवर दूरीकर्तुं वांछसि किं ब्रूहि गच्छ गच्छेति ॥

अन्नमयेति । अस्यायमर्थः—अद्यते यज्ञैः तदन्नम् । अनुभवन्ति च भूतानि यत्तदन्नम् । अद भक्षणे इति धातोः अन्नशब्दस्योत्पन्नत्वात् । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति' इति श्रुतेश्च । तदन्नमयः तत्प्रधानः, तद्विकारो वा स्थूलदेहः अन्नमय इत्युच्यते । तस्मादन्नमयाच्चण्डालत्वजातिविशिष्टाद्विप्रत्वजातिविशिष्टाद्वा अन्नमय-मुक्तलक्षणं स्थूलदेहमन्यतरजातिविशिष्टं दूरीकर्तुं दूरतः परिहृत्य गन्तुं, हे द्विजवर 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः । वेदाध्यायी भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः ॥' इति स्मरणात् । द्विजानां द्विजन्मनां कर्मिणां मध्ये परः श्रेष्ठः अत्यन्त-कर्मिन् इत्यर्थः । गच्छ गच्छेति वचसा वांछसि-अभिलषसि । मनःपूर्वकत्वात् वाग्व्यापारस्य, 'यद्धि मनसा ध्यायति तद्वाचा वदति' 'वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्' इत्यादिश्रुतिभ्यो वाग्व्यापारस्य मनोव्यापारपूर्वकत्वं सिद्धम् । तदुक्तं भाष्यकृता श्रीविष्णुदिव्यसहस्रनामभाष्ये 'मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति ।' 'यद्धि मनसा ध्यायति तद्वाचा वदति' इति श्रुतिभ्यां स्मरणं ध्यानं च

नामकीर्तन एव अन्तर्भूतमिति । किं ब्रूहीति काकुस्वरेणाक्षेपः । पक्षान्तरमवलम्बयति–अथवेति । अथवा उत, चैतन्यमेव - चेतनमेव चैतन्यं न तु भिन्नः चेतनधर्मः । चेतनस्य अद्वितीयत्वेन व्यक्तिभेदस्यानङ्गीकारेण जातेरनङ्गीकारात् । तच्च चैतन्यं कूटस्थरूपं प्रतिबिंबरूपं अवच्छिन्नरूपमेव, नान्यत् । तादृशादेव चैतन्यात्पूर्वोक्तोभयजातिविशिष्ट-स्थूलदेहान्तर्वर्तिन आत्मनो दूरीकर्तुं वांछसि किं ब्रूहि पूर्ववदनुषज्यते ॥ १ ॥

एवं द्वेधा विकल्प्य द्वितीयविकल्पमादौ परिहरन्प्रतिबिम्बावच्छिन्न-चैतन्याभ्यां बिम्बानवच्छिन्नयोः चैतन्ययोर्दूरीकरणेच्छा न युज्यत इति क्रमेण सदृष्टान्तमाह —

किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चण्डालवाटीपयः-
पूरे वाऽन्तरमस्ति काञ्चनघटीमृत्कुम्भयोर्वाम्बरे ॥

**किं गङ्गेति** । गङ्गाम्बुनि - ब्रह्मावर्तक्षेत्रे काश्यादिपुण्यनगरप्रान्ते देवता-मनोहारिणी विष्णुपदोद्भवा भागीरथी जाह्नवीति इत्यादपरपर्यायनाम्नी विलसति गङ्गा । तस्याः सर्वपापक्षयकरं परंपरया मोक्षप्रापकं च यदम्बु - जलं, तस्मिन् । अंबरमणौ अम्बरे - नभसि मणिरिव दीप्यते अतिशयेन विराजमानत्वादम्बरमणिः सूर्यः, तस्मिन् बिम्बिते प्रतिबिम्बिते सति प्रतिच्छायया दृश्यमाने सति इति यावत् । तथैव चण्डालवाटीपयःपूरे । चण्डालाः श्वपचाः तेषां वाटी वीथी तस्या यत्पयःपूरं, चर्म-छेदनादिना दुर्गन्धं दुर्मलिनं जलं तस्मिन् बिम्बिते स (ति)त्यनुषज्यते । अन्तरं भेदः अस्ति किमित्याक्षेपः उभयत्रापि योज्यः । नान्तरं अनुभूयते विद्वदविद्वत्साम्येने-त्याक्षेपाभिप्रायः । एवं प्रतिबिम्बपक्षाङ्गीकारे भेदभ्रमस्यानवकाशं प्रदर्श्य अवच्छिन्न-पक्षेपि तं दर्शयति–**कांचनेति** । कांचनेन सुवर्णेन निर्मिता घटी कुम्भः कांचनघटी । मृदा प्रसिद्धया गन्धादिगुणवत्या निर्मितः कुंभः मृत्कुंभः । काञ्चनघटीमृत्कुंभयोः, ताभ्यामवच्छिन्नमाच्छादितं अम्बरं नभः यत्तस्मिन् अम्बरे अन्तरमस्ति किं इत्याक्षेपः । नास्त्येवेति तात्पर्यम् । अत्रोभयपक्षयोः प्रतिबिम्बयोरवच्छिन्नयोर्वा बिम्बेनानवच्छिन्नेन प्रतिबिम्बाभ्यां अवच्छिन्नाभ्यां बिम्बस्य अनवच्छिन्नस्य प्रतिबिम्बयोरवच्छिन्नयोर्वा परस्परं न कदाचिद्भेदगन्धस्य अवकाशः । व्यवहारभेदस्य उपाधिपरामर्शमन्तरेणा-विभाव्यमानत्वाद्विचाराभावजीवनस्य द्वैतमिथ्याभ्रमस्य विचारवद्भिः न वस्तुत्व-मवसीयते । किन्तु विचारविकलैरेवेत्यतो विचारवता भवता कथमुच्यते गच्छ गच्छेत्यभिप्रायः ॥

संप्रति दृष्टान्ते सोपाधिकयोः अन्योन्यमनुपाधिकेन उपाधिभ्यां (तस्य च) अनुपाधिकस्य च भेदाभावेऽपि उपाधिभूतयोरार्यावर्तादिपुण्यापुण्यक्षेत्रयोः अथ च तत्स्थगङ्गादिपुण्यापुण्यजलयोः भेदस्य विद्यमानत्वात् दार्ष्टान्तिकेऽपि विप्रत्वाविप्रत्वजातिविशिष्टयोः स्थूलदेहयोः तत्संस्कारतदभावविशिष्टयोः अन्तःकरणयोश्च भेदस्य अनुभूतत्वाद्विप्रत्वजातिविशिष्टतत्संस्कारयुक्तदेहतदन्तर्वत्यन्तःकरणाभ्यां तज्जातिरहिततत्संस्कारशून्यदेहतदन्तःकरणयोः दूरीकरणेच्छा युक्तैवेति वदता शंकित इव पुनरप्यध्यस्तप्रपंचविधुरे परमात्मनि विज्ञाते न किंचिदन्यद्विद्यत इति 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतिमवष्टभ्य सर्वात्मकत्वमात्मनोऽनुभवन्नुपाधिदृष्ट्यापि तद्दूरीकरणेच्छा न घटिष्यत इति प्रथमं विकल्पं परिहरति प्रातिलोम्येन —

प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ
विप्रोऽयं श्वपचोयमित्यपि महान्कोयं विभेदभ्रमः ।

मिथ्याध्यस्तसर्वप्रपञ्चवैलक्षण्येन अंचति प्रकाशते इति प्रत्यक् परमात्मा, स च, वस्तु अनध्यस्ताखण्डस्वभावत्वे सति कल्पितसमस्तवस्त्वधिष्ठानभूतः । तस्मिन् प्रत्यग्वस्तुनि । किंच निर्गतः प्रपंचरूपः तरङ्गः यस्मात् । सहजानन्दावबोधाम्बुधौ सहजः स्वभावः, आनन्दः सुखं, अवबोधः स्फुरणं, स्वभावभूतः न केनापि निर्वर्तितः । आनन्दश्चासावबोधश्चेति सहजानन्दावबोधः । स एव अम्बुधिरिव अम्बुधिरपर्यन्तत्वात् । तस्मिन् निस्तरंगसहजानन्दावबोधाम्बुधौ प्रत्यग्वस्तुनि अहमहमित्यनुभूयमाने सति इति शेषः । विप्रोऽयं द्विजातिरध्ययनशीलः, श्वपचोऽयं चण्डालः पशुघातकः इति, इयत्तापरिच्छेदशून्येऽयं विभेदभ्रमः द्वैतभ्रान्तिः कः कुतस्संभवति, न कुतोऽपीत्यर्थः । प्रत्यगेकरसस्य वस्तुनः निष्प्रपञ्चत्वोक्तिरिति भावः ॥

एवं केवलपारमार्थिकदृष्टिमवलम्ब्याक्षिप्तवन्तमाचार्यः, अयं देवः तारकोपदेष्टा पूर्णपुरुषः विशेषतो भवितुमर्हतीति निश्चित्य, यथोक्तमेवं तत्, एतादृशदृष्टिमत्सु भवादृशेषु न अस्माकं चण्डालत्वादिप्रतीतिरित्यभिप्रेत्य जाग्रदित्यादिभिः पंचभिः श्लोकैः स्वानुभवं निरूपयति । तत्र तावच्चतुर्षु वेदेषु यानि प्रसिद्धानि 'प्रज्ञानं ब्रह्म' 'अहं ब्रह्मास्मि,' 'तत्वमसि,' 'अयमात्मा ब्रह्म,' इत्येवंरूपाणि क्रमेण ऋग्यजुस्सामाथर्वणोपनिषद्गतानि महावाक्यानि अर्थतोऽनुक्रामति जाग्रदित्यादिना —

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृंभते

अस्यायमर्थः — यस्यापि कस्यचित्पुरुषविशेषस्य दृढप्रज्ञाऽस्ति चेत्स पुरुषः चण्डालोऽस्तु, द्विजो वा अस्तु, गुरुरित्येषा मम मनीषेत्यन्वयः । अत्र नैवाहं न च दृश्यवस्तु इति प्रज्ञायाः प्रकारः उक्तः । स्फुटतरेति संविदः सर्वप्रसिद्धिद्योतनार्थम् । जानामीत्यादिसंव्यवहारेषु प्रज्ञानस्य विजृम्भमाणत्वात्प्रज्ञानानुभवविहीनस्य लोष्टवत्तर-समाकृतेः शास्त्रार्थविचारे अनधिकाराच्च । अथवा स्फुटतरेति संविदोऽनावृतत्वमुच्यते । तस्याः सर्वाधिष्ठानतया सर्वप्रकाशकत्वेन आवरणाज्ञानस्यापि भासकत्वात् । 'तमेव भान्तमनुभाति सर्वम्' इत्यत्र श्रुतौ सर्वशब्देन आवरणस्यापि विवक्षितत्वात् । चैतन्यप्रसिद्धिद्योतनन्तु यच्छब्देन भवति । ननु यच्छब्देन चैतन्यस्य प्रसिद्धिः विवक्षिता चेत्तर्हि सा प्रसिद्धिः केत्याकाङ्क्षायामाह — जाग्रत्स्वप्नसुषुप्तिष्विति । इन्द्रियैरर्थोपलब्धिः जागरितम् । करणेषु उपसंहृतेषु जागरितसंस्कारजप्रत्ययः सविषयः स्वप्न । सर्वप्रकारकज्ञानोपसंहारो बुद्धेः कारणात्मनावस्थानं सुषुप्तिरित्येवंलक्षणका जाग्रदाद्यवस्थाः प्रसिद्धाः । तासु प्रसिद्धास्ववस्थासु संविदपि प्रसिद्धा ॥

नन्वेवं शास्त्रकृतपरिश्रमाणां संवित्प्रसिद्धिरस्तु । अतिरिक्तानां कथमिति चेदुच्यते — शब्दान्तरेण व्यवहृतत्वादिति । संवित्, प्रज्ञानं, बोधः, साक्षी, कूटस्थः, स्वयमात्मा इत्येवंप्रकारकैः शब्दैः व्यवहर्तुं असंस्कृता असमर्था अपि देशभाषादिसाङ्केतिकशब्दैः आत्मानं चैतन्यरूपं सर्वसंव्यवहारसाधकत्वेन व्यवहरन्ति । ज्ञापकं च तेषां वर्तते विजानामीत्यादि । तत्र विजानामीत्यादिव्यवहारो बोधमूलक इत्यनु मानादिना प्रमाणेनाविजानन्तोऽपि प्रसिद्धाः जानन्त्येव । इदानीं ज्ञानमस्ति व्यवहारो-ऽप्यस्ति, इदानीं तु ज्ञानं नास्ति व्यवहारोऽपि नास्तीति अन्वयव्यतिरेकज्ञानं विवेकिनां गुरुमुखात्सिद्धमपि अविवेकिनामनुभवत एव सिद्धम् । तद्यथा चन्द्रमा भगवत ईश्वरस्य हृदयं नेत्रमित्यादिरूपेण शिष्टैर्विज्ञातोऽपि मूढैर्ज्ञात एव स्वप्रकाशत्वेन शिशिरकरत्वेन मण्डलाद्याकारेण । एवमेव संवित्स्वतःसिद्धप्रकाशेत्यादिना लिंगसिद्धिकान्त्यादिविशेषानुभव-विवेकेनाविज्ञातापि संविद्व्यवहारसाधकत्वप्राधान्येन विज्ञाता भवति । तस्माद्विवेकविक-लानामप्यात्मसंवित्प्रसिद्धिरस्तीति बोध्य व्यवहारबलेनेत्यभिप्रेत्याह — उज्जृम्भत इति । उत् अधिकं यथा तथा जृम्भते उल्लसति व्यवहारहेतुतया प्रकाशत इत्यर्थः । यद्वा उदपि जृम्भत इति हेतुः । संवित्प्रसिद्धौ विद्वत्स्वविद्वत्सु च अहमिति सर्वदा भानात् । विद्वांसो हि वयं स्म इति जानन्ति अविद्वांसोऽपि तथा । किंतु प्रकारान्तरेण अत एव विद्वदविद्वद्भेद ॥

जाग्रदित्यारभ्य उज्जृम्भत इत्यनेन इयता ग्रन्थसन्दर्भेण 'प्रज्ञानं ब्रह्म' इति

महावाक्यस्य प्रज्ञानशब्दस्य अर्थः उक्तो भवति । अधुना ब्रह्मशब्दस्य अर्थमाह —

**या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।**

ब्रह्मा चतुर्मुखः आदिः येषां ते ब्रह्मादयः । पिपीलिका कीटविशेषः अन्ते येषां ते पिपीलिकान्ताः । ब्रह्मादयश्च पिपीलिकान्ताश्च ब्रह्मादिपिपीलिकान्ताः प्राणिनः । तेषां तनवः शरीराणि तासु । जगतः प्रपंचस्य साक्षिणी साक्षादव्यवधानेन द्रष्ट्रीति हेतोः प्रोता अनुगततया वर्तमाना या प्रसिद्धा संवित् (जाग्रदित्यादौ) व्याख्याता एव ॥

ब्रह्मशब्दस्य परिपूर्णत्वमर्थमुक्त्वा तेन प्रत्यगात्मन एकत्वमभिवदति —

**सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञापि यस्यास्ति चे-**
**च्चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥**

**सैवाहमिति ।** सैव-प्रसिद्धैव संवित्, अहं-अहंपदलक्षितः, अहं-प्रत्ययव्यवहारयोग्यः चिदात्मा । न च दृश्यवस्तु । दृशा व्याप्यत इति दृश्यं जगत्, तद्वस्तु, जगतो वस्तुत्वं कल्पितसंबन्धेन परमार्थवस्तुनि विद्यमानमुपचर्यते । जगतः कल्पितत्वेन वस्तुनो वस्तुत्वाभावेऽपि व्यवहारसत्यत्वाङ्गीकाराद्योग्यवस्तुत्वमस्तीत्यभिप्रायः । तदहं न भवामि, दृश्यवस्तुनो जडत्वात्परिच्छिन्नत्वाच्चेति दृढप्रज्ञा, दृढा संशयासंभावनादिभिः अबाधिता प्रज्ञा-मतिः, अज्ञानां देहादिप्रज्ञेव यस्य कस्यचिदपि पुरुषविशेषस्य श्रुत्याचार्यप्रसादमाहिम्ना अस्ति विद्यते चेत्-यदि, सतु पुरुषः चण्डालः पशुघातकः अस्तु-भवतु । अथवा द्विजः-जात्या विप्रः अस्तु-भवतु । गुरुः-सर्वज्ञो भगवानिति । 'ज्ञानी त्वात्मैव मे मतम्' इति स्मृतेः, 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इत्यादिश्रुतेश्च । एषा-एतादृशी मम मनीषा मदीया बुद्धिः, मम अनुभव इति यावत् ॥

इदमत्र कृत्यं-यस्तु गुम्पचौरेयः 'जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते' इति इयता ग्रन्थेनोक्तप्रज्ञानशब्दार्थं बुद्ध्वा एतस्यार्थस्य 'या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी' इति इयता ग्रन्थेनोक्तब्रह्मशब्दार्थैक्यं विज्ञाय एतद्विज्ञानस्य फलभूतं 'सैवाहं न च दृश्यवस्तु' इति इयता ग्रन्थेनोक्तवाक्यार्थानुभवं कुर्वन् स्थिरप्रज्ञो भूत्वा सदा समाहितमना वर्तेत, न तस्मिन्मम चण्डालत्वादिचिरंतनज्ञानं, किंतु ब्रह्मत्वमाविरेव 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुतेरिति । यद्यपि

सर्वमात्मेति विज्ञानात् श्वपचत्वादिप्रतीतिः न पारमार्थिकी। तथापि व्यवहारसांकर्यानापत्तये 'व्यवहारे भट्टनयः' इति न्यायाद्भानया स्वात्मनः सर्वात्मकत्वमनुभवक्रियया यावत्प्रारब्धं द्वैतव्यापारे यथापूर्वं यथाशास्त्रं विदुषा वर्तितव्यं इति च 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' इति स्मृतेराचार्यस्य अभिप्रायान्तरं विज्ञायते॥

ननु 'चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मम मनीषा' इति कथमभियुक्तैः वक्तुमुचितमिति चेन्न। आक्षेप्तुः देवस्य चण्डालवेषधारित्वादाक्षेपस्यापि 'विप्रोऽयं श्वपचोऽयमित्यपि महान्कोऽयं विभेदभ्रमः' इत्येवंरूपत्वादुक्तस्य चोक्त्यनुसारित्वात्। अथ च परमार्थवस्तुन उपनिषदेकसमधिगम्यत्वेन वेदाधिकारिणामेव तदनुभवः, तथापि यश्च कश्चन योगभ्रष्टो गहना कर्मणो गतिरिति वचनात् किंचित्कर्मशेषतया चण्डालदेहधार्यपि भवेन्नाम। तस्मिञ्जन्मनि न तस्याध्यापनापेक्षा, जन्ममात्रेणैव प्रारब्धकर्मणो नष्टत्वात्। भूतपूर्वगत्या ब्रह्मानुभवस्य सिद्धत्वात न तस्मिन् चण्डालत्वादिभ्रमः। 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति स्मृतेः। 'अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः' इत्यादिश्रुतेश्च॥ ३॥

इदानीं यजुर्वेदोपनिषद्गत 'अहं ब्रह्मास्मीति' महावाक्यार्थं अभिवर्णयति—

**ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं**
**सर्वं चैतदविद्यया त्रिगुणयाऽशेषं मया कल्पितम्।**
**इत्थं यस्य दृढा मतिस्सुखतरे नित्ये परे निर्मले**
**चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम॥ ४॥**

ब्रह्मैवाहमिति। यस्य मतिः सुखतरे नित्ये परे निर्मले दृढा स तु पुरुषः चण्डालोऽस्तु द्विजो वास्तु मम गुरुः इत्येषा मनीषेत्यन्वयः। इत्यादिविशेषणैः विशेषिते परे किमिति मतिर्दृढेत्याकाङ्क्षायामाह — ब्रह्मैवाहमित्यादि। अहं अहंशब्दप्रत्ययाभ्यामुपलक्षित आत्मा ब्रह्मैव परिपूर्णपरमात्मैव। किंचेदं सकलं समस्तं जगत् चेतनाचेतनात्मकं चिन्मात्रविस्तारितं चिन्मात्रे चिदेकरसे ब्रह्मणि विस्तारितं प्रपञ्चितम्। केन विस्तारितमित्याशंकायामाह—सर्वं चैतदिति। एतत् परिदृश्यमानं अशेषं ब्रह्मादीश्वरसहितं सर्वं जगत् त्रिगुणया त्रिगुणात्मिकया अविद्यया मया अध्यासेण कल्पितं रचितम्। इत्यमेवंप्रकारेण निश्चितेति शेषः। दृढप्रज्ञा दृढबुद्धिः, असंभावनादिभिः न बाधितेत्यर्थः।

यस्य ॥ कस्यचित्पुरुषवरस्यास्ति विद्यते चेत् इत्यनेन ज्ञाननिष्ठायाः दुर्लभत्वमुक्तम् । ॥ तु चण्डालोऽस्त्वित्यादि स्पष्टम् ॥ ४ ॥

अधुना सामशाखोपनिषद्गततत्त्वमसीति महावाक्यस्यार्थमाह —

शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरोः
नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना ।
भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके
प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ५ ॥

शश्वदिति । अखिलजगत्कारणं सत्तामात्रं वस्तु यन्निर्दिष्टं 'सदेव सोम्येदमग्र आसीत्' इत्यादिना, तदेव त्वं, न ततो भिन्नोऽसि । भेदस्य मिथ्यात्वात्, वस्तुनः एकरूपत्वादित्युपदेष्टुराचार्यस्य वाचा वचसा ब्रह्म परिपूर्णं वस्तु निरन्तरं स्वात्मनोऽभिन्नं निश्चित्य निश्चयेन ज्ञात्वा, अखिलं समस्तं जगत्, शश्वत् सर्वदा नश्वरमेव, न तु नित्यमिति, नित्यं सर्वदा विमृशता आलोचयता अत एव निर्व्याजशान्तात्मना निर्व्याजः निष्कपटः शांतः उपरतः आत्मा अन्तःकरणं यस्य तेन, भूतं अतीतं भावि आगामि च यत् दुष्कृतं दुःखानुभवकारणं पापं संविन्मये अहं ब्रह्मास्मीति ज्ञानस्वरूपे पावके अग्नौ प्रदहता प्रकर्षेण दहनं कृतवता येन पुरुषधौरेयेण ब्रह्मविन्मुख्येनेति यावत् । स्वं स्वकीयं वपुः शरीरं प्रारब्धाय अवश्यंभाविफलाय कर्मणे समर्पितं, प्रारब्धाधीनं कलेवरं कृतम् । तस्य जीविते मरणे वा न स्वयं बुद्धिर्विक्रियते इति भावः । स तु चण्डालोऽस्तु द्विजो वास्तु गुरुरित्येव तदनुषंगितव्यम् । शिष्टं स्पष्टार्थम् ॥ ५ ॥

संप्रति 'अयमात्मा ब्रह्म' इत्यथर्वणशाखोपनिषद्गतमहावाक्यस्य अर्थमाह—

या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भांति स्वतोऽचेतनाः ।
तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावय-
न्योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ६ ॥

या तिर्यगिति । तत्र तावदयमात्मा ब्रह्मेति वाक्यस्थब्रह्मशब्दार्थमाह —या प्रसिद्धा स्फूर्तिः स्फुरणं, चैतन्यमिति यावत् । तिर्यङ्नरदेवताभिः तिर्यग्भिः पशुभिः नरैः मनुष्यैः देवताभिः देवैश्च अहमिति अहंप्रत्ययव्यवहारयोग्यतया अन्तः विज्ञान-

मयशब्दवाच्याया बुद्धौ स्फुटं अनावरण यथा तथा गृह्यते अनुभूयते। किञ्च यद्भासा यस्याः स्फूर्तेः भासा प्रकाशेन हृदयाक्षदेहविषयाः हृदयं हृदि हृद्गोलके अयनं अस्येति हृदयं मनः। अक्षाणि इन्द्रियाणि ज्ञानकर्माख्यानि, देहः स्थूलः। विषया. शब्दाद्याः वचनाद्याश्च एते सर्वे स्वतः स्वभावतः अचेतनाः जडाः अपीति अपिशब्दो द्रष्टव्यः। भान्ति प्रकाशन्ते चेतना इवेत्यर्थः। पुनर्भास्यैः प्रकाश्यैः हृदयाक्षदेहविषयैः पिहितार्कमण्डलनिभा पिहितं आच्छादितं मेघै. यदर्कमण्डलं सूर्यमण्डलं तन्निभा तत्सदृशी स्फूर्ति व्याख्यातां सदा नित्यं योगी (निर्वृतमानसः) जितेन्द्रियः भावयन् अहमिति ध्यायन् इति (आत्मशब्दार्थो व्याख्यातः) या स्फूर्तिः तिर्यङ्नरदेवताभिः अहमित्यन्तःस्फुटं गृह्यत इति ब्रह्मणो रूपमुक्तम्। यद्भासा हृदयाक्षदेहविषया भांति स्वतोऽचेतनाः इत्यात्मनो रूपमुक्तम्। तां भास्यैः पिहितार्कमण्डलनिभा स्फूर्तिं सदा भावयन्निति हि ब्रह्मात्मनोरेकत्वमुक्तम्। यच्छब्दद्वयेन स्फूर्तिसमष्टिव्यष्ट्युपाधिविशिष्टं लक्षयित्वा तच्छब्देनैकान्वयेन तस्य योजितत्वात्। एवं निर्वृतमानसः मोक्षसुखयुक्तमानसो हि प्रसिद्धं यः स गुरुरित्यादि स्पष्टम्। अथवा हिशब्दो हेत्वर्थः। यस्मान्निर्वृतमानसः तस्माद्गुरुरिति ॥ ६ ॥

एवं महावाक्यचतुष्टयस्य जीवब्रह्मैक्यपरत्वमभिवर्ण्य तन्निष्ठस्य गुरुत्वमपि व्याख्याय अधुना फलितमाह —

यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृता
यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवित्
य. कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम। ७ ॥

यत्सौख्याम्बुधीति। यत प्रसिद्ध सिद्धस्तु सौख्यं सुखं अम्बुधिः समुद्र इव समुद्रः अपर्यन्तत्वात्। 'एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः। तस्य सौख्याम्बुधेर्लेशलेशतः सूक्ष्मात्सूक्ष्मतरालेशमात्रादित्यर्थः। इमे प्रसिद्धाः शक्रादयः इन्द्रादयः, ब्रह्मबृहस्पतिप्रभृतयः आदिशब्देनोच्यन्ते। निर्वृताः सुखाः आनन्दिनो जाता इत्यर्थः। यत्सुखं चित्ते अन्तःकरणे नितरां अत्यन्तं प्रशान्तं कलन चलनं यस्मिंस्तत्तया। तस्मिन्सति लब्ध्वा प्राप्य अपरोक्षतया अहमित्यनुभूयेत्यर्थ. । स मुनिः मननशीलः निर्वृतः मुक्तो भवतीत्यर्थः। यस्मिन्योगिप्रत्यक्षगम्ये प्रसिद्धे नित्यसुखाम्बुधौ सुखमेवाम्बुधिः सुखाम्बुधिः। नित्यश्चासौ सुखाम्बुधिश्चेति नित्यसुखाम्बुधिः। सुखस्य

विषयजनितस्य वृत्त्यधीनतया क्षणिकत्वेऽपि अविषयजनितस्य वृत्त्यधीनत्वाभावान्नित्यत्वं, अत एव अपरिच्छिन्नत्वं चेति विज्ञेयम्। तत्र तस्मिन्नित्यसुखाम्बुधौ गलिता भ्रष्टा विलीने-त्यर्थः। धीः बुद्धिः ब्रह्माकारवृत्तिरिति यावत्, यस्य सः तथा स ब्रह्मैव ब्रह्मस्वरूप एव, न ब्रह्मवित् ब्रह्म वेत्तीति ब्रह्मवित् स न भवति, वृत्तेरुपरतत्वात्। वृत्त्यधीनं हि वेदितृत्वं वेदितृत्वं च। य एतादृशः कश्चित् इत्यनेन ब्रह्मविन्निर्विकल्पसमाधिमान् लोके दुर्लभतर इति गम्यते। सर्वसिद्धो ब्रह्मविद्वरिष्ठः सुरेन्द्रवन्दितपदः, सुरा देवाः तेषां इन्द्रः स्वामी शतमखः तेन वन्दितं नमस्कृतं पदं पादः यस्य स तथा। नूनं सत्यं, अस्मिन्नर्थे न संशयः। एवं मनीषा मम इति स्पष्टम् ॥

मनीषापञ्चकस्यैषा कृता टीका मनोहरा।
बालगोपालेन्द्रनाम्ना मुनिना मधुमञ्जरी ॥

इति मनीषापञ्चकव्याख्या संपूर्णा ॥

---

॥ श्रीः ॥

श्रीलक्ष्मीनरसिंहशास्त्रिविरचितः

# ॥ जिज्ञासाधिकरणविचारः ॥



## अथातो ब्रह्मजिज्ञासा ।

इह खलु सकललोकहितैषी भगवान् बादरायणः मुमुक्षूणामनात्मभ्यो विवेकेन नित्यशुद्धबुद्धमुक्तप्रत्यगभिन्नाद्वितीयब्रह्मप्रतिपत्तये द्विनवत्युत्तरशताधिकरणात्मकं ब्रह्म-मीमांसाशास्त्रं रचयांबभूव । तस्य शास्त्रस्येदमाद्यमधिकरणम् । अधिकरणं नाम 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' इत्यभियुक्तोक्त्या विषयविशयपूर्वपक्षसिद्धान्तसङ्गतिरूपपञ्चावयवसमुदायात्मकम्॥

तत्र तावत् 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'

'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'तद्विजिज्ञासस्व' इत्यादिविचारविधायकवाक्यं सर्वमेव विषयः । विचारात्मकमिदं शास्त्रमारम्भणीयं न वेति विशयः । ब्रह्मविचारकर्तव्यताप्रतिपादकत्वात् अस्याधिकरणस्य ब्रह्मविचारशास्त्रसंगतिः । स्पष्टब्रह्मलिङ्गकानां 'ऐतदात्म्यमिदं सर्वं' इत्यादिवाक्यानां ब्रह्मणि समन्वयात् पादाध्यायसंगती । श्रोतव्येति श्रुत्या उत्थापितत्वात् उत्थाप्योत्थापकभावः श्रुतिसंगतिः । अस्य च प्रथमाधिकरणत्वान्नावान्तरसंगतिः ॥

पूर्वपक्षस्तु — इदं शास्त्रमनारम्भणीयं, विषयप्रयोजनशून्यत्वात् । तथाहि — न तावदस्य शास्त्रस्य ब्रह्म विषयः, प्रत्यगात्मन एव ब्रह्मतया तस्य चाहमित्यपरोक्षानुभवगोचरत्वेन असन्दिग्धत्वात्, असन्दिग्धस्य विषयत्वासंभवात् । नापि प्रयोजनं संभवति, अपरोक्षतयाप्यनुभूयमानेप्यात्मत्वे अनुवर्तमानस्य कर्तृत्वादिबन्धस्य शास्त्राधीनतज्ज्ञानमात्रेण निवृत्तिप्रत्याशाया अयुक्तत्वादिति ॥

सिद्धान्तस्तु — कर्तृत्वाद्युपप्लवरहितशुद्धब्रह्मण एव शास्त्रविषयत्वसंभवात् इदं शास्त्रमारम्भणीयम् । न चाहमनुभवे शुद्धब्रह्म विषयः, देहादितादात्म्यापन्नस्यैव विषयत्वात् । शास्त्रेण च कर्तृत्वाद्युपप्लवरहित शुद्धब्रह्मैव बोध्यत इति शास्त्राधीनशुद्धब्रह्मज्ञानात् कर्तृत्वादिरूपबन्धनिवृत्तिपूर्वकपरमानन्दावाप्तिरूपमोक्षलक्षणप्रयोजनस्यापि संभवात् इदं शास्त्रमारम्भणीयमेवेति ॥

अत्र चेयमनुपपत्तिः पदमादधाति । कर्तृत्वाद्युपप्लवरहितं ब्रह्मेत्यस्य कर्तृत्वाद्यभावविशिष्टं ब्रह्मेत्यर्थो वाच्यः । तथा सति कर्तृत्वाद्यभावविशिष्टस्यैव शास्त्रविषयत्वं पर्यवस्यति । तच्च न संभवति । कर्तृत्वाद्यभावस्य ब्रह्मातिरिक्तत्वे सत्यत्वे चाद्वैतहानेः, मिथ्यात्वे च तत्त्वावेदकशास्त्रगोचरत्वानुपपत्तेः । ब्रह्मस्वरूपत्वे च तस्याप्यहमनुभवगोचरत्वात् विषयत्वाभावस्तदवस्थः । न च कर्तृत्वाद्यभावत्वेन नाहमनुभवगोचरत्वमिति वाच्यम्, तद्रूपस्यापि पूर्वोक्तविकल्पग्रस्तत्वात् । तस्मात् पूर्वोक्तप्रणाल्या शास्त्रस्य विषयो न संभवतीति ॥

अत्रेदं समाधानम् — कर्तृत्वाद्युपप्लवरहितमित्यस्य कर्तृत्वाद्यभावोपलक्षितं ब्रह्मेत्यर्थः । अहमनुभवे च कर्तृत्वादिविशिष्टस्यैवात्मनो भानम् । कर्तृत्वाद्यभावोपलक्षितं न भातीति तस्य विषयत्वं संभवत्येव । महावाक्यजन्याखण्डाकारवृत्तौ च उपक्रमादिलिङ्गावधृततात्पर्यवशात् कर्तृत्वाद्यभावोपलक्षितस्य भानमिति तादृशवृत्तिवशात् अनर्थनिवृत्तिपूर्वकेष्टप्राप्तिलक्षणस्य मोक्षस्य संभवात् शास्त्रमिदमारम्भणीयमेव ॥

कर्तृत्वाद्यभावोपलक्षितं न भातीत्यस्य कोऽर्थः? कर्तृत्वाद्यभावः ब्रह्म च न भातीत्यर्थो वा, ब्रह्मैव न भातीति वा? नाद्यः । तथा सति अखण्डाकारवृत्तौ कर्तृत्वाद्यभावो ब्रह्म च भातीति वक्तव्यम् । एवं सति शास्त्रस्यातत्त्वावेदकत्वापत्तेः, मिथ्याभूतकर्तृत्वाद्यभावबोधकत्वात् । न द्वितीयः, अहमनुभवे प्रतीचो भानाङ्गीकारेण ब्रह्मणोऽभाने प्रत्यगभिन्नत्वानुपपत्तेः । तथा च शास्त्रस्य विषयासंभवस्तदवस्थः ॥

**अत्रेदं समाधानम्** — कर्तृत्वाद्यभावोपलक्षितं न भातीत्यस्य कर्तृत्वाद्यभावावच्छिन्नविषयता ब्रह्मणि नास्तीत्यर्थः । अहमनुभवे कर्तृत्वाद्यवच्छिन्नविषयताया एवात्मनि सत्त्वात् महावाक्यजन्यवृत्तौ कर्तृत्वाद्यभावावच्छिन्नैव विषयता आत्मनि वर्तत इति न काप्यनुपपत्तिः । कर्तृत्वाद्यभावस्तु महावाक्याधीननिर्विकल्पकपूर्वकालीनविशिष्टज्ञान एव भाति, न तु निर्विकल्पकवृत्ताविति न शास्त्रस्यातत्त्वावेदकत्वापत्तिः । शास्त्रतात्पर्यविषयीभूतनिर्विकल्पकवृत्तेः मिथ्याभूतपदार्थाविषयकत्वात् । न च विभिन्नज्ञानविषयस्य विषयतावच्छेदकत्वं न संभवतीति वाच्यम् । विभिन्नज्ञानविषयत्वयोरपि निरूप्यनिरूपकभावस्य प्राभाकरादिभिरङ्गीकृतत्वात्, अस्मन्मते विभिन्नज्ञानविषयस्य विषयतावच्छेदकत्वाङ्गीकारे किं बाधकम्? निर्विकल्पकज्ञानीयविषयतायां निर्विकल्पकपूर्वकालीनविशिष्टज्ञानीयप्रकारावच्छिन्नत्वस्य सर्वत्राङ्गीकारात् । कथमन्यथा सोयं देवदत्त इति वाक्यजन्यज्ञानस्य अयं देवदत्तो न वेति संशयनिवर्तकता । तात्पर्यबलादुक्तवाक्येन देवदत्तमात्रविषयकबोधोपपत्तेः देवदत्तव्यक्तिमात्रविषयकज्ञानस्य इदंत्वादिधर्मितावच्छेदककदेवदत्तादिभेदकोटिकसंशयनिवर्तकत्वायोगात् । अन्यथा देवदत्तलक्षणवाक्याधीनदेवदत्तमात्रविषयकज्ञानादपि तादृशसंशयनिवृत्त्यापत्तेः । अतो निर्विकल्पकज्ञानीयविषयतायामपि पूर्वज्ञानप्रकारस्यावच्छेदकत्वमङ्गीकार्यम् । तथा चाखण्डाकारवृत्त्यविषयस्यापि कर्तृत्वाभावादेः तदीयविषयतायामवच्छेदकत्वसंभवात् कर्तृत्वाद्यभावावच्छिन्नविषयताकत्वं महावाक्यजन्यबोधस्याक्षतमेवेति शास्त्रस्य विषयसंभवात् शास्त्रमारम्भणीयमेवेति ॥

पुनः पूर्वपक्षः—एवं सति महावाक्यजन्यज्ञानस्य मूलाज्ञाननिवर्तकत्वानुपपत्तेः मूलाज्ञानस्य शुद्धचिन्मात्रविषयकत्वात् महावाक्यजन्यज्ञानस्योक्तरीत्या कर्तृत्वाद्यभावावच्छिन्नचिन्निष्ठविषयताकत्वात् ज्ञानाज्ञानयोः समानविषयकत्वेनैव निवर्त्यनिवर्तकभावाङ्गीकारात् । समानविषयकत्वं च स्वनिरूपितविषयतानिरूपकत्वमेव, न तु स्वविषयविषयकत्वम् । तथा सति घटः सन् इति ज्ञानानामपि मूलाज्ञाननिवर्तकत्वापत्तेः । तथा चाखण्डाकारवृत्तेः किंचिदवच्छिन्नविषयताकतया मूलाज्ञानस्य निरवच्छिन्नविषयताकतया

उक्तसमानविषयकत्वं ज्ञानाज्ञानयोर्न संभवतीति मूलाज्ञाननिवृत्त्यनुपपत्तेः । तदनिवृत्तौ च दुःखादेर्नैव निवृत्तिरिति प्रयोजनासंभवतादवस्थ्यमिति शास्त्रमनारम्भणीयमेवेति ॥

अत्रेदं **समाधानम्** — मूलाज्ञानस्यापि कर्तृत्वाद्यभावावच्छिन्नविषयताकत्वाङ्गीकारान्न दोषः । एवं च मूलाज्ञानाखण्डाकारवृत्त्योरुभयोरपि एकविषयतानिरूपकत्वमक्षतमेवेति महावाक्यजन्याखण्डब्रह्मसाक्षात्कारेण मूलाज्ञाननिवृत्तौ तत्कार्यबन्धस्यापि अत्यन्तमुच्छेदात् बन्धोच्छेदलक्षणप्रयोजनस्य शुद्धब्रह्मरूपविषयस्य च संभवादिदं शास्त्रमारम्भणीयमेव । यदि च मूलाज्ञाननिष्ठनिरवच्छिन्नविषयताकत्वमेवाङ्गीकार्यमित्याग्रहः, तदा अखण्डब्रह्मसाक्षात्कारस्यापि ब्रह्मनिष्ठनिरवच्छिन्नविषयताकत्वाङ्गीकारान्न दोषः । न च लक्षणवाक्यज्ञानाधीनबोधादपि निवृत्त्यापत्तिरिति वाच्यम् । महावाक्याधीनेषु केषुचिदेव बोधेषु मूलाज्ञाननिवर्तकतावच्छेदकशक्तेरुपगमात् अन्यादृशेषु तत्समानविषयकेष्वपि तादृशशक्तेरनभ्युपगमात् अतिप्रसङ्गाभावात् विलक्षणशक्तिमत्वेनैव ज्ञानस्य अज्ञाननिवर्तकत्वाङ्गीकारात् । न च समानाकारकज्ञानेषु मध्ये केषुचिदेव तादृशी शक्तिः केषुचिन्नेति क्वापि न दृष्टमिति वाच्यम् । जलवान् ह्रद इत्याकारकेषु जलवान् वह्न्यभाववान् इत्याकारकनिश्चयसमानकालीनेष्वेव ह्रदो वह्निमान् इति भ्रमनिवृत्तिप्रयोजकशक्तेरुपगमात् तादृशनिश्चयासमानकालीनेषु जलवान् ह्रद इत्याकारकनिश्चयेषु तदनङ्गीकाराच्च उक्तरीतेरदृष्टचरत्वाभावादिति ॥



॥ श्रीलक्ष्मीनरसिंहाय नमः ॥

# ॥ गुहाधिकरणविचारः ॥

श्रीकाशीतिम्मण्णाचार्यविरचितः ।

---

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥

अत्र 'ऋतं पिबन्तौ' इति कठवल्लीवाक्ये ऋतपातृत्वेन प्रतिपाद्यमानौ किं बुद्धिजीवौ उत जीवपरमात्मानाविति संशये कर्मफलभोक्तृत्वरूपऋतपातृत्वलिङ्गात् एकस्य जीवत्वावश्यंभावे गुहाप्रविष्टत्वलिङ्गात् अन्यस्य बुद्धित्वग्रहणमेव युक्तम् । अपरिच्छिन्ने परमात्मनि परिच्छिन्नधर्मस्य गुहागतत्वस्यानुपपत्त्या तद्ग्रहणायोगात् इति प्राप्ते; जीवपरमात्मानावेवात्र प्रतिपाद्येते, यस्मादात्मानौ तौ । न तु बुद्धिजीवौ; अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादौ सजातीयस्य चेतनधर्मस्यैव प्रतीत्या, संख्यानिर्देशे सजातीयबोधस्यैव व्युत्पन्नतया चेतनत्वेन जीवसजातीयस्य परमेश्वरस्यैव ग्रहणसंभवात् । गुहाप्रविष्टत्वं तु न परमात्मपरिग्रहे बाधकम् । प्रत्युत साधकमेव । 'गुहाहितं गह्वरेष्ठं पुराणम्' 'यो वेद निहितं गुहायाम्' इत्यादौ तस्य तत्रैव प्रसिद्धत्वात् इति सिद्धान्तितं शारीरकभाष्ये ॥

तत्र यद्यपि बुद्धिजीवयोरपि परतन्त्रत्वभोगप्रयोजकत्वादिना साजात्यसद्भावात् न सजातीयग्रहणन्यायेन पूर्वपक्षनिरासो युक्तः । न च तन्निष्ठविशेष्यतानिरूपितसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति सामान्यतः तज्जातीयत्वेन कारणत्वं नोपेयते । किंतु अस्य गोर्द्वितीयोऽन्वेष्टव्यः इत्यादौ अश्वादिबोधवारणाय गोनिष्ठविषयतानिरूपितद्वितीयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति गोत्वेन, आत्मानावित्यादिवाक्यात् आत्मपदार्थोभयबोधवारणाय चेतननिष्ठविशेष्यतानिरूपितसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दं प्रति चेतनत्वेन विशिष्य कारणत्वमुपेयते । तथा च न पिषच्छुद्दात् बुद्धिजीवयोर्बोधसंभव इति वाच्यम् । एवं सति आत्मानात्मानौ जडजीवौ इत्यादिव्यवहारानुपपत्तेः । न च चेतनवाचकशब्दप्रयोज्यत्वं विशेष्यतारूपप्रत्यासत्तौ विशेषणं देयम् । आत्मानात्मानावित्यादौ अनात्मनिष्ठविशेष्यताया अनात्मपदप्रयोज्याया चेतनवाचकपदाप्रयोज्यत्वात् न व्यभिचार

इति वाच्यम् । आत्मा अनात्मा च पदार्थौ इत्यादौ व्यभिचारात् पदार्थपदस्य चेतनवाचकत्वाक्षतेः ॥

न च चेतनवाचकपदेन चेतनत्वव्याप्यधर्मावच्छिन्नवाचकत्वं विवक्षितम् । पदार्थादिपदस्यातथात्वान्न व्यभिचारः । पिबच्छब्दस्य च चेतनत्वव्याप्यपातृत्वावच्छिन्नवाचकतया तत्प्रयोज्यद्वित्वप्रकारकबोधविशेष्यत्वं न बुद्धेः संभवतीति वाच्यम् । एवमपि लक्षणया द्रव्यत्वाद्यवच्छिन्नतात्पर्येण प्रयुक्तात् द्विवचनान्तशब्दात् द्रव्यत्वेन आत्मानात्मबोधस्य सर्वानुभवसिद्धतया तत्र व्यभिचारस्य दुर्वारत्वात् ॥

तथापि कार्यतावच्छेदकप्रत्यासत्तिघटकतान्निष्ठविशेष्यतायां शक्त्यनधीनत्वस्य निवेशनीयत्वान्न दोषः । तथा हि—गङ्गायां मत्स्यघोषौ इत्यादौ युगपच्छक्तिलक्षणाभ्यां प्रवाहतीरयोः मत्स्यघोषान्वय इति मते देवदत्तौ स्त इत्यादौ शक्तिलक्षणाभ्यां देवदत्तघटयोः देवदत्तत्वघटत्वाभ्यां अन्वयबोधवारणाय शक्त्यनधीनचेतननिष्ठविशेष्यतानिरूपितसंख्यानिष्ठप्रकारतानिरूपित चेतनत्वव्याप्यधर्मावच्छिन्न वाचकपदप्रयोज्यविशेष्यतासंबन्धेन शाब्दत्वावच्छिन्नं प्रति चेतनत्वेन कारणत्वमित्यवश्यमुपगन्तव्यम् । तथापि प्रकृते पिबच्छब्देन शक्त्या पातृत्वेन जीवस्य लक्षणया बुद्धित्वेन बुद्धेः बोधो न संभवतीति भाष्याभिप्रायः ॥

न च केवललक्षणया कृतपानकर्तृकरणसाधारणतत्क्रियाकारकत्वेन बुद्धिजीवयोर्ग्रहणसंभवात् न पूर्वपक्षप्रतिक्षेपसंभव इति वाच्यम् । तथा सति बुद्धिजीवयोः वैलक्षण्यज्ञापनरूपस्य पूर्वपक्षफलस्यानुपपत्तेः बुद्धित्वपातृत्वाभ्यां तदुभयप्रतिपादनमन्तरा बुद्धिजीवौ विलक्षणाविति ग्रहानुपपत्तेः । तथा च पूर्वपक्षिणा युगपच्छक्तिद्वयमत मवलम्ब्य बुद्धिजीवयोः बुद्धित्वपातृत्वाभ्यां पिबच्छब्दबोध्यत्वं वर्णनीयम् । तत्र चोक्तव्युत्पत्तिविरोधो दुर्वार एव । न च तथापि नानार्थस्थले अस्य गावौ प्रशस्तौ इत्यत्र युगपच्छक्तिद्वयेन रश्मिवाचोर्बोधसंभवात तत्र व्यभिचार इति वाच्यम् । युगपच्छक्तिद्वयेन बोधानङ्गीकारात् । तदङ्गीकारेऽपि द्वितीयविशेष्यतायां शक्त्यन्तरानधीनत्वनिवेशेन व्यभिचारवारणसंभवात् ॥

न चाचेतनेऽपि दण्डादौ चेतनत्वभ्रमसत्वे कुलाले घटस्य कर्तारौ इति वाक्यात् शक्तिलक्षणाभ्यां कुलालदण्डयोः बोधसंभवात् तत्र व्यभिचार इति वाच्यम् । चेतनत्वप्रकारकप्रमायैव विशेष्यतासंबन्धेन तादृशबोधे हेतुत्वानङ्गीकारात् । न चाहं कर्तेत्यादौ आत्मबुद्ध्योः परस्पराध्यासाङ्गीकारेण चेतनत्वप्रकारकप्रमाया विशेष्यतया बुद्धावपि सत्वेन पिबच्छब्दात् आत्मबुद्ध्योर्बोधसंभव इति वाच्यम् । भ्रमत्वज्ञानानास्कन्दित-

चेतनत्वप्रकारकज्ञानस्यैव हेतुत्वात् सूत्रकृतोऽपि बुद्धौ चेतनत्वज्ञाने भ्रमत्वसमर्थन एव तात्पर्यात् । न च तथापि पिबच्छब्दस्य बुद्धिजीवोभयबोधकतायाः कदाप्यसंभवेन पूर्वपक्षस्यात्यन्तासंभवदुक्तिकतया तन्निरासकसूत्रप्रणयनानुपपत्तिरिति वाच्यम् । संख्यानिर्देशस्य सजातीयमात्रबोधकत्वस्य औत्सर्गिकत्वं मन्यमानेन पूर्वपक्षिणा गुहाप्रविष्टत्वरूपबाधकवशात् पिबच्छब्दस्य विजातीयबुद्धिबोधकत्वेन प्रत्यवस्थातुं शक्यत्वात् ॥

न चैवं उक्तकारणस्य व्यभिचारः, चेतनत्वव्याप्यधर्मावच्छिन्नवाचकपदे चेतनमात्रपरत्वाभाववत्त्वेनागृह्यमाणत्वात् । सिद्धान्तिना तु गुहाप्रविष्टत्वस्य परमात्मनि सावकाशताव्युत्पादनेन तस्य बाधकत्वं परिहरता पिबच्छब्दस्य निरुक्तौ गृह्यमाणत्वमुपपद्यत इति न कश्चिद्दोषः । न च बुद्धौ चेतनत्वभ्रमदशायां पिबच्छब्दाज्जायमानजीवबुध्युभयविषयकबोधीया या बुद्धिविशेष्यता सा तावच्चेतनमात्रपरत्वाभावेनागृह्यमाणपिबच्छब्दप्रयोज्या । तथा च तादृशभ्रमशून्यतादशायां चेतनमात्रपरत्वाभावेन गृह्यमाणपिबच्छब्दात् तादृशविशेष्यताशालिनः तत्समानाकारकबोधस्योत्पत्त्या व्यभिचार इति वाच्यम् । ज्ञानभेदेन विषयताभेदे मानाभावात् । तद्भेदेऽपि तादृशगृह्यमाणत्वविशिष्टपरस्य विशेष्यतांशे विशेषणविधया निवेशान्न दोषः । तदुपलक्षितपदप्रयोज्याया निरुक्तविशेष्यताधिकरणतायाः कार्यतावच्छेदकसंबन्धत्वं वाच्यमिति सुधीभिर्निपुणतरं विभावनीयम् ॥

---

॥ श्रीः ॥

# ॥ तत्त्वमस्यादिवाक्यार्थविरोधनिरासः ॥



यस्याः प्रसादलेशेन मूकोऽपि विबुधाग्रणीः ।
कमलासनकान्तां तां वाग्विभूत्यै नमाम्यहम् ॥

तत्र तावत् 'सदेव सोम्येदमग्र आसीत्', 'एकमेवाद्वितीयं ब्रह्म'
इत्यादिश्रुतिप्रतिपन्नमद्वैतं भेदग्राहिप्रत्यक्षादिविरोधादनुपपन्नमिति मन्यमानाः
केचिदभेदश्रुतीनामन्यथाऽर्थं कल्पयन्ति । तद्दर्शिनां वैदिकशिरोमणीनामपि
मा कदाचिदन्यथा प्रतीतिर्भूदिति तद्विरोधो निरस्यते ॥

तत्रेदमस्माद्भिन्नमिति प्रतीयमानो भेदः धर्मिस्वरूपो वा स्यात्
धर्मस्वरूपो वा ? । तत्र न तावत् धर्मिस्वरूपमात्रं भेदः; इदमस्माद्भिन्न-
मिति, घटः पटो न भवतीत्यादौ प्रकारतया भासमानस्य धर्मिस्वरूपत्वानुप-
पत्तेः । अयं घटः, पटाद्भिन्न इति प्रतीत्योरविशेषप्रसंगाच्च । विषयवैचित्र्य-
व्यतिरेकेण प्रतीतिवैचित्र्यस्य वक्तुमशक्यत्वात् ॥

ननु यथा कारणत्वादिकं स्वरूपमेवाङ्गीकर्तव्यं अनन्यथासिद्धत्वादे-
र्योग्यायोग्यघटितत्वेन अप्रत्यक्षत्वप्रसंगात्, क्वचिदपि प्रत्यक्षानंगीकारे अनुमा-
नस्याप्यप्रवृत्तेः । एवं च एक एव दण्डः कथंचिद्दण्डत्वेन भासते दण्ड
इति ; कथंचिदन्वयादिसान्निध्ये सति दण्डो घटकारणमिति । तत्र दण्ड
इति प्रतीतेः न प्रतियोगिधीसापेक्षत्वमन्वयाद्यपेक्षत्वं वा । दण्डः कारण-
मिति प्रतीतिस्तूभयापेक्षा दृष्टानुसारित्वात्कल्पनायाः विषयभेदाभावेऽपि
प्रतीतिवैचित्र्यं वाङ्गीकृतम । एवं प्रतियोग्यनुयोगिविशेषणविशेष्याधारा-
धेयावच्छेद्यावच्छेदकभावादयोऽपि धर्मिस्वरूपा एव विलक्षणप्रतीतिनियामका
इत्यङ्गीकृतम् । तथाऽत्रापि भेदस्य धर्मिस्वरूपरूपत्वेऽपि विलक्षणप्रतीति-
नियामकत्वं सप्रतियोगित्वं चाविरुद्धमिति चेत् —

अत्रोच्यते । कारणत्वादयोऽपि विचारणीयाः । तेषामपि स्वरूपरूपत्वे
कथं विलक्षणप्रतीतिनियामकत्वं ? न ह्येकमेव वस्तु सप्रतियोगिकं निष्प्रति-

योगित्वं च संभवति विरोधात् । घटप्रतीतौ कारणत्वादिसंदेहो न स्यात् अज्ञाता-ंशलेशाभावात् । न च समानप्रकारकनिश्चयस्य समानप्रकारकसंशयविरोधितया घट इति निश्चयात् घटो न वा इति संदेहो ना[मा]भूत् । घटः कारणं न वेति कारणत्वप्रकारकसंशये किं बाधकं भिन्नप्रकारकत्वादिति वाच्यम् ॥

घटत्वस्येव कारणत्वस्य घटधर्मस्यानङ्गीकारात्, घटत्वस्य घटापेक्षया भिन्नत्वात् धर्मिस्वरूपघटज्ञानेऽपि दोषवशाद्धटत्वाज्ञाने घटो नवेति संशयस्संभवति । कारणत्वं तु घटस्वरूपमेवेति कथं घटज्ञाने सति कारणत्वसंशयः ॥

न च कारणत्वस्य घटस्वरूपत्वेऽपि घट इति ज्ञाने घटस्य विशेष्यत्वेन तत्स्वरूपस्यापि कारणत्वस्याप्रकारकत्वात् न कारणत्वप्रकारकसंशयदुर्भिक्षमिति वाच्यम् ॥

घटे घटत्वमिति ज्ञाने सति कारणत्वसंशयो न स्यात् । उक्तज्ञाने घटस्य प्रकारतया तत्स्वरूपस्य कारणत्वस्यापि प्रकारत्वात् । न च घटस्य घटत्वेन रूपेण प्रकारत्वेऽपि कारणत्वेन रूपेण न प्रकारत्वमिति वाच्यम्, त्वया घटस्वरूपातिरिक्तकारणत्वानङ्गीकारात् ॥

ननु कारणत्वादेः धर्मिस्वरूपानतिरिक्तत्वेऽपि तत्तत्प्रतीतावन्वयव्यतिरेकसिद्धसामग्रीभेदोऽवश्यं वाच्यः । घटमात्रप्रत्यायकेन कारणत्वाप्रतीतेः । एवं च विषयभेदाभावेऽपि सामग्रीभेदादेव प्रतीतिभेदो भविष्यति । अन्वयव्यतिरेकादिसहकृतप्रत्यक्षे सति कारणमिति बुद्धिः प्रतियोगिज्ञानादिसहकृतप्रत्यक्षे सति भेदप्रतीतिरिति किमनुपपन्नम् । एवं विलक्षणप्रतीतिसिद्धौ तद्विषयत्वेनैकस्यापि कारणत्वादन्यत्वैर्विलक्षणव्यवहारविषयत्वमपि सिद्धमिति चेन्न—

विषयविशेषाभावेऽपि प्रतीतिवैशेष्याङ्गीकारे घटादेरप्यपलापापत्तेः । अयं घट इति प्रत्यक्षमेव हि घटे प्रमाणम् । तत्र घटज्ञानेनैव सकलघटव्यवहारोपपत्तौ घटाङ्गीकारवैयर्थ्यात् । न च घटानङ्गीकारे कथं जलाहरणाद्यर्थक्रियेति वाच्यम् । जलाहरणाद्यर्थक्रियायामपि प्रमाणमन्विष्यमाणं जलाहरणादिविज्ञानमेव वाच्यम् । तच्च विषयव्यतिरेकेणाप्युपपन्नमिति विज्ञानवादप्रसङ्गः ॥

ननु विषयमात्रापलापस्तावन्न शक्यः । घटानङ्गीकारे घटसन्निकर्षादेर्घटसामग्र्या अभावेन सामग्रीविशेषस्याप्यभावात्, अमानुरोधेन घटसन्निकर्षस्याहेतुत्वेऽपि विशिष्टज्ञानमात्रे विशेष्यसन्निकर्षस्यापेक्षणीयत्वात् । विज्ञानवादे विशेष्यस्याप्यभावेन तदसंभवात्। अतो विषयः कश्चिदङ्गीकर्तव्य । तत्र घटादौ धर्मिणि अवश्याङ्गीकार्ये कारणत्वादयो धर्मास्तत्स्वरूपा एवाङ्गीक्रियन्ते, नातिरिक्ताः, गौरवादिति चेत् ॥

न । एवं सति रूपादेरपि धर्मिस्वरूपापत्तिः नीलो घट इति प्रतीतेरपि घटमात्रविषयत्वेनोपपत्तेः । न च घटमात्रस्य नीलप्रतीतिविषयत्वे शुक्लघटस्यापि तत्प्रतीतिविषयत्वापत्ति घटविशेषस्यैव तत्प्रतीतिविषयत्वापत्तेः धर्मिस्वरूपस्य कारणत्वे सर्वस्यापि तथात्वापत्तेरित्यपि सुवचत्वात् ॥

ननु रूपघटयोरैक्ये त्वगिन्द्रियेण घटवद्रूपमपि गृह्येत, रूपवद्घटोऽपि वा न गृह्येतेति तयोर्भेदसिद्धिरिति चेत् ॥

नीलादिघटस्वरूपघटज्ञाने चक्षुरादिकारणविशेषापेक्षोपपत्तिः । यदि च कारणत्वादे धर्मिस्वरूपरूपत्वेऽपि तत्तत्स्वरूपग्रहे अन्वयव्यतिरेकसिद्ध कारणभेदविचार, तदा नीलादावपि तुल्यं नीलादिस्वरूपविशेषग्रहे चक्षुरादीन्द्रियापेक्षेति । एतेनैकत्वपरिमाणगुरुत्वद्रवत्वस्नेहत्वादयोऽपि धर्मिस्वरूपा व्याख्याता । किं च भूतले घटो नास्तीति प्रतीतिरेव घटस्य प्रतियोगित्वे अभावस्यानुयोगित्वे भूतलस्याधारत्वे अभावस्याधेयत्वे च प्रमाणम् तत्र विषयविशेषानङ्गीकारे कथं प्रतीतेस्तत्तद्विषयत्वावच्छेदेन वैलक्षण्यं भासेत सामग्र्या एकरूपत्वात् । सामग्रीभेदाभावे विषयवैलक्षण्याभावेऽपि च स्व एव प्रतीतिवैचित्र्याङ्गीकारे कथं न विज्ञानवादः ॥

एतेन मध्वमतसिद्धविशेषाः निरस्ता वेदितव्याः । तथा हि – स किं धर्मिस्वरूपरूप अतिरिक्तो वा ? नाद्य – स्वरूपसम्बन्धनिरासेन निरस्तत्वात् किं च सत्ता सती भेदो भिन्नः कालः सदास्ति देशस्सर्वत्रेत्याद्यभिन्ने भेद व्यवहारनिर्वाहकत्वेन नाङ्गीक्रियते । न च वस्तुस्वरूपरूपस्य तन्निर्वाहकत्व संभवति अविलक्षणत्वात । न द्वितीय – त्वया अतिरिक्तत्वानङ्गीकारा स्वभावविशेषस्यैवास्माभिर्विशेषशब्देनोक्तेरिति, अयं विशेषो वस्त्वभिन्न

स्वनिर्वाहकश्चेति नानवस्थेति च न्यायामृतोक्तेः । यदि च धर्मिस्वरूपत्वे स्वरूपसंबन्धदूषणग्रामादतिरिक्तत्वमङ्गीक्रियेत; तथाऽपि न निस्तारः । धर्मिस्वरूपातिरिक्तस्य विलक्षणव्यवहारनियामकत्वं विषयतया ताटस्थ्येन वा । नाद्यः, एकस्यावैलक्षण्येन विलक्षणव्यवहारानियामकत्वात् ॥

नियामकत्वे वा विशेषेणैव सर्वव्यवहारोपपत्तौ विषयान्तरापलापप्रसंगात् अनेकस्वविषयतया विलक्षणव्यवहारनियामकत्वाङ्गीकारे तत्तत्प्रतीतिबलात्तद्विषयमङ्गीकृत्य तस्य विशेष इति नामकरणं स्यात् । तथा च वस्तुमात्रमेव विशेषपदार्थः स्यात् । न द्वितीयः — ताटस्थ्येन प्रतीतिवैलक्षण्यनियामकत्वे विषयमात्रापलापप्रसंगात् ॥

न च यत्र विषयविशेषः प्रमाणसिद्धः तत्र तेनैव प्रतीतिवैलक्षण्यं । यत्र तु विषयव्यतिरेकेण प्रतीतिवैलक्षण्यं तत्र विशेषो नियामक इति न विषयापलाप इति वाच्यम् । प्रतीतिरेव हि विषयसद्भावे प्रमाणं, विषयमन्तरेणापि प्रतीतेर्निर्वाहे विशेषेण कृते विषयमात्रापलापो दुर्वारः । एतेन यत्र भेदमन्तरेण भेदकार्यं दृश्यते तत्रैव भेदप्रतिनिधिर्विशेषो भेदकार्यनियामकः कल्प्यते नान्यत्रेति नातिप्रसङ्गः । उक्तं च —

भेदे विहीने पर्यायशब्दान्तरनियामकः ।
विशेषो नाम कथितः सर्ववस्तुष्वशेषतः ॥

इति निरस्तम् ।

तटस्थेन विशेषेण विषयवैलक्षण्यमन्तरेणैव प्रतीतिवैलक्षण्यनिर्वाहे तदतिरिक्तविषयकल्पनायां मानाभावात् अभिन्नेऽपि भेदव्यवहारनियामकेन विशेषेणैव घटपटादावपि भेदव्यवहारोपपत्तौ तत्र भेदो न स्यात् । न च मुख्यभेदस्थले न प्रतिनिधिस्संभवति, सोमस्थल इव पूतीकानामिति वाच्यम् । सोमपूतीकसाधनत्वस्य वाचनिकत्वात् वचनबलाद्व्यवस्था युक्ता; विशेषस्य तु कल्प्यत्वाल्लाघवेन सर्वत्र भेदव्यवहारमात्रजनकत्वेन कल्पनोपपत्तौ क्वचिद्विशेषः क्वचिद्भेदः इति कल्पनायाः अयोगात् । किंच 'सत्ता सती' इत्यत्र सत्ताप्रकारकसत्ताविशेष्यकबोधस्यैकस्यामपि सत्तायां विशेषनिर्वाह्यत्वेन घट इत्यादावपि सत्ताजातिं विनैव सत्ताप्रकारकबोधस्य विशेषादेव संभवात्

-तत्सत्ताजातिरपि न सिध्येत् । न चानुगतव्यवहाराचत्सिद्धिः, अभिन्ने भे
-कार्यवदनेकेष्वनुगतव्यवहारस्यापि विशेषादेव संभवेन जातेरकल्पनात् ॥

वस्तुतस्तु प्रत्यक्षादिसिद्धवस्तुषु सर्वासामनुपपत्तीनामपि विद्य
श्रुतिसिद्धया शान्तेर्न विशेषकल्पनम् । यथा ऐन्द्रजालिकनिर्मितमायया असंभा
तावभासः एवमविद्ययाऽभिन्ने भेदकार्यं भिन्नेऽभेदकार्यं इत्यादिसर्वव्यवह
सामञ्जस्योपपत्तेः । तदुक्तं टीकायाम् — 'नहि मायायामसंभावनीयं ना
असंभावनीयावभासचतुरा हि सा' इति । अत एव मलज्ञानानन्दादिपद
अपर्यायत्वार्थं विशेषकल्पनं निरस्तम् । अविद्याया एव तत्सामर्थ्यकल्पन
पपत्तौ विशेषाकल्पनात् ॥

किं च सत्यादिपदानां वाच्यार्थभेदान्न पर्यायत्वं, व्यावर्त्यभेदाच्च
वैयर्थ्यमिति न तदर्थं विशेषोपयोगः । न च, व्यावृत्तीनां ब्रह्मातिरिक्त
अद्वैतहानिः, अनतिरेके तथैव पदान्तरवैयर्थ्यमिति वाच्यं; व्यावृत्तीनां ब्रह्मा
तिरेके अविद्यानिवृत्तिप्रतियोगिजडादीनां भेदेनापर्यायत्वोक्तेः, एकस्यानेक
प्रतियोगिकत्वस्य सामान्याभावादौ संप्रतिपत्तेः ॥

न चैकस्यानुयोगिनोऽनेकरूपत्वं विशेषनियम्यमिति वाच
अविषयीभूतस्य नियामकत्वे अविद्याया धर्मिस्वरूपस्य वा नियामकं
कल्पनयोपपत्तौ विशेषकल्पनस्य निर्मूलत्वात् । ब्रह्मण एव वा सर्वव्यवह
नियामकत्वं कल्प्यतां लाघवात् ॥

नवीनास्तु — सर्ववस्तूनां तावत्स्वतो भिन्नत्वमङ्गीकर्तव्यं अन्यान्
भावादिलक्षणभेदस्य स्वतोऽभिन्नेऽसंभवात् । न च घट एव घटान्योन्याभा
संभवति । न च घटो घटो नेति प्रतीतेरभावाच्च तत्र तदन्योन्याभावः, पटे
तथा प्रतीतेः तदन्योन्याभाव इति वाच्यं, पटस्य पटत्वरूपेण भिन्नत्वेन
प्रतीतौ अन्योन्याभावबुद्धेरसंभवात् । न च प्रतियोग्यवृत्त्यनुयोग्यवृत्तिध
प्रतीतावन्योन्याभावभानमिति वाच्यं, स्वरूपभेदाप्रतीतौ तादृशधर्मस्याप
प्रबोधात् सर्वथा समानाकारव्यक्तिद्वये धर्मधर्मिणोस्स्वरूपभेदाभाने अन्योन्य
भावबुद्धेर्दुष्परिहारत्वात् प्रतियोग्यवृत्तित्वस्य अनुयोग्यवृत्तित्वस्य धर्मद्वयभेद
धीनत्वात् ॥

तत्रापि स्वरूपभेदाभाने अन्योन्याभावादिभेदस्याभावात् । तस्मात् घटस्तावत् सदृशेभ्यो विसदृशेभ्यश्च स्वरूपत एव भिन्नः । तत्रेदमस्मात्पृथगिति प्रत्ययात् पृथक्त्वं इदमिदं नेति प्रत्ययादन्योन्याभाव इत्यादिधर्माः कल्प्यन्ते। सर्वतः स्वतो विलक्षणे धर्मिणि तत्तत्प्रमाणबलात्साधारणासाधारणाश्च सिध्यन्ति, नतु अविलक्षण एवाभिन्ने वस्तुनि ॥

एवं ब्रह्मस्वरूपमपि वस्तुत एव जडादिव्यावृत्तं चिद्रूपं सुखरूपं सद्रूपमित्यादि, तादृशस्वरूपं च सत्यादिपदैः बोध्यते ॥

तत्राभेदश्रुत्या ज्ञानत्वादिधर्मानङ्गीकारेऽपि ज्ञानादिस्वरूपं तावदङ्गीक्रियते । एवं च ज्ञानपदेन ज्ञानस्वरूपे बोधितेऽपि सुखपदव्यतिरेकेण सुखस्वरूपं कथं प्रतीयताम् । तस्मान्न पदान्तरवैयर्थ्यशङ्कावकाशः । एव च ज्ञानत्वादिधर्मैः कल्पितैः यथा वाच्यार्थभेदः एव जडादिप्रतियोगिकव्यावृत्तयो विकल्पिता एवावैयर्थ्यनिमित्तं भवन्तु । न च जडव्यावृत्तेः कल्पितत्वे ब्रह्मणो जडत्वप्रसङ्गः, व्यावृत्तिरूपधर्मस्य कल्पितत्वेऽपि व्यावृत्तधर्मिस्वरूपस्य व्यावृत्तित्वासंभवात् । एवं च यथा ज्ञानत्वादिधर्मनिवृत्तावपि ज्ञानस्वरूपत्वं नापैति, एवं धर्मभूतव्यावृत्तीनां निवृत्तावपि व्यावृत्तधर्मिस्वरूपं नापैति। नहि मुक्तौ सत्यादिस्वरूपभानव्यावृत्तिप्रकारबोधोऽस्ति, येन तदानीमपि व्यावृत्तयो धर्माः अङ्गीक्रियेरन् ॥

एवं च व्यावृत्तीनां ब्रह्मभिन्नत्वेऽपि नाद्वैतहानिः, अविद्यानिवृत्तौ तन्निवृत्तेः । न च वेदान्तानां अतत्त्वावेदकत्वप्रसंगः सर्वतः स्वरूपेण व्यावृत्तसत्यादिस्वरूपस्याबाधात् वाक्यार्थबोधसमये व्यावहारिकत्वज्ञानत्वमादायापर्यायत्ववत् तादृशव्यावृत्तिमादायवैयर्थ्योपपादनस्य सिद्धान्तेऽप्यविरुद्धत्वात् अर्थवादादिपदानां यथा सभूय प्राशस्त्यलक्षकत्वमेवं सत्यादिपदानामपि संभूयैव सत्यादिस्वरूपविशेषलक्षकत्वं प्रयुक्ताद्दीधितिन्यायादित्याहुः ॥

यदपि स्वप्रकाशचैतन्ये भासमाने निरतिशयानन्दस्य जीवब्रह्मैक्यस्य चेदानीमभासमानत्वात्तद्भेदकत्वेन विशेषकल्पनमिति । तदपि न ।

वास्तवभेदाभावेऽप्यविद्यया निरतिशयानन्दैक्यादेर्जडस्य कल्पितत्वेन तत्तदंशावरणोपपत्तेः ब्रह्मस्वरूपभूतमेव सद्यदिदानीं न भासते तत्सर्वमविद्या-

निबन्धनभेदाभिन्नं मदावृतमिति कल्प्यते। एतेन एकस्यैवावृतत्वमनावृतत्व विशेषानंगीकारे कथं संगच्छेतेति निरस्तम्। अविद्याकल्पितभेदेनैकत्वाभ (न तु) तस्माद्धर्मिस्वरूपरूपस्तदतिरिक्तो विशेषो निष्प्रमाणक इति। तस्मात्क त्वादयोऽपि धर्मिस्वरूपातिरिक्ता एव प्रमाणबलान्नीलादिवत्स्वीकर्तव्याः

न चैवमनन्तपदार्थस्वीकारापत्तिः, प्रमाणबलायातत्वस्यानन्त अदोषत्वात्। पृथिव्यादिव्यक्त्यादीनामप्यानन्त्याविशेषे कथंचिद्द्रव्यत्व क्रोडीकारकधर्मेणानुगमं कृत्वा नव द्रव्याणि चतुर्विंशतिर्गुणा इति परिभाषा णानन्त्यपरिहारे, पदार्थमात्रस्य धर्मधर्मिभेदेन द्वैविध्येन वा, अनेकवृत्तिधर्म स्वभावत्वविवक्षितत्वस्य वा, सामान्यत्वमङ्गीकृत्य प्रतियोगित्वादीन सामान्यान्तर्भावेन वा, द्रव्यादिपञ्चकभिन्नत्वेन गुणलक्षणमङ्गीकृत्य गुण भावेन वा, कथंचिदानन्त्यपरिहारस्य संभवात्, तस्माद्भेदस्यापि न धर्मिस्व पूर्वोक्तसंशयाद्यनुपपत्तेस्तुल्यत्वात। किं च धर्मिस्वरूपस्य भेदत्वे अभेद धर्मिस्वरूपमेव नातिरिक्तः मानाभावात्। तथा च घटस्वरूपमेव अभेदश्चेति भेदाभेदयोरेकत्र अविरोधप्रसंगः॥

न च घटः स्वापेक्षया अभेदः पटापेक्षया भेद इति नोक्तदोष वाच्यम्, घटस्वरूपस्यैव भेदत्वे स्वापेक्षयापि भेदप्रसंगः। स्वापेक्षया अ पटापेक्षयाप्यभेदत्वप्रसंगः। घटस्वरूपे विशेषानभ्युपगमात् कारणत्वादिप्रतिः निरस्तत्वात् घटः अभिन्नः इत्यादीनां पर्यायत्वप्रसंगाच्च। घटत्वव्यति प्रवृत्तिनिमित्तस्य तत्राभावात्। तस्माद्धर्मिस्वरूपभेदो न क्षोदक्षमः॥

अस्तु तर्हि, नीलादीनां धर्मः कश्चिद्भेद इति द्वितीयः पक्ष इति चे

न। स धर्मः किं भावरूपः अभावरूपो वा। भावरूपत्वेऽपि पृ विभागो वा द्वयमपि न संभवति गुणादेर्भेदाभावप्रसंगात्, विभागपक्षे सं योगेऽभेदो न स्यात्, पृथक्त्वस्य प्रतीतिबलात् गुणादिवृत्तित्वाङ्गीकारे पृथक्त भेदो न स्यात्। पृथक्त्वे पृथक्त्वान्तरानङ्गीकारात् अन्योन्याभावेनैव पृ व्यवहारोपपत्तौ अतिरिक्तपृथक्त्वानंगीकाराच्च। न च 'अन्यारादितरर्ते' सूत्रे अन्यशब्दस्यार्थपरत्वेनेदमस्मात्पृथगिमस्मादित्यादिवदिदमस्मादन्यदपि गापतिरिति वाच्यं, विभक्तव्यनुशासनस्य शब्दविशेषाधीनत्वस्य सर्वसंमत्वे

अन्यथा घटादप्रमेयमित्यपिप्रयोगापत्तेः प्रमेयादिशब्दानामपि पृथक्त्वार्थकत्वाँ। न चासाधारण्येन पृथक्त्वार्थकत्वमभिमतमिति वाच्यं, कथंचिदर्थविवक्षाया-मतिप्रसङ्गभयेनार्थविशेषविवक्षायां नञोभिन्नत्वेनापि शब्दविशेषणे बाधकाभावात् नञोऽप्यन्योन्यात्यन्ताभावसाधारणार्थकत्वेन असाधारण्येन तदर्थकत्वाभावाच्च॥

किञ्चिदिष्टसंग्रहार्थमर्थपरत्वव्याख्यानस्याभिमतमात्रसंग्राहकत्वाच्च। अत एव "व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणं" "अभिधानलक्षणाः कृत्तद्धितसमासाः" इत्यादिर्वैयाकरणानां प्रयोगशरणोद्घोषः। तस्माद्विभागः पृथक्त्वं वा न भेदः। अभावत्वेऽपि किमन्योन्याभावः अत्यन्ताभावो वा? नाद्यः, प्रतियोग्यनिरूपणात्। नहि घटादिकमेव प्रतियोगि वक्तुं शक्यं। घटो नास्ति घटो न भवतीत्युभयत्रापि घटस्यैव प्रतियोगित्वेनात्यन्तान्योन्याभावयोर्भेदो न स्यात्। उभयत्रापि घटत्वस्यैवावच्छेदकत्वेनावच्छेदकभेदस्याप्यभावाच्च॥

न च तद्भेदाभावेऽपि क्वचित्तादात्म्यारोपः क्वचित्संसर्गारोपः इत्यारोप्यसंबन्धभेदात्कृद इति वाच्यं; भूतले घटाभावो नास्ति भूतलं घटाभाववन्न भवतीत्यत्रोभयत्रापि संसर्गस्यैवारोप्यत्वेन भेदानापत्तेः। न चैकत्र संसर्गः संसर्गत्वेनारोप्यते इतरत्र तादात्म्यत्वेनेति भेद इति वाच्यम्। संसर्गत्वतादात्म्यत्वयोः भेदेन निर्वक्तुमशक्यत्वात्, संयोगी नेत्यत्र संयोगस्य तादात्म्यत्वात्। न च प्रतियोगितावच्छेदकमारोप्य यत्र निषेधः सोन्योन्याभावः, यत्र प्रतियोगितावच्छेदकसंबन्धमारोप्य निषेधः सोत्यन्ताभावः इति वाच्यं; संयोगी घटो नास्तीत्यत्र प्रतियोगितावच्छेदकसंबन्धस्यैवारोप्यत्वात् संयोगी नेत्यस्माद्भेदो न स्यात्।

न च संयोगी न भवतीत्यत्र संयोगत्वेन संयोगः प्रतियोगितावच्छेदको तादात्म्यत्वेनारोप्यते। इह संयोगो नास्तीत्यत्र तु संयोगत्वेन रूपेण अवच्छेदकत्वेऽपि तेन रूपेण नारोप्यत्वं, किं तु संसर्गमर्यादया स्वरूपविशेषणं भेद इति वाच्यं; तथाऽपि इदं संयोगीति तादात्म्यारोपे संयोगवतीति संसर्गारोपे चोभयत्रापि संयोगसमवायप्रतियोग्यधिकरणचतुष्टयव्यतिरेकेण विषयान्तरानवगमेनारोपभेदासंभवात् स्वरूपविशेषणविषयत्वेन भेदस्य स्वरूपविशेषणनिर्वचनेनैव निरस्तत्वात्॥

ननु मास्त्वारोपे विषयभेदः। तथापीदमिह नास्ति, इदमिदं न भवतीति प्रतीत्योर्वैलक्षण्यं तावदनुभूयते। तत्रात्यन्ताभाववदन्योन्याभावोऽपि विलक्षणोऽङ्गीकर्तव्यः। अन्यथाऽत्यन्ताभावोऽप्यतिरिक्तो न स्यात्। उक्तं च — 'संविदेव हि भगवती विषयसत्त्वोपगमेन शरणम्' इति। एतेन धर्मात्यन्ताभावेनैव धर्म्यन्योन्याभावबुद्ध्यन्यथासिद्धौ धर्मिणो नातिरिक्तोऽन्योन्याभावः। न च घटत्वं नास्तीत्यत्र घटत्वं प्रतियोगित्वं च प्रतियोगितावच्छेदकं भासते। घटो न भवतीत्यत्र घटत्वं प्रतियोगितावच्छेदकं घटश्च प्रतियोगी। ततश्चावच्छेदकात्यन्ताभावविषयकत्वे अन्योन्याभावबुद्धेः घटत्वं नास्तीत्येवमाकारः स्यात्, नतु घटो न भवतीत्येवमाकार इति वाच्यम्। एकस्यैवोभयप्रतियोगिकत्वेन धर्मात्यन्ताभावत्वभाने घटत्वं नास्तीत्याकारः स्यात्। धर्म्यन्योन्याभावत्वभाने च घटो न भवतीत्याकार इत्याकारवैचित्र्योपपत्तेः। एवमत्यन्ताभावत्वज्ञाने घटत्वत्वावच्छिन्नघटत्वज्ञानमुपयुज्यते; धर्म्यन्योन्याभावत्वज्ञाने च घटत्वावच्छिन्नघटज्ञानमुपयुज्यते इत्यादि सर्वं सामञ्जस्यमिति निरस्तम्॥

एवं सति घटान्योन्याभावेनैव घटत्वात्यन्ताभावबुद्ध्यन्यथासिद्धौ धर्मात्यन्ताभाव एव न स्यात्। सर्वत्र तद्वदन्योन्याभावेनैव तदत्यन्ताभावबुद्ध्यन्यथासिद्धेरत्यन्ताभाव एव लुप्येत। यदि च भविष्यति, ध्वस्तः, नास्तीत्यादिविलक्षणप्रतीतेर्विषयत्रयसिद्धिः, तर्हि नास्ति न भवतीति प्रतीत्योर्वैलक्षण्यादन्योन्याभावोऽपि पृथगेष्टव्यः। एवमन्योन्याभावसिद्धौ अखण्डोपाधिरन्योन्याभावत्वमेव तल्लक्षणं, प्रतीतिविशेषश्च तत्परिचायक इति न तल्लक्षणाक्षेपावकाशः॥

अत्यन्ताभावत्वप्रागभावत्वध्वंसत्वान्यप्येवमतिरिक्तानीति तस्मादन्योन्याभाव एव भेदोऽस्त्विति चेत् —

अत्रोच्यते — मूले वृक्षः कपिसंयोगवान् शाखायां नेत्यबाधितप्रतीतेस्संयोग्यन्योन्याभावोऽपि शाखावच्छेदेनाङ्गीकार्यः। न च तत्र संयोगात्यन्ताभाव एव विषयः बाधकाभावात्। संयोगो नास्ति संयोगवान् न भवतीति प्रतीत्योर्वैलक्षण्येन त्वदुक्तरीत्यैवान्यथासिद्धेर्वक्तुमयुक्तत्वात्॥

किं च संयोगवान्न भवतीति शब्दस्यान्योन्याभावार्थकस्याप्रमाण-

त्वापत्तिः । बाधकाभावाच्चेष्टापत्तेः कर्तुमशक्यत्वात् । संयोग्यन्योन्याभावेनैव संयोगात्यन्ताभावबुद्धयन्यथासिद्धौ तद्वति न संयोगात्यन्ताभाव इति वैपरीत्यस्य दुरुद्धरत्वात् । न च संयोगस्य व्याप्यवृत्तित्वान्न तद्वदन्योन्याभावस्तद्वतीति वाच्यं; मूले कपिसंयोगः शाखाया नेत्यबाधितानुभवात् । न च तत्रावयवस्यैव संयोगो नावयविन इति वाच्यम् । कपिसंयुक्त इत्यवयविसंयोगप्रत्यक्षस्य सर्वसिद्धत्वात् । अवयवसंयोगपक्षे मध्ये विश्रान्त्यसंभवेन परमाणुपर्यन्तधावने संयोगमात्रस्याप्यप्रत्यक्षत्वापत्तिः । कथंचिदाकाशसंयोगस्य घटादौ व्याप्यवृत्तित्वसंभवेऽपि घटपटादिपरस्परसंयोगस्याव्याप्यवृत्तित्वस्य प्रत्यक्षसिद्धस्यापह्नोतुमशक्यत्वात् ॥

किं च समवायसंबन्धेन पटस्याप्यव्याप्यवृत्तित्वमनुमाय दशावच्छेदेन न पटवन्तस्तन्तव इति प्रतीतेस्सर्वसिद्धत्वात् दशावच्छेदेन तद्वदन्योन्याभावस्तन्तुषु दुरपह्नवः ॥

वस्तुतस्तु चित्रं नानारूपसमूह एव नातिरिक्तमिति स्थितिः, नीलादीनामव्याप्यवृत्तित्वात् । अस्मिन्प्रदेशे नीलो घटः नास्मिन्प्रदेश इति नीलाद्यन्योन्याभावोऽप्यव्याप्यवृत्तिः । एवं स्थिते अन्योन्याभावस्य भेदे मूलशाखावच्छेदेन वृक्षस्य भिन्नत्वापत्तिः । न चेष्टापत्तिः । इमौ संयोगतदभावावच्छिन्नौ द्वाविति प्रत्ययापत्तेः । घटपटौ द्वावितिवत् मूलावच्छिन्नाच्छाखावच्छिन्नो भिन्नः पृथगित्यपि प्रत्ययापत्तेः, उक्तप्रत्ययानां भेदनिबन्धनत्वात् ॥

ननु प्रतियोगितावच्छेदकव्यधिकरणान्योन्याभावो भेदः न त्वन्योन्याभावमात्रम् । संयोग्यन्योन्याभावादयश्च प्रतियोगितावच्छेदकसमानाधिकरणा इति नोक्तदोष इति चेत् ।

न । संयोग्यन्योन्याभावस्यापि प्रतियोगितावच्छेदकासमानाधिकरणत्वात् । नहि मूलावच्छिन्नाग्रावच्छिन्नयोरन्योन्याभावपक्षे एकत्वं संभवति घटपटयोरन्योन्याभावस्य तद्विरोधित्वात् । प्रतियोगितावच्छेदकासमानाधिकरणत्वं हि प्रतियोगितावच्छेदकसमानाधिकरणभिन्नत्वं, प्रतियोगितावच्छेदकासामानाधिकरण्याभाववत्त्वं वा? उभयथापि शाखावच्छेदेन संयोग्यन्योन्या-

भावोऽपि तादृश इति भेदबुध्यापत्तिः । शाखावच्छेदेन संयोग्यन्योन्याभावोऽपि संयोगसमानाधिकरण इत्यबाधितप्रतीतेः । यदवच्छेदेन प्रतियोगित्वासमानाधिकरणं तदवच्छेदेन बुद्धेरावश्यकत्वात्, अन्यथा गुणादावपि संयोगिबुद्धिं जनयेत् ॥

न च प्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणावच्छेदेन अन्योन्याभावस्तादृशबुद्धिजनकः । गुणादौ संयोग्यन्योन्याभावस्तथा, न तु संयोगिनि वृक्षे शाखावच्छेदेनेत्युभयसामञ्जस्यमिति वाच्यम् ।

अन्योन्याभावपक्षे शाखावच्छिन्नस्य संयोगिभिन्नतया प्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणावच्छेदेन तथात्वस्य विवक्षितत्वे उक्तदोषानुद्धारात् । अन्योन्याभावातिरिक्तभेदपक्षे तु उक्तविवक्षया अतिप्रसंगनिरासः स्यात् । वृक्षस्य मूले यः कपिसंयोगी स एव शाखायां तदभाववानित्यबाधिताभेदप्रतीत्या केनापि प्रकारेण तद्भिन्नत्वाभावात् । प्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणवृत्तित्वं प्रतियोगितावच्छेदकासमानाधिकरणत्वमित्यस्य निर्दोषत्वात् । अन्योन्याभावभेदपक्षे शाखावच्छेदेन संयोग्यन्योन्याभावमादाय प्रागुक्तपृथक्त्वादिबुद्धिर्दुर्वारा । तस्मान्नान्योन्याभावो भेदः ॥

नात्यन्ताभावोऽपि भेद इति द्वितीयः पक्षः । तत्रापि धर्मात्यन्ताभावो धर्मिभेद इति वाच्यं, तदत्यन्ताभावस्य तद्भेदत्वे स्वस्मिन्नपि स्वात्यन्ताभावसत्त्वेन स्वभेदबुध्यापत्तेः । एवं संयोगात्यन्ताभावस्य शाखावच्छेदेन वृक्षे सत्त्वात् तद्भेदबुध्यापत्तिरित्याद्यन्योन्याभावपक्षोक्तदोषानतिवृत्तिः । तस्मादत्यन्ताभावोऽपि न भेदः ॥

नन्वस्तु इदमस्माद्भिन्नमित्यबाधितप्रतीत्या भेदः पदार्थान्तरमेव वस्त्वन्तर्भावासंभवात् । तथाहि—न द्रव्यगुणकर्माणि, गुणादावपि सत्वात् । नापि सामान्यं सप्रतियोगिकत्वात्सामान्यादावपि, सत्वात् । नापि विशेषसमवायौ तयोरपि वृत्तेः, अभावसामानाधिकरण्याच्च । नाप्यभावः; तत्रापि स न प्रागभावप्रध्वंसौ आकाशादेर्भेदाभावप्रसंगात् । नात्यन्तान्योन्याभावौ उक्तदोषात् । अत एव न स्वरूपमपि । अतः पदार्थान्तरमेवेति चेत् ॥

अत्रोच्यते—स किं भेदः यत्र भेदबुद्धिं जनयति तत्र संबद्धो वा भेदबुद्धिं जनयति उतासंबद्धो वा ? आद्ये (संबन्धोऽपि) संबद्धोऽपि नियामकः

असम्बद्धो वा ? आद्ये सोऽपि, संबन्धः सबद्ध एव नियामक इति संबन्धानवस्था। द्वितीये प्रतियोगिन्यपि भेदबुद्धिं जनयेत् असंबन्धाविशेषात् ॥

स्वरूपसंबन्धस्य नियामकत्वान्नानवस्थातिप्रसंगाविति चेत्; न, स्वरूपसंबन्धस्य निर्वक्तुमशक्यत्वात्। संबन्धान्तरमन्तरा विशिष्टधीजनकत्वं स्वरूपसंबन्धत्वमिति चेत्, न। विशिष्टप्रत्ययत्वं विशेषणविशेष्यभावविषयप्रत्ययत्वं स च स्वरूपसंबन्ध एवेत्यात्माश्रयात्। संबन्धांतरमंतरेत्यत्र संबन्धांतरासहकृतत्वे सति विशिष्टधीजनकत्वं वा संबंधांतरभिन्नत्वे सति विशिष्टधीजनकत्वं वा ? नाद्यः; दण्डीत्यत्र विशेषणविशेष्यभावे अव्याप्तिः, तत्र संयोगस्यापि जनकत्वात्। न द्वितीयः; संयुक्तो घट इत्यत्र संयोगस्य विशेषणत्वात्तत्स्वरूपसंबन्धे अव्याप्तेः। एवं पटसमवायवतस्तंतव इत्यत्र समवायस्य विशेषणत्वात्तत्राव्याप्तिः, उभयत्र संबन्धांतरभिन्नत्वाभावात् ॥

ननु तत्तद्वस्तुस्वरूपमेव तत्तद्विलक्षणप्रतीतिनियामकमित्ययमेव स्वरूपसंबन्धशब्दार्थ इति चेत्; न। एकस्य वस्तुस्वरूपस्याप्यनेकविलक्षणप्रतीतिनियामकत्वस्य वक्तुमशक्यत्वात्। एकस्य विलक्षणानेकप्रत्ययनियामकत्वे विषयैक्यापत्तेः, प्रत्ययमात्रपरिशेषापत्तेश्च ॥

नन्वस्तु प्रतीतिबलात् संबन्धस्यापि संबन्धान्तरं भेदस्यापि भेदान्तरम्। नचैवमनवस्था प्रामाणिकत्वात्। प्रतीत्यनुपपत्तिश्च नास्ति, संबन्धादेर्ज्ञानमन्तरेणापि भेदज्ञानस्वीकारादिति चेत्। अस्तु तावद्विशिष्य निर्वक्तुमशक्यानन्तपदार्थस्वीकारो दुष्कृतपरिपाकलब्धाद्वैतप्रद्वेषमात्रात् ॥

तथापि भेदप्रतीतिः कथमुपपादनीया ? भिन्नत्वेन प्रतीतप्रतियोगिको वा भेदः प्रतीयते, स्वरूपमात्रभिन्नप्रतियोगिको वा ? नाद्यः, अन्योन्याश्रयात्। न द्वितीयः; तत्र भेदः स्वरूपेण वर्तते अत्र नेत्यत्र प्रमाणाभावात्। यत्र भेदप्रत्ययस्तत्र वर्तत इति चेत्; घटशरावेषु चन्द्रभेदप्रतीतेस्तत्रापि तत्सत्त्वापत्तेः। न च तत्रौपाधिको भेदप्रत्ययो न वास्तवः, उपाधिनिवृत्तौ तन्निवृत्तिदर्शनात्। घटादौ तु न तथा उपाधेरभावादिति वाच्यम्। घटादावप्यविद्यारूपोपाधेस्सत्त्वात्। एकस्मिन्नेव ब्रह्मणि अविद्यावशात् विविधनानाप्रपञ्चभेदव्यवहार इत्यङ्गीकारात्। न हि वयं भेदमेव नोपलभामः; किंतु तस्य सत्यत्वं। घटादि-

-वच्छेदस्यापि चन्द्रभेदवदङ्गीकारात्। तथा च श्रुतिः—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्।' इत्यादि। इवशब्देन मिथ्यात्वं सूचयति श्रुतिः॥

ननु भेदग्राहिप्रत्यक्षस्याभेदग्राहिप्रत्यक्षश्रुत्या कथं बाधः, विनिगमकाभावात्। वैपरीत्यस्यापि सुवचत्वात् इति चेत्,—उपक्रमादिभिः गृहीततात्पर्यस्य वेदस्य स्वार्थेऽप्रामाण्यस्य क्वाप्यदृष्टचरत्वात् बाधो न कल्प्यते। दृष्टव्यभिचारित्वात् प्रत्यक्षस्यैव तेन बाधः कल्प्यत इति विनिगमकसत्त्वात्॥

ननु वर्णपदादिप्रत्यक्षस्य शब्दप्रमाणोपजीवित्वादुपजीव्यबाधो न युक्त इति चेत्; न। वाक्यार्थे ब्रह्मणि प्रत्यक्षस्याप्यनुपजीव्यत्वात्। वर्णपदादिप्रमात्वेन शाब्दं प्रत्यहेतुत्वाच्च। वर्णपदादिभ्रमेणापि शाब्दबोधदर्शनात्। अश्वमानयेत्युक्ते अश्वमानयेति श्रुतवतोऽतात्पर्यविषयीभूतस्याश्वानयनस्यापि प्रतीतेः। अश्वमानयेत्युच्चार्ये करणापाटवादश्वमानयेत्युच्चारिते इन्द्रियापाटवादश्वमानयेत्यनेनोक्तमिति भ्राम्यतस्तात्पर्यविषयाश्वानयनप्रमित्युत्पत्तेश्च। अतः शाब्दज्ञानेन प्रत्यक्षस्योपजीव्यत्वेऽपि तत्प्रमात्वस्यानुपजीव्यत्वात्तद्बाधेऽपि नोपजीव्यबाधः। अन्यथा स्थाणुर्न वेति संशयानन्तरं स्थाणुरेवेति निश्चयेन विशेषणज्ञानत्वेन संशयस्योपजीव्यत्वात् कोट्यन्तरबाधकत्वं [न] स्यात्। यदि च स्थाणुत्वांशे तदुपजीव्यत्वेऽपि कोट्यन्तरे तदनुपजीव्यत्वाद्बाधकत्वं, तथा प्रकृतेऽपि तुल्यम्॥

एवं 'इदं रजतम्' इति ज्ञानस्यापि 'नेदं रजतम्' इति ज्ञानेन प्रतियोगिज्ञानत्वेनापेक्षणात् बाधो न स्यात्। यदि तत्प्रामाण्यस्यानुपजीव्यत्वात्तद्बाधकत्वं तथा प्रकृतेऽपि तुल्यम्। न च जनकज्ञानप्रामाण्यं जन्यज्ञानप्रामाण्योपयोगि; व्यभिचारिलिंगजन्याया अप्यनुमितेर्विषयाबाधेन प्रमात्वदर्शनात्। प्रतिबिम्बेन बिम्बप्रमानुमितेश्च। तस्मान्नोपजीव्यतया प्रत्यक्षस्य श्रुतिबाधकत्वम्॥

यत्तु असत्यात्सत्योत्पत्तिर्न संभवतीति कथमसत्याद्वेदात्सत्यब्रह्मज्ञानोत्पत्तिरिति; अत्र वदामः—किमसत्यादित्यनुपाख्यात् व्यावहारिकात् ब्रह्मभिन्नाद्ब्रह्मज्ञानबाध्यात् अपारमार्थिकाद्वा सत्यस्य पारमार्थि-

कस्योत्पत्तिर्न संभवतीत्यर्थः ? किं वा अपारमार्थिकात् पारमार्थिकविषय-ज्ञानं न संभवतीति। तत्राद्ये अनुपाख्यादित्यनुक्तोपालंभः, प्रपञ्चस्यानुपाख्यत्वानङ्गीकारात्। व्यावहारिकादिपक्षचतुष्टये सिद्धसाधनं, उत्पन्नस्य ब्रह्मव्यतिरिक्तमात्रस्य पारमार्थिकत्वानङ्गीकारात्। न द्वितीयः। जनक-पारमार्थिकत्वस्य जन्यज्ञानविषयपारमार्थिकत्वे अप्रयोजकत्वम्। यथा व्यावहारिकप्रमाणाबाध्याच्चक्षुरादेर्जायमानं शुक्तिरजतज्ञानं व्यावहारिक-प्रमाणबाध्यविषयकं, तथा ब्रह्मज्ञानबाध्यजन्यस्य ज्ञानस्य तदबाध्यविषयकत्वे विरोधगन्धाभावात्। अन्यथा नित्यजन्यस्य कथमनित्यविषयकत्वं, अनित्य-जन्यस्य कथं नित्यविषयकत्वं, गुणस्य कथं द्रव्यविषयकत्वं, अनित्यज्ञानस्य कथ नित्यविषयत्वमित्यादीन्यपि दूषणानि प्रसज्येरन्। लोकसिद्धसामग्री-मर्यादया जायमानज्ञानस्य विषयबाधाभावे प्रामाण्यमितीह स्थितिः। नहि वेदान्तजन्यस्याद्वितीयात्मज्ञानस्य विषये बाधकं प्रमाणं पश्यामः। यदि तत्संभवति तर्हि तदेव वाच्यं, यदि न संभवति तदा कथमसत्यात्सत्यो-त्पत्तिरिति निरर्थकं वचः।

यत्तु—शुक्तिरजतज्ञानस्यापि विषयः पारमार्थिक एव पुरोवर्ति-रजतत्वतत्समवायानामबाध्यत्वादिति; तन्न। रजतत्वे पुरोवर्तिनिरूपितविशे-षणत्वस्य पुरोवर्तिनि रजतत्वनिरूपितविशेष्यत्वस्य चापारमार्थिकत्वात्। न च विशेषणविशेष्यभावस्य तत्स्वरूपानतिरेकात्तत्स्वरूपस्य च पारमार्थिकत्वात्तेषामिति वाच्यम्; तथा सति भ्रमादिविभागो न स्यात्। भ्रमे भासमानानां सर्वेषां याथार्थ्ये कथं भ्रमत्वं, कथं वा बाधः?

न च व्यधिकरणप्रकारकत्वतदभावाभ्यां वैलक्षण्यं, वैयधिकरण्य-स्यापि स्वरूपमात्रपर्यवसायित्वेन अविशेषकत्वात्। तदभाववति तत्प्रकारकत्वं हि तत्तदभावः अधिकरणं चेति द्वयस्वरूपमेव आधाराधेयभावः। ततश्च सत्य-रजतेऽपि रजतज्ञानं भ्रमः स्यात्, रजतरजतत्वाभावयोस्स्वत्वेनाधाराधेयत्व-संभवात्। न च रजतत्वाभावरजतयोराधाराधेयभावः परस्परनिरूपितः शश-विषाणकल्प इति वाच्यम्। तर्हि रजते नेदं रजतमिति ज्ञानस्यासत्यविषयत्वं त्वयैवाङ्गीकृतम्। एतेन सर्वे भ्रमा व्याख्याताः। वस्तुतस्तु ख्यातिबाधा-न्यथानुपपत्त्या अनिर्वचनीयं रजतं तत्रोत्पद्यत इति अवश्यमङ्गीकर्तव्यमिति-शुक्तौ रजतज्ञानविषयस्य पारमार्थिकत्वमतिरिक्तं वचः॥

यत्तु प्रतिबिम्बादेरसत्यस्य सत्यबिम्बज्ञानजनकत्वदर्शनात् असत्या-दपि सत्योत्पत्तिरुपपन्ना इत्यत्र दूषणं — तत्रापि प्रतिबिम्बस्य सत्यस्यैव बिम्बज्ञानजनकत्वं न त्वसत्यस्य प्रतिबिम्बस्येति; इदमपि मन्दं, प्रकृतेऽपि सत्यस्य पदावलिज्ञानस्यैव सत्यात्मकविषयकवाक्यार्थज्ञानजनकत्वात् ॥

न चान्तःकरणवृत्तिरूपमेव ज्ञानं, तच्चासत्यमेवेति वाच्यं; तदव-च्छिन्नचैतन्यस्यैव ज्ञानत्वात्, वृत्तिमात्रस्य जडत्वेनार्थप्रकाशानुपपत्तेः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्या आत्मनो ज्ञानत्वसिद्धेश्च ।

न च निर्धर्मके ब्रह्मणि कथं ज्ञानत्वं धर्म इति वाच्यम् । धर्मि-स्वरूपस्यैव ज्ञानत्वस्य व्यवहारदशायां भेदेन भानोपपत्तेः । तदुक्तं टीकायां — 'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्या-त्पृथगिवावभासन्ते इत्यदोषः ।' इति । अतो विषयानुभवस्य ब्रह्मस्वरूपत्वात् पारमार्थिकादेव ज्ञानात् सत्यकार्योत्पत्तिरिति सन्तोष्टव्यमायुष्मता ॥

न चाविद्यारूपदोषजन्यत्वादद्वैतवाक्यजन्यज्ञानस्याप्रमात्वं । लौकिक-वाक्यजन्यज्ञानवत्तत्रापि मूलाविद्यायाः प्रमात्वाप्रमात्वयोरौदासीन्यात् । शाब्दाप्रमायां सर्वत्र भ्रमप्रमादादेरेव दोषत्वात्, तस्य चापौरुषेयेवेदे शङ्कितु-मशक्यत्वात् । तस्मान्निर्दोषवेदजन्यमद्वितीयात्मज्ञानं प्रमैवेति तद्विषयस्य पारमार्थिकत्वं नापह्नोतुं शक्यमिति ॥

ननु सत्यत्वस्य घटादिस्वरूपत्वाज्जातिरूपत्वाद्वा घटादिग्राहक-प्रत्यक्षेण गृहीतत्वाच्चदसत्यत्वबोधकश्रुतेः प्रत्यक्षबाध इति चेत् — न; स्वरूपस्य सत्तारूपस्य वा सत्यत्वस्य श्रुत्या अनिरासात् । किन्तु त्रिकालाबाध्यत्वस्य तदगोचरत्वात् ॥

वस्तुतो घटपटादीनां भेदं प्रत्यक्षं गृह्णाति, नतु ब्रह्मप्रपंचयोरिति । श्रुत्या च 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं' '(सर्वं)खल्विदं ब्रह्म' 'नेह नानास्ति किंचन' इत्यादौ ब्रह्मभेदेन प्रपञ्चनिषेधः श्रूयते । तत्र भिन्न-विषयकत्वात् न प्रत्यक्षश्रुत्योर्विरोधः । प्रत्यक्षदृष्टकार्यकारणयोरेव भेदवादि-मतेऽपि भेदः प्रत्यक्षेण न गृह्यते । दूरे ब्रह्मप्रपञ्चयोर्भेदः । नहि भेदवादिना-मपि मृद्घटयोर्भेदः प्रत्यक्षेण गृह्यते । मृदो घटो भिन्नः घटान्मृद्भिन्नेति वा, तन्तुभ्यः पटो भिन्नः पटात्तन्तवो भिन्ना इति वा प्रत्यक्षासंभवात् ।

सिद्धान्ते तु उपादानोपादेययोर्भेद एव नास्ति, 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' इति श्रुतेः, 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्राच्च। जीवब्रह्मणोरपि भेदो न प्रत्यक्षः। धर्मिद्वयप्रत्यक्षव्यतिरेकेण भेदप्रत्यक्षानुपपत्तेः॥

परमते जीवस्य मनोग्राह्यत्वेऽपि शुद्धचैतन्यस्योपनिषदर्थस्य ब्रह्मणस्तदग्राह्यत्वात्। 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह', 'तं त्वौपनिषदं पुरुषं पृच्छामि' नावेदविन्मनुते तं बृहन्तं' इत्यादिश्रुतिभ्यः अन्योन्याभावभेदपक्षेऽपि निर्गुणब्रह्मभेदस्य जीवे आपाद्यमानस्याधिकरणायोग्यतापादकत्वेनान्योन्याभावस्याप्रत्यक्षत्वात्॥

यत्तादात्म्यं यत्रापाद्यमानं अधिकरणस्यायोग्यतां नापादयति तदन्योन्याभावस्तत्र प्रत्यक्ष इति परैः भाषितत्वात्। तत्त्वमस्यादिवाक्यस्य जीवब्रह्माभेदप्रतिपादकस्य न प्रत्यक्षविरोधः। न च प्रत्यक्षस्य वाक्येन बाधो दृष्टचर इति वाच्यं; रज्जुसर्पभ्रमादौ नायं सर्प इत्याप्तवाक्यात् बाधदर्शनात्। तस्मादद्वैतश्रुतेः न प्रत्यक्षविरोधभङ्गः॥

॥ श्रीः ॥

# ॥ लिङ्गभङ्गमुक्तिशतकम् ॥



ओं श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुश्रीरामचन्द्राय नमः ॥



यः पूज्यस्सकलामरैर्मुनिगणा ध्यायन्ति यं येन वै
श्रेयोमार्गनियोजितास्सुमतयस्कुर्वन्ति यस्मै नमः ।
यस्मात्सर्वमभूत्ममातृपटलं यस्यांशकं त्रैपदं
यस्मिन्नाशमुपैति मायिकपदं त रामचन्द्रं भजे ॥ १ ॥

श्रीमत्त्रैपदरामचंद्रपरमानन्दांबुधिं चिद्घन
नत्वा श्रीगुरुवासुदेवयतिराट्पादांबुजे चासकृत् ।
मच्चित्तासुविरूपनाशविभवां मुक्तिं प्रवाञ्छन्हरे-
स्तुष्ट्यै लिङ्गविभङ्गमुक्तिशतकं कुर्वे हृदि स्याद्धरिः ॥ २ ॥

सत्कर्माणि विशुद्धये स्वमनसः कृत्वाऽप्यशुद्धेऽन्तरे
छित्वा कर्मजबन्धनं दृढतरं वैराग्यतीक्ष्णासिना ।
सन्यस्य श्रवणादिना स्वमनसो नाशाय्यमापुर्हरिं
दद्यात्कारणकर्मभंगविभवां मुक्तिं स रामोऽद्य मे ॥ ३ ॥

वाक्श्रोत्रादिदशेन्द्रियासुमनसो वागादिरूपं भजन्
तत्तद्व्यापृतिशक्ततां प्रजनयन्निस्संगरूपेण यः ।
आस्तेऽद्यापि समस्तभूतहृदये वेद्यादवेद्यात्परो
दद्यात्सर्वनिभासकत्वविभवां मुक्तिं स रामोऽद्य मे ॥ ४ ॥

देशाद् भूमिरुपैति भूमपदवीं भूमेर्जलं तज्जला-
द्वह्निर्वह्नितनोस्सदागतिरसौ तस्माद्बृहद्व्योमखात् ।
बीजं बीजतनोर्निरंकुशविभुः निर्बीजभूमैव यो
[illegible] मुक्तिं स रामोऽद्य मे ॥ ५ ॥

अर्थादर्थमुपैति सूक्ष्मपदवीं अर्थात्मनो मानसात्
बुद्धिर्बुद्धितनोर्महत्तत इहाव्यक्तं ततः पूरुषः ।
सूक्ष्मात्सूक्ष्मतरः पुमान्परमको यस्मान्न सूक्ष्मान्तरम्
दद्यात्पूरुषशिष्टतत्त्वविभवां मुक्तिं स रामोऽद्य मे ॥ ६ ॥

सूर्यो यत्र न भाति शीतकिरणो वह्निर्नभानां गणः
सत्वादित्रिगुणं दशेन्द्रियमनः प्राणस्सुराणां गणः ।
यं भान्तं ह्यनुभान्ति न स्वत इमे सूर्याग्निचन्द्रादयो -
दद्यात्सूर्यशशांकभासकपदां मुक्तिं स रामोऽद्य मे ॥ ७ ॥

पूर्व्वादिसमस्तकोशकलितास्त्येकादशद्वारपैः-
यागाद्यैर्मुरारक्षितातिभयतस्स्वसामिभोगेच्छया
तत्रासंगतया वसन्ननुदिनं यः प्रत्यगात्मा भवे-
द्दद्यात्केवलबोधरूपविभवां मुक्तिं स रामो मम ॥ ८ ॥

यज्ज्ञानक्षुरधारया हृदयचिद्ग्रन्थिर्दृढा भिद्यते
यत्साक्षात्करणेन संशयगणः क्वेति न ज्ञायते ।
यज्ज्ञानाग्निरनन्तजन्मफलदं कर्मेन्धनं निर्दहे-
द्दद्यात्कर्तृचिदैक्यमोहविकलां मुक्तिं स रामोऽद्य मे ॥ ९ ॥

एकीकृत्य विराट्तनाविह पुनर्विश्वं स्वसूत्रेण तं
सूत्रे स्वमपरिं च बीजतनुना प्राज्ञं पुनर्बीजकम् ।
निर्बीजात्मतया विचिन्त्य यतयो यं तुर्यरूपं विदुः
दद्यात्तुर्यशिवाद्वयात्मविभवां मुक्तिं स रामोऽद्य मे ॥ १० ॥

अन्नं प्राणतयाऽवशिष्य मुनयः प्राणं मनोमात्रतो
विज्ञानात्मतयाऽवशिष्य च मनो ज्ञानंच मोदात्मना ।
तं चाप्यात्मतयाऽवशिष्य सहसा यं ब्रह्म पुच्छं विदुः
दद्यात्कोशविरूपनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ११ ॥

सत्यं वैकृतिशून्यमेकममलं ज्ञानं जगद्भासकं
कालाकाशविदेशतोऽप्यतिविभु ब्रह्म ह्यनंतं विदुः ।
सत्यं ज्ञानमनन्तमस्म्यहमिति ध्यात्वा यमीशं विदुः
दद्यात्सत्यसुबोधसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥॥ १२ ॥

सूर्यो भाति सदागतिश्च पवते वह्निर्ज्वलत्यंजसा
मृत्युर्वज्रधरोऽपि शीतकिरणो राज्ञो भिया भृत्यवत् ।
उद्यद्दण्डधरस्य यस्य भयतस्सूर्यादयो वेपिता
दद्यात्सर्वनियामकाद्वयपदां मुक्तिं स रामोऽद्य मे ॥ १३ ॥

निस्सामान्यविशेषबोधनयने स्वस्मिन्नखण्डाद्वये
दुस्सामान्यविशेषदृष्टियुगळं दुर्बुद्धिभि. कल्पितम् ।
प्रत्याख्याय विमूढकल्पितदृशा सन्यासिनो यं विदु·
दद्याद्द्वयदृष्टिसाम्यविभवां मुक्तिं स रामोऽद्य मे ॥ १४ ॥

रूपं पश्यति येन वक्ति वचनं जिघ्रेत्सुगन्धादिकं
गृह्णात्याशु ददाति वस्तुनिचयं जानात्यशेषं सदा ।
यं प्रज्ञानमुदाहरन्ति मुनयो ब्रह्मादिकीटान्तगं
दद्याज्ज्ञानघनस्वरूपविभवां मुक्तिं स रामोऽद्य मे ॥ १५ ॥

विश्वं येन समुत्थितं चिरतरं यन्सत्तया भाति सत्
सम्यग्बोधदृशा विकारनिलये यन्मात्रतश्शिष्यते ।
तस्माद्वस्तुविकारजातमनघा ब्रह्मेति जानंति य-
दद्यात्सर्वविकारभागविभवां मुक्तिं स रामोऽद्य मे ॥ १६ ॥

विश्वं ब्रह्मणि जातु जन्म न भजेत्सभूत्यभावश्रुते -
र्नोत्पन्नस्य विनाशनं च घटते नाशप्रहाणश्रुते. ।
कार्याकार्यजनिप्रहाणरहितं यं निर्विकारं विदु.
दद्यात्कारणकार्यकर्तृविकलां मुक्तिं स रामोऽद्य मे ॥ १७ ॥

प्रागाग्नेयविदिक्षु दिक्षु निखिलस्यान्तर्बहिस्सर्वत
. तिष्ठन्नूर्ध्वं उदेति नैत्युदयता नास्तंगत कुत्रचित् ।
य. कोट्यर्कसमूहभासकरुचिश्चित्सूर्यरूपो हरि-
र्दद्यान्नित्यचिदर्करूपविभवां मुक्तिं स रामोऽद्य मे ॥ १८ ॥

सर्वज्ञादिगुणान्वित. परशिवः किंचिज्ज्ञ एवावरो
ज्ञाज्ञत्वे प्रविहाय जीवपरयोर्लक्ष्यैकता वेदत· ।
ज्ञात्वा तत्त्वमसीति याति यतिराड् ब्रह्माहमस्मीति यं

नान्यत्पश्यति यत्र जातु यतिराण्नान्यच्छृणोत्यंजसा
नो जानाति विशेषवस्तुपटलं भूमाद्वयत्वश्रुतेः ।
ज्ञाता नाम हृदालयोपरि लसद्भूमात्मकं यं विदुः
दद्याद्भूमघनाद्वितीयविभवां मुक्तिं स रामोऽद्य मे ॥ २० ॥

देहे ब्रह्मपुराभिधानगगने लब्धासनो लोचनं
कोणं प्राप्य च हृद्य जीवकलनां जाग्रन्मुखं भासयन् ।
मूर्धानं प्रतिपद्य यो विजयते तुर्यस्वरूपो हरि-
र्देयात्तुर्यपरात्मसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ २१ ॥

प्रत्यक्तत्त्वमहंपदेन गदितं ब्रह्मेति शब्दात्परं
भेदो मायिक एव जीवपरयोर्मायामृषात्वश्रुतेः ।
प्रत्यग्ब्रह्म भवाम्यहं परशिवोऽस्मीतीह यं प्राप्नुयु-
र्देयात्प्रत्यगभिन्नभूरिविभवां मुक्तिं स रामोऽद्य मे ॥ २२ ॥

मूर्तामूर्तविभातदृश्यपटले मायामनः कल्पिते
नेतीति श्रुतियुक्तितः प्रविलयं यातेऽथ यश्शिष्यते ।
मूर्तामूर्तविभागमोहरहितस्सत्यस्य सत्योऽद्वयो
दद्यान्निर्भयसत्यबोधविभवां मुक्तिं स रामोद्य मे ॥ २३ ॥

वैराग्यात्प्रतिपद्य बालपदवीं सर्वत्र निस्संगतो
मौनामौनविवेचनार्हधिषणाः पाण्डित्यपारंगताः ।
जीवन्मुक्तिमवाप्य ता पुनरमी विस्मृत्य यं प्राप्नुयुः
र्देयान्मौनविमुक्तमुक्तिपदवीं मुक्तिं स रामोऽद्य मे ॥ २४ ॥

क्षेत्रापत्यकलत्रवित्तविभवं त्यक्त्वा दवीयो भृशं
श्रोतव्यादिगुणान्वितोऽयमजडानन्दावबोधाम्बुधिः ।
ध्यातव्योऽनिशमप्रमादधिषणैर्योनिष्कलात्मा हरि-
र्देयान्निष्कलविष्णुरूपविभवां मुक्तिं स रामोऽद्य मे ॥ २५ ॥

यस्यानन्दलवैकदेशविभवा व्याविद्धपापाळयो
निष्कामाचितबुद्धयश्श्रुतिशिरोऽभिज्ञा महाश्रोत्रियाः ।
सम्राजो यतयो भवन्ति मुनयो ब्रह्मादयो नन्दिनो
दद्याद्धरिसलस्वरूपविभवां मुक्तिं स रामोऽद्य मे ॥ २६ ॥

ओतप्रोततया चरस्थिरजगद्वृन्देऽनिशं व्याप्य तत्
सत्तास्फूर्तिसुखैकरूपतनुना मिथ्याभिधा वारयन् ।
ज्ञाना ब्रह्मतया विभाति य इहाज्ञानां जगद्भावतो
दद्याद्विश्वविमोहभंगविभवां मुक्तिं स रामोऽद्य मे ॥ २७ ॥

यत्साक्षादपरोक्षतश्रुतिगिरोवाक्यार्थमंत्रप्रथी-
र्विद्वद्वृन्दहृदब्जसुन्दरगृहालंकारदीपायते ।
यश्चैत्याळिगचित्तवृत्तिनमसो मध्याह्नसूर्यायते
दद्यात्केवलबोधदीपविभवां मुक्तिं स रामोऽद्य मे ॥ २८ ॥

सिद्धाद्यासनयुङ्निरुद्धपवनात्प्राणाद्यपान्यैक्यत-
स्तप्त्वा कुण्डलिनीं तया विधिसिराग्रथित्रयं भेदयन् ।
षट्चक्राणि च चन्द्रसूर्यमिथुनाद्यं ब्रह्मरन्ध्रे विशे-
द्दद्याद्योगजमुख्यसिद्धिविभवां मुक्तिं स रामोऽद्य मे ॥ २९ ॥

भ्रूमध्यादिषु दृष्टियुग्मविलयात्प्राणानिले निश्चले
संकल्पाद्यतिवृत्तिजुष्टमनसि स्थैर्यं गतेऽ स्यासतः ।
संशान्तानिलचित्तदृष्टिविभवं पश्यन्ति यं तारका
दद्यात्तारकपूर्णसिद्धिविभवां मुक्तिं स रामोऽद्य मे ॥ ३० ॥

मेर्वभ्रादिवदप्रकम्प्यधिषणस्त्वंताडितो दुर्जनैः
त्रासं नैति नमस्कृतोऽपि विबुधैर्हृष्टं परालोकनात् ।
यस्मिन्भूम्नि निरस्तमोहपटले विद्वान्समास्ते भवे-
दद्याद्ब्रह्मनिमग्नचित्तपदवीं मुक्तिं स रामोऽद्य मे ॥ ३१ ॥

देहाद्यभिमानतूलपटले बोधाग्निभस्मीकृते
चित्ते चैत्यगतिं विहाय चपला चित्तत्वभावं गते ।
वक्तुं ध्यातुमशक्यनिष्कलपदं य योगिनः प्राप्नुयुः
दद्याद्वक्तुमशक्यसौख्यपदवीं मुक्तिं स रामोऽद्य मे ॥ ३२ ॥

सन्यस्य स्वगुरुं प्रणम्य विधिवत्तार महावाक्यकं
लब्ध्वा शान्तिमुपेत्य दिक्षु सुलभां भिक्षामटंतोऽमलाः
अन्तर्बाह्यविभागशून्यमनयस्सन्यासिनो य विदु
[illegible]पदवीं मुक्तिं स रामोऽद्य मे ॥ ३३ ॥

जाग्रत्स्वप्नसुषुप्तिभेदकलना त्यक्त्वा बुधैस्सेविता
तद्भावादि विभासयन्ननुदिनं प्रत्यक्स्वरूपेण य ।
आस्ते तद्गतदोषसङ्गरहितस्तुर्योऽविकारास्पदो
दद्यात्तुर्यमहाप्रकाशनिभवां मुक्तिं स रामोऽद्य मे ॥ ३४ ॥

श्रुत्याचार्यकटाक्षतस्स्वहृदये बोधतया प्रापिते
प्रत्यग्वस्तुनि निश्चिते स्फुटमहं ब्रह्मास्मि सर्वातिगम् ।
ब्रह्मैवाहमिति स्थिरानुभवतो यद्रूपतां प्राप्नुयु
दद्याच्छुद्धपरानुभूतिविभवां मुक्तिं स रामोऽद्य मे ॥ ३५ ॥

नानावासनया जडीकृतमतेस्सत्त्वेन दुर्वासना
दग्ध्वा सत्त्वसुवासनामपि पुनर्ब्रह्मप्रबोधाग्निना ।
सशान्ताखिलवासने स्वहृदये निर्वासनं य विदु
दद्याद्बोधमहाग्निदीप्तिविभवां मुक्तिं स रामोऽद्य मे ॥ ३६ ॥

मौनेनैव विजित्य वाग्भवरिपु स्वल्पाशनात्कायज
चित्तोत्थामितवृत्तिदुर्जयरिपु ब्रह्मानुसन्धानत ।
वैराग्येण विजित्य मोहदुरितं बोधेन य प्राप्नुयु
दद्याद्दुर्जयसङ्गभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ ३७ ॥

देहादौ दृढभावनामहमिति त्यक्त्वा पराग्गामिनीं
प्रत्यग्भावनया प्रशान्तदुरितब्रह्मात्मगां भावनाम् ।
आलम्ब्याचलवीचिसौख्यजलधौ यस्मिन्निमग्ना बुधा
दद्यात्सौख्यपयोधिमग्नविभवां मुक्तिं स रामोऽद्य मे ॥ ३८ ॥

सम्यक् ताडितकांस्यनादतुलिते तारे समुच्चारिते
वीणावेणुमृदङ्गमद्दलमहाभेरीध्वनिश्श्रूयते ।
तन्मध्ये प्रणवध्वनौ स्वमनसो नाशावधीशं विदु
दद्यान्नादमनोविनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ३९ ॥

पूर्वं रूपमपास्य रूपमपरं चित्ते गते स्वेच्छया
तद्रूपद्वयमध्यमेऽस्य मनसो वृत्तेरभावात्तदा ।
सूक्ष्मात्सूक्ष्मधियो विदुर्यमजडानन्दं न तन्निष्कलं
दद्यान्मानसवृत्तिशून्यविभवां मुक्तिं स रामोऽद्य मे ॥ ४० ॥

रागद्वेषजपापपुण्यपटले निर्मूलभावं गते
स्वाज्ञाने प्रळयं गते दृढतरब्रह्मात्मबोधात्तराम् ।
सत्यज्ञानसुखस्वरूपविभवो यश्शिष्यते श्रीहरिः
दद्याच्छ्रीहरिबोधसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ ४१ ॥

ज्ञानं प्राप्य गुरोर्मुखादनुदिनं संकल्पमुन्मीलयन्
लाभालाभविषादहर्षरहितप्रारब्धवेगात्तु नः ।
तिष्ठेद्दृष्ट्वा तु वेति दिक्षु विचरन्यस्मिन्समाप्तो भवे-
द्दद्याच्छाश्वतबोधलब्धविभवां मुक्तिं स रामोऽद्य मे ॥ ४२ ॥

धीसंकल्पितवस्त्वसन्मतियुतैरक्षैर्गृहीतं तु सत्
सत्यासत्वविभेदवेदनदृशं ज्ञात्वा बहिश्चान्तरे ।
तां दृष्टिं प्रविलाप्य भूम्नि मुनयो यं प्राप्नुयुस्सद्घनं
दद्यात्सद्घनदृष्टियोगविभवां मुक्तिं स रामोऽद्य मे ॥ ४३ ॥

स्वाद्यस्वादकमध्यदर्शनवशात्स्वाद्यादिभावातिगं
बुद्ध्वैव स्वदनं विकाररहितं वाग्बुद्ध्यगम्यं शिवम् ।
स्वाद्यस्वादकभेददृष्टिविकला यं प्राप्नुयुश्चिद्घनं
दद्याच्चिद्घनशुद्धसत्वविभवां मुक्तिं स रामोऽद्य मे ॥ ४४ ॥

तालोरूर्ध्वबिले निवेश्य रसनां धीवायुनोर्ध्वं नयन्
भ्रूमध्ये च सहस्रपत्रकमले सूर्येन्दुसंयोगतः ।
पीत्वैवामृतमेत्य तृप्तिमवशाद्यस्मिंश्चित्तो भवे-
द्दद्याल्लम्बिकयासबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ४५ ॥

वेदान्तश्रवणादिपक्वधिषणा स्वान्तर्बहिर्भावना
निश्शेषं प्रविहाय जन्ममृतिदां निस्नेहदीपार्चिवत् ।
चित्तारूपलयं प्रपद्य यतयो यस्मिन्समाप्तिं गता
दद्यात्केवलचित्तभागविभवां मुक्तिं स रामोऽद्य मे ॥ ४६ ॥

विज्ञानात्मतया हृदब्जकुहरे तिष्ठन्सदा देहिनां
भूयस्त्वन्नमयादिसत्करणतो दुष्प्रस्थलोऽनीशताम् ।
सर्वेशत्वमवाप्य मायिकपदे यो वर्ततेऽव्याप्यजो

स्थूलेशस्तमसान्वित पृथुतनुस्सूक्ष्मो रजस्संयुतो
बीजेशस्तु विशुद्धसत्वगुणयुक्सर्वोपसहारत ।
पूर्वोक्तत्रिगुणान्वितोऽप्यरिपुमान्यो निर्गुणस्स्याद्धरि-
र्देयान्निर्गुणतुर्यविष्णुविभवा मुक्ति स रामोद्य मे ॥ ४८ ॥

निर्मायोऽपि विशुद्धसाविक्तनु स्वीकृत्य लीलामयीं
सच्छिष्यान्प्रतिबोधयन् श्रुतिशिरोविज्ञानमव्याजत ।
श्रीमद्देशिकरूपमेत्य विचरेद्योनिष्कलात्मा हरि
दद्याद्देशिकलब्धबोधविभवा मुक्ति स रामोऽद्य मे ॥ ४९ ॥

यद्व्योम घटादिवस्तुपटले तत्तत्परिच्छेदता
प्राप्त भात्यविवेकिना स्थिरचरे तद्वत्पुमानेकल ।
जीवोऽय जगदीश्वरो जगदिद ब्रह्मेति यो ज्ञानिना
दद्यात्सर्वविकल्पभगविभवा मुक्ति स रामोऽद्य मे ॥ ५० ॥

सांगोपाङ्गतया विभातनिगमन्यायादिशास्त्राणि प-
द्वेदार्थानुचरा पुराणनिचया येनार्थवन्तोऽभवन् ।
ते किं ब्रह्म निदर्शयेयुरिति सद्बोधाद्यमीश विदु -
र्दद्याद्वाक्यपदार्थदूरविभवा मुक्ति स रामोऽद्य मे ॥ ५१ ॥

जायासूनुधनेषणाविरहिता वेदान्तपारगता-
स्सान्तर्बाह्यजचित्तवैत्यकलनाशून्या महाश्रोत्रिया ।
यद्विष्णो परम पद प्रविवतत पश्यत्यमी सूरयो
दद्याद्विष्णुपदाभिधानविभवा मुक्ति स रामोऽद्य मे ॥ ५२ ॥

सर्वज्ञ परमेश्वर प्रणवग प्रत्यक्परात्माभिध
भेदाभेदविभागशून्यविभव ज्ञात्वा गुरोर्वेदत ।
भेदाभेदमति विहाय यतयो य प्राप्नुयुरश्रीहरिं
दद्यात्सर्वभिदाभिदादिरहिता मुक्ति स रामोऽद्य मे ॥ ५३ ॥

आकाशादिकपचभूतरचनासजातनानाभिधोऽ-
नेकप्राणिहृदब्जमध्यविलसत्सर्वेन्द्रियोद्दीपक ।
चित्सामान्यकलेवरोऽखिलगुरुर्नारायणो यो भवेत्-
दद्यात्सर्वहृदब्जसूर्यविभवा मुक्ति स रामोऽद्य मे ॥ ५४ ॥

चित्तखादिविकल्पनाशसमये सम्यक्प्रबुद्धात्मनो
देशे व्योम्नि च कालकूटपटले दग्धे प्रबोधाग्निना ।
देशाभ्रानिगमानशून्यविभवो यच्छिष्यते श्रीहरि-
र्दद्यात्प्राणविकल्पनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ५५ ॥

बीजं ब्रह्मणि कल्पितं भुजगवद्रज्जौ तदज्ञानतो
बीजाद्विश्वमनन्यबोधत इदं विश्वं भजेद्बीजताम् ।
बीजं प्रत्यगभिन्नता यममलं निर्बीजसौख्यं विदुः
दद्याद्दाहृतिबीजभर्जनभवां मुक्तिं स रामोऽद्य मे ॥ ५६ ॥

पूर्णब्रह्मविकल्पितत्वनिगमान्मायापदस्याधुना
मिथ्यात्वं स्फुटमेव रज्जुफणिवत्सत्यं तदाधारकम् ।
नष्टेऽबोधचये प्रबोधरविणा यत्पूर्णता शिष्यते
दद्यात्पूर्णचिदम्बुराशिविभवां मुक्तिं स रामोऽद्य मे ॥ ५७ ॥

नानारूपविशेषमोहरहितं निर्माय तत्त्वं ततं
सत्यं ज्ञानमपारसौख्यविभवं संशान्तनानाभिदम् ।
ब्रह्मास्मीति सदानुभूय समतां यं साम्यमार्गं विदुः
दद्यात्साम्यसुगानुभूतिविभवां मुक्तिं स रामोऽद्य मे ॥ ५८ ॥

सौराद्येष्टमुदाहरंति तरणिं शाक्ता भवानीं भृशं
विष्णुं केचन वैष्णवा गणपतिं शैवाश्शिवं भैरवम् ।
इत्थंभूतधियो यमद्वयतनुं जानंति नैवैकधा
दद्यात्सर्वमदान्धकारतरणिं मुक्तिं स रामोऽद्य मे ॥ ५९ ॥

पाणिं पाणितले (निपीड्य)तरसा दन्तैस्स्वदन्तावृता
चूर्णीकृत्य निरस्य मानसरिपुं भ्रूमध्यरक्षाग्निना ।
साराज्यं प्रतिपद्य निर्भयतया यद्रूपमाप्तो भवे-
द्यातीव्रविरागबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ६० ॥

इन्नाथे रक्षितमस्ति यन्मतं [illegible]
पुण्यैर्नि[illegible] पूर्णो [illegible] ।
[illegible]
दद्यात्[illegible] मुक्तिं स रामोऽद्य मे ॥ ६१ ॥

आधारेऽस्त्यपुनर्भवाभिधसिरा तस्यां मनोचारणात्
सा वक्त्रं विकसीकरोत्यथ सिरा वक्त्रान्तरे मानसम् ।
दग्धप्राणाग्निभिरेत्य गच्छति लयं यस्मिन्हरो योगिनो
दद्यान्मानसदग्धिचित्तलयजां मुक्तिं स रामोऽद्य मे ॥ ६२ ॥

भित्वा कल्पसमाधिभाक्स्वमनसा भूमिं जलं चानलं
वायुं व्योम सुसूक्ष्मभूतपटलं चेतोमहच्चाक्षरम् ।
अव्यक्तं च विभिद्य मृत्युमधुना यस्मिन्समाप्तो भवे-
द्दद्यात्सर्वलयामृताद्वयपदं मुक्तिं स रामोऽद्य मे ॥ ६३ ॥

श्रोत्रादौ प्रविलाप्य चैत्यपटलं श्रोत्रादिदिक्पूर्वके
दिग्वातादि सिरासु ताश्च संज्ञानमध्ये च तत् ।
मोदे तं च तुरीयके तदमृतं निर्बीजकं यं विदुः
दद्यादक्षविकल्पनाशविभवां मुक्तिं स रामोऽद्यमे ॥ ६४ ॥

ब्रह्मादिस्थिरजंगमान्तकलनातृष्णां मनोजृंभितां
आत्मानात्मविवेकजातसहजज्ञानाग्निना निर्दहन् ।
यस्मिन्प्रत्यगभिन्नपूर्णविभवे योगी भजेदेकतां
दद्याज्ज्ञानकृशानुदग्धकलनां मुक्तिं स रामोऽद्य मे ॥ ६५ ॥

शब्दादौ विलयं गते दृढतरज्ञानादहोरात्रभुक्
काले कालपदं गते स्वमनसि ध्यानात् स्थिरत्वं गते ।
उन्मन्या विलसत्परावरगुरुं नारायणं यं विदुः
दद्यादुन्मनि भातचिद्धनपदां मुक्तिं स रामोऽद्य मे ॥ ६६ ॥

ध्यानादित्रिपुटीप्रहाणत इदं निर्वातदीपार्चिर-
स्तंरान्ताखिलवीचिवारिधिजलवन्मेकल्पशून्यं मनः ।
भूयात्तत्र विराजते परशिवानन्दात्मको यो हरिः
दद्याच्चैवपरामरूपविभवां मुक्तिं स रामोऽद्य मे ॥ ६७ ॥

दग्धुग्मानिऽवित्तवृत्युगत्या सन्तृप्तिरूपाशनं (?)
देहस्याचरणं परानुभवनोऽवस्थात्रयातीनना ।
यस्मिन्स्वमनो मुनेरनुभवन्नेवं भवेत्सर्वदा
दद्यात्सिद्धिविभावनीतिविभवां मुक्तिं स रामोऽद्य मे ॥ ६८ ॥

विस्मृत्याखिलबाह्यमांतरमपि स्वोद्भूतविज्ञानतो
ब्रह्माब्धौ जलबिन्दुवत्प्रविलयं नीत्वा मनो वैभवम् ।
वेदव्यासतनूद्भवश्शुकमुनिर्यस्मिन्समाप्तो भवे-
द्द्याच्छ्रीशुकलब्धसौख्यविभवां मुक्तिं स रामोऽद्य मे ॥ ६९ ॥

आत्मानात्मविवेचने श्रुतिगुरोर्वाक्यात्कृते सादरं
सत्यं ब्रह्म मिदा मृषेति विदिते ब्रह्माद्यभावान्मुनेः ।
यस्मिन्नप्रहरूपभूम्यपिलयं गत्वा समाप्तं मनो
दद्यादप्रहभूरिलब्धविभवां मुक्तिं स रामोऽद्य मे ॥ ७० ॥

जाग्रत्स्वप्नसुषुप्तिमोहतमसि स्वान्तं मुनेर्लीयते
तुर्याकल्पसमाधिनिष्टमनसः सन्नाक्षयं नैति तत् ।
तुर्यातीतपदे विरूपविलयाद्यस्मिन्समाप्तं भवे-
द्द्यात्तुर्यविलक्षणाद्वयपदां मुक्तिं स रामोऽद्य मे ॥ ७१ ॥

चेतश्चैत्यविकारशून्यरहिता चिद्ब्रह्मलीना यदा
किंचिन्नैत्यनुभूतिसिद्धविभवो मुक्तात्मगम्यस्तदा ।
सत्तासाम्यमुपैत्यथो विजयते नारायणः केवलो
दद्यात्केवलभूमतत्त्वविभवां मुक्तिं स रामोऽद्य मे ॥ ७२ ॥

संकल्पादिविमुक्तयोगिमनसि प्राणाग्निदग्धचेतसा
मग्नेऽत्यन्तमजातिगोत्रकलने स्वेशाग्नि बोधार्णवे ।
सत्यानन्दविशुद्धबोधविभवो यश्शिष्यते श्रीहरिः
दद्याज्जातिकुलाभिमानविभवां मुक्तिं स रामोऽद्यमे ॥ ७३ ॥

कर्तव्यार्थनिबन्धनं स्वमनसः कर्माख्ययोगामृत-
श्रेयस्साधनसाध्यबन्धनमिह ज्ञानाख्ययोगो वरः ।
संशान्ताखिलयोगसाध्यविभवं यं ज्ञानिनः प्राप्नुयुः
दद्यात्साधनसाध्यभावरहितां मुक्तिं स रामोऽद्य मे ॥ ७४ ॥

देहास्वोः क्षणभंगुरत्वनिगमाद्दारादिवाद्यन्तरे-
चित्ते चैत्यतनावनंगमनसा संत्यज्य दुर्वासनाम् ।
ब्रह्मात्मीति सुवासनापरवशो यं प्रैति नारायणं
दद्याद्दैस्यसुवासनाफलभवां मुक्तिं स रामोऽद्य मे ॥ ७५ ॥

भावाभावगतिं विहाय सदसद्भावं च धीकल्पितं
सर्वाभासविवर्जितं स्थिरचराधारं परस्ताद्धियः ।
आलम्ब्याचलनिर्विकल्पमनसा यस्मिन्समाप्तो भवे-
द्दद्याद्बुद्धिविकल्पशून्यविभवां मुक्तिं स रामोऽद्य मे ॥ ७६ ॥

सशान्ताखिलहेयरन्ध्रविषयध्वान्तं सकृद्भानत-
स्सङ्कल्पोज्झितचित्तभावितपदं सूर्यादिसूर्यात्मकम् ।
ब्रह्माहं प्रकृतेः परोऽहमिति य स्वात्मानमेवं विदु-
र्दद्यात्प्राकृतनैकृतप्रळयजां मुक्तिं स रामोऽद्य मे । ७७ ॥

कर्मज्ञानदशेन्द्रियाण्यविदितं प्राणादिपञ्चानिल-
ध्वान्तस्फारसहस्रचण्डकिरणोऽहङ्कारशत्रुञ्जयः ।
मानावृत्तिमनोधियः परतरानन्दात्मको यो हरि-
र्दद्याल्लिङ्गशरीरभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ ७८ ॥

सूक्ष्मात्सूक्ष्मतरोऽस्मि योगिविदितो ज्यायानहं ज्यायसा
सशान्ताखिलवेदनोऽस्मि जगतः सत्तास्वरूपोऽस्म्यहम् ।
एवंभावनया प्रशान्तदुरिता यं प्राप्नुयुश्शाश्वतं
दद्याच्छाश्वतसौख्यसिद्धिविभवां मुक्तिं स रामोऽद्य मे ॥ ७९ ॥

मत्पुत्रो ममवित्तदारसुहृदो मत्क्षेत्रमित्यादिकं
द्वैतं देहदशेन्द्रियासुधिषणातादात्म्यमेवाद्वयम् ।
द्वैताद्वैतमनोगते प्रविलयाद्यद्दिश्यते निर्भयो
दद्यान्निर्भयनिर्विकारपदवीं मुक्तिं स रामोऽद्य मे ॥ ८० ॥

स्थूलाहङ्कृतिचित्तचैत्यकलना संवित्स्वरूपोऽस्म्यहं
जीवेशादिभिदाविहीनपरमानन्दावबोधोऽस्म्यहम् ।
मत्तो नान्यदिहास्ति किंचिदिति यं नारायणं प्राप्नुयु-
र्दद्याद्द्वयभावनात्तपदवीं मुक्तिं स रामोऽद्य मे ॥ ८१ ॥

सर्वासर्वमहाभ्रमप्रविलया सर्वादिशून्योऽस्म्यहं
साक्षित्वं नहि मेऽस्ति साक्ष्यविलयाद्द्वैतगोगोऽस्म्यहम् ।
स्वीये धाम्नि मयि स्थितोऽहमजरोऽस्म्येवं विदुर्यं हरिं
दद्यात्साक्ष्यविकल्पनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ८२ ॥

नाहं देहमुखेन्द्रियाख्यमनो नाहंविकल्पान्वितो
नाहं मायिकविश्वभेदनिचयो नाहं तदाधारकः ।
ब्रह्मैवाहमितीह यं मुनिगणा ज्ञात्वा चिरात्प्राप्नुयुः
दद्यान्मायिकभावनाख्यभवां मुक्तिं स रामोऽद्य मे ॥ ८३ ॥

द्वैताद्वैतविभागभेदरहितो वाग्बुद्ध्यगम्योऽस्म्यहं
सत्यासत्यशुभाशुभाख्यिरहितश्चिन्मात्ररूपोऽस्म्यहम् ।
सत्यापारसुखात्मकोऽस्म्यहमिति प्राप्ता यमीशं हरिं
दद्यान्मानसवागगम्यपदवीं मुक्तिं स रामोऽद्य मे ॥ ८४ ॥

मायाकल्पितमौतिकाखिलदयारूढाग्रहंभावनां
पूर्णाहंकृतिरेकदा कवलयन्सर्वेश्वरस्सर्गगः ।
आस्ते तद्गतभेदपूगरहितो यो नित्यशुद्धोऽद्वयो
दद्यादीश्वरपूर्णबोधविभवां मुक्तिं स रामोऽद्य मे ॥ ८५ ॥

अन्तर्बाह्यजचित्तचैत्यकलना संगानुमंथनतो
जीवन्मुक्तिमवाप्य यीतकलनान्नष्टेऽथ कर्मत्रये ।
देहाक्षासुनिरूपनाशाविभवो यश्शिष्यतेऽस्मद्गुरुः
दद्यात्स्थूलकलेवरादिरहितां मुक्तिं स रामोऽद्य मे ॥ ८६ ॥

मायाकल्पितदेशकालकलना संजातनानाविधा-
नेकोपाधिदृढानुभूतिममताहंतातमोभास्करः ।
यो निष्काममुनीन्द्रहृन्मणिगृहालंकारपादाम्बुजो-
दद्यात्कामगणक्षयात्तविभवां मुक्तिं स रामोऽद्य मे ॥ ८७ ॥

सर्वोपाधिविहीनपुष्करतनुस्संशान्तरूपामिधो
नानाकामलया विमुक्तमुनिहृत्पद्मावलीषट्पदः ।
यो वाङ्मानसवृत्त्यगोचरमहानन्दावबोधांबुधि-
र्दद्यात्सर्वहृदब्जचिन्मणिभवां मुक्तिं स रामोऽद्य मे ॥ ८८ ॥

दासोऽहंतव मृत्युपाशकलितं मां रक्ष भक्तार्तिह-
न्नेवं प्रार्थ्यविशुद्धिमेत्य मनसोऽहंत्वं त्वमेवास्म्यहम् ।
भेदो नौ नहि मायिकोऽयमिति यं नारायण प्राप्नुयुः
दद्याद्भागवताखिलगम्यपदवीं मुक्तिं स रामोऽद्य मे ॥ ८९ ॥

मायाधीनभवभेदकूलपटले निर्माय बोधाग्निना
दग्धे काममकामखड्गदलिते कामे सभृत्यैस्समम् ।

सशान्ताखिलभेदकामकलन य स्वात्मरूप विदु
दद्यात्काममिदाविनाशविभवा मुक्ति स रामोऽद्य मे ॥ ९० ॥

मायापादजपुष्करादिकमहाभूताळियोगोद्भवा-
नेकब्रह्मकटाहकोटिपटल त्रैगुण्यसकल्पित ।
निस्त्रैगुण्यमहात्रिपादविभवो योऽकल्पित केनचि-
द्द्यान्मायिकपादमोहविकला मुक्ति स रामोऽद्य मे ॥ ९१ ॥

यास्याम्यद्य विदेहमुक्तिपदवीं मुञ्चेह मा चित्त भो
यद्वा चिद्गगने विरूपविलय गच्छ त्वदीयैस्समम् ।
एव चित्तशिशु प्रबोध्य यतिराट् यस्मिन्समाप्तो भवे-
द्द्यात्केऽनल्पवीतचित्तपदवीं मुक्ति स रामोऽद्य मे ॥ ९२ ॥

राग त्व भज वीतरागपदवीं द्वेष त्वमद्वेषता
भीते त्व भज निर्भयत्वमधुना द्वैत त्वमद्वैतताम् ।
रागादि विनियम्य निष्कळपदे यस्मिन्समाप्तो भवे-
द्द्यान्निष्कळनिर्भयाद्वयपदा मुक्ति स रामोऽद्य मे ॥ ९३ ॥

काम त्व भज वीतकामपदवीं तृष्णे वितृष्णासुख
भो भो मानस निर्विकल्पमधुनाऽहकारशान्तितराम् ।
सान्त्वोक्त्यैव सुहृज्जन परिहरन्यस्मिन्भजत्येकता
दद्यात्काममुखारिभगविभवा मुक्ति स रामोऽद्य मे ॥ ९४ ॥

विश्वाकारमति विहाय सहजानन्दावबोधामति
स्वीकृत्यैव महानुभावचरणाश्श्रीवीतहव्यादय ।
सत्यज्ञानसुखार्णवेऽतिविपुले यस्मिन्भजत्येकता
दद्यान्मौनिगणात्तसौख्यविभवा मुक्ति स रामोऽद्य मे ॥ ९५ ॥

ब्रह्मास्मीत्यनुभूतियोगदहने निर्वृत्तितैलैधिते-
हुत्वा मायिकचित्तचैत्यकलना होमानलोत्था सतीम् ।
मुक्त्याख्या परिरभ्य मस्करिवरो यत्सौख्यतल्प गतो-
दद्याद्द्रष्टव्यविरूपनाशविभवा मुक्ति स रामोऽद्य मे ॥ ९६ ॥

संशान्ताखिलपञ्चभूतरचनासंजातनानाजनि-
ध्वातुर्विध्यविरोधशून्यविभवो जन्माद्यभावश्रुते ।
दीर्घह्रस्वबृहत्कृशादिरहितो यस्सर्वदा भासते
दद्याज्जन्मनिरोधशून्यविभवा मुक्ति स रामोऽद्य मे ॥ ९७ ॥

सत्यज्ञानसुखाज्ञतासमुदिता सत्यादिमायालय-
प्रत्याद्यानमहावचोऽर्थविभवः प्राप्तः पुनः प्राप्यते ।
मुक्तो मुच्यत एव नेतर इति ज्ञानाद्यदैक्यं व्रजे-
द्दद्याज्ज्ञानसुनिश्चितार्थविभवां मुक्तिं स रामोऽद्य मे ॥ ९८ ॥

स्वाज्ञाने सकलंकचित्तविभवे स्वज्ञानवैश्वानरा-
द्दग्धे सम्यगनावृतः परशिवस्वाराज्यसिंहासने ।
एको यः परिशिष्यते परपुमान्नारायणोऽयं स्वयं
दद्याद्द्वैतविरूपनाशविभवां मुक्तिं स रामोऽद्य मे ॥ ९९ ॥

भूमब्रह्मणि मूढबुध्यनुभवारूढं समस्तं जग-
न्नेतीति श्रुतिसिद्धयुक्तिपटलैर्नास्तीति निश्चित्य तत् ।
स्वत्तया विश्वविनोदनं मुनिगणा यस्मिन्समाप्तिं गता
दद्याद्विश्वविनोदभङ्गविभवां मुक्तिं स रामोऽद्य मे ॥ १०० ॥

व्याविद्धाखिलवाक्यपादविभवो वाग्बुध्यगम्योऽद्वयो
निस्साध्योऽयमसाधनो नहि भवो नान्तंगत कुत्रचित् ।
लक्ष्यालक्ष्यविभागमोहरहितो यद्दिश्यते श्रीहरिः
दद्याल्लक्ष्यविलक्षणाद्वयपदां मुक्तिं स रामोऽद्य मे ॥ १०१ ॥

आविद्यार्थपदे विरूपविलयं याते स्वकार्यैस्समं
संशान्ताखिलनामरूपविभवः प्रत्यक्परात्मैक्यरुः ।
चातुर्विध्यपदाभिधानरहितो यत्तैपदङ्शिष्यते
दद्यात्पादचतुष्टयैक्यविभवां मुक्तिं स रामोऽद्य मे ॥ १०२ ॥

श्रद्धाभक्तिपुरस्सरं रहसि यो विष्णवालये या पठे-
न्नानालिङ्गविभङ्गमुक्तिशतकं तात्पर्यतस्सादरम् ।
तस्य त्रैपदरामचन्द्रतरणिस्स्वाज्ञानमुन्मूलयन्
दास्यत्येव विदेहमुक्तिपदवीं शिष्टत्रिपाद्रूपिणीम् ॥ १०३ ॥

श्रीमत्पारमहंस्यधर्मनिरतः श्रीवासुदेवेन्द्रवि-
त्पादाम्भोजनिवासिषट्पदनिभः श्रीरामचन्द्रेन्द्रतः ।
यत्तुं ध्यातुमशक्यमायिकपदालंकारसंघातत-
ल्लिङ्गाकारविभङ्गमुक्तिशतकं ज्ञातं कटाक्षादरेः ॥ १०४ ॥

ओम्

श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुश्रीरामचन्द्रार्पणमस्तु ॥

॥ श्रीः ॥

# ॥ पंचकोशविमर्शनी ॥

नचाहं शरीरं जडत्वात्पृथक्त्वा-
न्नच प्राणवर्गः पिपासादिमत्वात्
मनो नापि संकल्पमूलाश्रयत्वा-
त्ततस्त्यागराजस्वरूपोऽहमेव ॥ १ ॥

न बुद्धिस्सुषुप्तौ सुसंकोचितत्वा-
न्न चानन्दरूपोप्यहंताभिमानात् ।
न चापीन्द्रियादिर्गुणित्वाद्बहुत्वा-
त्ततस्त्यागराजस्वरूपोऽहमेव ॥ २ ॥

न धात्रादिमूर्तिर्गुणाकारकत्वा-
न्न विश्वादिमूर्तिर्दशापालकत्वात् ।
न भान्वादिमूर्तित्रय तैजसत्वा-
त्ततस्त्यागराजस्वरूपोऽहमेव ॥ ३ ॥

न नादोऽगुणत्वान्न शुक्लादितेजो
मनोगोचरत्वान्न च ध्यानयोगौ ।
नचाप्युन्मनीचित्तनैर्मल्यकत्वा-
त्ततस्त्यागराजस्वरूपोऽहमेव ॥ ४ ॥

न चेशः प्रभुत्वाच्च मायावृतत्वा-
न्न जीवोप्यविद्यावृतत्वाद्बहुत्वात् ।
न मायास्वरूपोप्यसत्वप्रमगा-
त्ततस्त्यागराजस्वरूपोऽहमेव ॥ ५ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचिता पंचकोशविमर्शनी
संपूर्णा ॥

॥ श्रीः ॥

# ॥ विज्ञाननौकाव्याख्या ॥

## मुकुन्दपरिव्राजकविरचिता



ॐ श्रीमच्छङ्कराचार्यगुरुचरणकमलेभ्यो नमः

ॐ नारायणं नमस्यामि मोहान्धतिमिरापहम् ।
प्रकाशकं प्रकाश्यानां शुद्धबुद्धस्वरूपिणम् ॥

इह खल्वविद्याजलधेः परं पारं गन्तुमिच्छुर्भगवान् शङ्कराचार्यो विज्ञाननावं प्रकटीकुर्वन्नधिकारिणं तावल्लक्षयति ।

तपोयज्ञदानादिभिः शुद्धबुद्धि-
विरक्तो नृपादौ पदे तुच्छबुद्ध्या ।
परित्यज्य सर्वं यदाप्नोति तत्त्वं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥

तपो यज्ञदानादिभिरिति । तपो नाम स्ववर्णाश्रमधर्माचरणम् । यज्ञ ईश्वरार्पणबुद्ध्या यजनं तथा दानं ब्राह्मणेभ्यस्तीर्थादौ हिरण्यादिद्रव्यस्य निष्कामत्वेन प्रयच्छनम् । आदिशब्दात्सगुणब्रह्मोपासनवेदाध्ययनयोर्ग्रहणम् । तपोयज्ञदानादिभिः शुद्धा निर्मलीभूता नित्यानित्यविवेकसमर्थेति यावत्, बुद्धिरन्तःकरणं यस्य सः "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्"—इति स्मृतेः । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः । अत एव नृपादौ पदे मिथ्यात्वबुद्ध्या विरक्तः निर्गतो भोगेषु तृष्णा यस्मात्सः । आदिशब्देन परलोकग्रहणं, ब्रह्मलोकपर्यन्तानां सर्वेषां क्षयिष्णुतां बुद्ध्वा तेभ्यो वान्ताशन इव विरक्तः । "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति स्मृतेः । श्रुतिरपि "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत" इति । यथा मृगतृष्णां परिज्ञाय न तत्रोदकार्थी प्रवर्तते तद्वदिति स्नेह इति । एतादृशोऽधिकारी सर्वं परित्यज्य सर्वं निखिलप्रत्यग्गोचरं शुक्तिकायां रजतादिवत्कल्पितं परित्यजेदित्यर्थः ॥

शास्त्र चाह—

प्रत्यक्षमप्यवस्तुत्वाद्विश्वं नास्त्यमले त्वयि ।
रज्जौ सर्प इव व्यक्तमेवमेव लयं व्रजेत् ॥

ब्रह्मैवाह न मत्तोऽन्यदिति च तत्व स्वस्वरूप प्राप्नोति लभते परमफलभागी भवतीत्यर्थः । ननु अप्राप्तस्य स्वर्गादे प्राप्ति फलमित्युच्यते नित्यप्राप्तस्य ब्राह्मण कथ फलत्वमुक्तमिति चेन्न । नित्यप्राप्तस्यापि फलत्व श्रुतिराह—तरति शोकमात्मविदिति । तदेव भिन्नत्व भगवान् शङ्कर. स्वमुखेन प्रतिपेधयति-पर निरतिशय ब्रह्मव्यापक नित्य कालत्रयाबाध्य तदेवाहमित्यभेदे व्याख्येयस्यर्थ तत्वमसीति श्रुते. ॥ २ ॥ परमतत्वप्राप्तिस्तु श्रवणादिना भवतीति नोक्त तदेव दर्शयिष्यन्नाह ।

दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं
समाराध्य भक्त्या विचार्य स्वरूपम् ।
यदाप्नोति तत्वं निदिध्यास्य विद्वान्
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ २ ॥

दयालुमिति । पूर्वोक्ताधिकारी भक्त्या नम्रीभावेन गुरुमाराध्य मनोवाक्कायै तत्सेवया प्रसन्न कृत्वा इत्यर्थ । कीदृश गुरु ? दयालु दयानामार्तेषु कृपा तया युक्त परमकारुणिकमिति । दयालुत्वमेवोपदेशकारणम् । पुन कीदृश ? ब्रह्मनिष्ठ ब्रह्मणि निष्ठा स्थितिर्यस्य स त । पुन कथभूत ? प्रशान्त रागद्वेषादिद्वन्द्वातीतम् । श्रुतिश्च "समित्पाणि श्रोत्रिय ब्रह्मनिष्ठ गुरु तत्वज्ञानायाभिगच्छेत्" इति । तस्माद्गुरोस्तत्वमस्यादिमहावाक्यश्रवणपूर्वक स्वस्वरूप विचार्य मनन कृत्वा गुरुमुखात् श्रुतस्य तत्वस्य युक्त्या दृढीकरण मनन तदनन्तर सूक्ष्मया चित्तवृत्त्या प्रवाहीकरण निदिध्यासन तदपि कृत्वा तदनन्तर विद्वाश्चतुर्थी भूमिका प्राप्त स्वमवल्लोक पश्यन् तत्वमाप्नोति या जडाना महदादितत्वाना प्रकाशिका प्रकृतिर्येन चैतन्यात्मिका भवति तदेवाह चैतन्यस्वरूप इति तत्व प्राप्नोतीत्यर्थ । तथा च श्रुति । आत्मा वा अरे द्रष्टव्य । तत्र द्रष्टव्य इति आत्मसाक्षात्कारफलमनूद्य तत्साधनत्वेन श्रवण विदधाति । श्रवण नाम सर्वेषा उपनिषद्वाक्यानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूलन्यायविचार ॥ श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । पर अविद्याजन्ये सकार्ययाऽविद्यया अस्पृष्टमित्यर्थ । ब्रह्मानन्दात्मक आनन्दो ब्रह्मेति श्रुते । तदेवानन्दात्मक ब्रह्माहमिति पूर्ववदभिन्नमित्यर्थ ॥ २ ॥

ननु ब्रह्मेन्द्रादीनामप्यानन्दो दृश्यते किमिति नियमो ब्रह्मैवानन्दस्वरूपमित्यत्राह ।

यदानन्दरूप प्रकाशस्वरूपं
निरस्तप्रपञ्चं परिच्छेदशून्यम् ।

अहंब्रह्मवृत्त्येकगम्यं तुरीयं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ २ ॥

यदिति। यदानन्दात्मकं ब्रह्म तदेवाहमिति सम्बन्धः। यथा वापकूपतडागादीना महाजलाशये-ऽन्तर्भावो भवति सर्वस्नानपानादिप्रयोजन सिध्यतीति सर्वेषां ब्रह्मेन्द्रादिक्षुद्रानन्दानां ब्रह्मानन्देऽन्तर्भूतत्वात् ब्रह्मैव परमानन्दरूपम्। श्रुतिश्च एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति सत्यं ज्ञानमनन्तं ब्रह्मेति च। ननु तस्यापि प्रकाशकोऽन्यः स्यादित्याह—प्रकाशस्वरूपमिति। ननु ज्योतिःप्रकाशेन प्रकाश्य तद्ब्रह्म अव्यक्तजडानां अप्रकाशकत्वात् स्वप्रकाशकमित्यर्थः। ज्योतिषा-मपि तज्ज्योतिस्तमसः परमुच्यत इति स्मृतेः। वसिष्ठोऽप्याह।

निरंशत्वाद्विभुत्वाच्च तथा नश्वरभावतः।
ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम् ॥

इति।

नन्विश्वभूतस्यापि ब्रह्मणो देहादिसम्बन्धात्पुण्यादिसम्बन्धः स्यादेव इत्याशङ्क्य देहादिसम्बन्धाभावं दर्शयति निरस्तप्रपञ्चं निरस्तोऽपगतः प्रपञ्चो देहादिविस्तारो यस्मात् तत् निर्लेपमित्यर्थः। "शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते"। इति स्मृतेः। असङ्गो न हि सज्जते इति च। निरस्तप्रपञ्चत्वात्पूर्णं न भवति। ननु परिच्छिन्नत्वात्माना त्वेनोपलभ्यमानस्य कथं पूर्णत्वमित्याशङ्क्याह। परिच्छेदशून्यमिति। जीवेश्वरभेदेन इयत्तया रहितं पूर्णं परमार्थेनेत्यर्थः। जीवेश्वरावुभौ मायाख्याया यावद्देवेनोरव्यौ यथा च एवादित्य सर्वभूतेषु एको भूतेषु देवेषु गूढ इति श्रुतेः। यथेन्द्र पितरौ द्वैत तत्र च चाद्वैतमेव हीति॥ तद्ब्रह्म केनोपायेन ज्ञातव्यमित्यत आह—

यदज्ञानतो भाति विश्वं समस्तं
विनष्टं च सद्यो यदात्मप्रबोधे ।
मनोवागतीतं विशुद्धं विमुक्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ४ ॥

यदिति । यद्यस्य ब्रह्मणोऽज्ञानतो विश्व स्फुरति तदेव ब्रह्माऽहमिति सम्बन्ध । यथा यावन्नीलपृष्ठिकादिशुक्तिज्ञान नोत्पद्यते तावद्रजतज्ञान सत्यमिव स्फुरति तथैव यावत्सच्चिदानन्दात्मक ब्रह्म साक्षान्नानुभूयते तावद्विश्व मिथ्याभूतमपि सत्यवद्भ्रान्त्या भासते प्रतीयते ॥ यद्यस्मिन्नात्म प्रबोधे महावाक्यश्रवणानन्तर ब्रह्मैवाहमिति साक्षात्कृते साते सद्यस्तत्क्षणमेव समस्त विश्व देहादिव्यवहाररूप विनष्ट भवति स्वस्वरूपे ब्रह्मणि स्थितानां जडोन्मत्तवदाचरितानां न स्फुरति इत्यर्थ । तथाचोक्त भागवते

देहं विनश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिहितं मदिरामदान्धः । इति ॥

प्रारब्धप्रेरितेन प्राणवातेन शुष्कपर्णवत्तस्य चेष्टा भवतीत्यर्थ । तदेव ब्रह्म विशिनष्टि-मनोवाग्भ्यामुल्लङ्घित अविषयमिति "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुते । विशुद्ध मायातीत निरञ्जन विमुक्त कर्तृत्वाद्यनात्मधर्मरहित परब्रह्म यद्वासुदेवाख्य तदहमिति तात्पर्यार्थ ॥

ननु जगन्निराकरणेन किं स्यादित्यत आह ।

निषेधे कृते नेति नेतीति वाक्यैः
समाधिस्थितानां यदाभाति पूर्णम् ।
अवस्थात्रयातीतमद्वैतमेकं
पर ब्रह्म नित्यं तदेवाहमस्मि ॥ ५ ॥

निषेध इति । यद्ब्रह्म समाधिस्थितानां पूर्णमाभाति तदेव ब्रह्माहमिति सम्बन्ध । नेतिनेतीतिश्रुतिवाक्यैर्निषेधे कृते निरुपाधिके स्वरूपे कल्पितोपाधौ निरस्ते सति स्वाभाविके समाधौ वर्तमानानां परमहंसानां निवृत्तसर्वकरणानां निगलिताहंममाभिमानानां शुद्धान्तःकरणानां निरस्तप्रवृत्तीनां जीवन्मुक्तस्वरूपाणां पूर्णं भाति ब्रह्मैव सर्वं पश्यन्तीत्यर्थं । यथान्धकारादौ रज्जुस्वरूपमविज्ञाय कश्चिद्भ्रमाद्रज्जौ सर्पं

पश्यति । नायं सर्पः किन्तुरज्जुरेवेति निषेधे कृते रज्जुरेव दृढीभवतीति तद्वदित्यर्थः । तथाचोक्तं

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ इति ॥

अवस्थात्रयातीतं जाग्रन्नाशे स्वप्नसाक्षित्वेन स्वप्ने तिष्ठति । स्वप्नाभावे सुषुप्तौ तिष्ठति तदभावे तुरीयं भवतीत्यतीतं "असङ्गो ह्ययं पुरुष" इति श्रुतेः । तथाऽद्वैतं न हि तार्किकादेरीश्वरवत्तटस्थविषय-मित्यर्थः । एकं सजातीयादिभेदरहितं यत्परं ब्रह्म विकल्पिताधिष्ठानं तदेवाहम् ॥ ५ ॥

आत्मसत्ताव्यतिरेकेण जगदभावमुपदिशति—

यदानन्दलेशैः समानन्दविश्वं
यदाभाति सत्वे तदाभाति सर्वम् ।
यदालोचने हेयमन्यत्समस्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ६ ॥

यदिति । यचस्यानन्दस्वरूपस्य ब्रह्मणो लेशैः समानन्दविश्वं तदेव ब्रह्माहमिति सम्बन्धः । लेशैरस्ति भाति प्रियं इत्यंशत्रिकैः नामरूपात्मकं जडं विश्वं सुखात्मकवत्स्फुरतीति । यदस्मिन् ब्रह्मण्याभाति सत्वे सत्यस्वरूपे प्रकाशमाने सति तदा पश्चाद् । भ्रमनशात्स्थाणाविव पुरुषः कल्पितं सर्वं विश्वमाभाति । भ्रमे निवृत्ते तु मत्यैव सत्यस्वरूपं ब्रह्मणः पृथक् तदा विश्वं नास्तीत्यर्थः । तथा च मृगतृष्णिकायाश्च जलं गृहीत्वा गगनारविन्दं च विधिच्य कश्चित् पश्चात्सुगन्धिवनं परयोग्यस्नानमेन सत्ते चात्र प्रतिष्ठ इति ब्रूयादिति । यदस्मिन्ब्रह्मण्यालोचने श्रवणमनननिदिध्यासनैः साक्षात्कृते सति अन्यद् यद्भ्रमदशायां सत्यमिव भाति तत्समस्तं हेयं ब्रह्मव्यतिरेकेण नादरणीयमित्यर्थः । यत्परं ब्रह्म तदेवाहमिति योजना ॥ ६ ॥

अध्यारोपावस्थायां तस्यैव ब्रह्मणः सृष्ट्यादिकारणत्वं दर्शयति—

अनन्तं विभुं सर्वयोनिं निरीहं शिवं सङ्गहीनं यदोङ्कारगम्यम् ।
निराकारमत्युज्ज्वलं मृत्युहीनं परंब्रह्म नित्यं तदेवाहमस्मि ॥ ७ ॥

मानो भवति तस्यैव पुण्यादिसम्बन्धः । यतो निरीहं निर्गतेहा फलेच्छा यस्मात्तत् । न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहेति स्मृतेः । लिम्पन्तीति देहारम्भकत्वेन न बध्नन्ति शिवं मङ्गलात्मकं ॐकारस्य कार्यभूतैर्वेदान्तशास्त्रैरवगम्यमानत्वादित्योङ्कारगम्यत् । यद्वा योगबलेन हृदयपुण्डरीके मनो निरुध्य प्रणवोच्चारपूर्वकेन ध्यानेन ज्योतिस्फुरणमित्योङ्कारगम्यम् । "ज्योतिः पश्यन्ति युञ्जाना" इति भारते । यद्वा प्रणवोपासनया कालान्तरे ब्रह्मलोकं प्राप्य ब्रह्मणा सह मुच्यते इति । तथा च

ॐ मित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥

इति निराकारं निरुपाधिकं अत्युज्ज्वलं स्वप्रकाशं मृत्युहीनं जन्ममरणाद्यनात्मधर्मात् हीनं रहितम् ॥ ७ ॥

ब्रह्मानन्दे निमग्नस्य बुद्धिर्विषयानन्दे न भवतीत्याह ।

यदानन्दसिन्धौ निमग्नः पुमान्स्याद्-
विद्याविलासः समस्तः प्रपञ्चः ।
तदा न स्फुरत्यद्भुतं यन्निमित्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ८ ॥

यदिति । यद्यस्मिन्नानन्दसमुद्रे ब्रह्मणि पुमान् परमहंसस्तदाकारया वृत्त्या निमग्नः स्यादिति तदा- ऽऽद्यविद्याकार्यं समस्तप्रपञ्चविस्तारो न स्फुरति विषयानन्दस्य भानमेव नास्ति तदा प्रीतिर्दूरे । यथा दिवान्धानामुलूकादीनां पुरुषादिव्यवहारो न भासते एवं परमानन्दसमुद्रे निमग्नस्य परमहंसस्य जीवन्मुक्तस्योन्मीलितनयनस्य जगन्न भासत इत्यर्थः ॥ तथा च

कारकव्यवहारे हि शुद्धवस्तु न वीक्ष्यते ।
शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिः कुतः ॥

इति । यदद्भुतं ब्रह्म कर्त्रव्यकर्तृ भोक्त्रव्यभोक्तृ भर्त्रव्यभर्तृ इत्याद्याश्चर्यात्मकं निमित्तं मायाप्रकाश- कत्वेन परमकारणं तदेव ब्रह्माहम् ॥ ८ ॥

अथ पाठकस्य श्रोतुश्च फलमाह—

स्वरूपानुसन्धानरूपस्तुतिं यः
पठेदादराद्भक्तिभावो मनुष्यः ।

शृणोतीह वा नित्यमुद्युक्तचित्तो
भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९ ॥

स्वरूपेति । यो मनुष्यो भक्तिभावो भक्तियुक्तचित्तः सन् स्वरूपानुसन्धानपूर्विकां रूपस्तुतिं भेदपर्वतभेदिनीं ब्रह्मविद्यामेतामादरात् प्रीत्या पठेत्सार्थां स्मरेदित्यर्थः । यश्च समाहितचित्तः सन्निह नित्यं शृणोति सोऽत्रैव जीवदशायामेव भ्रमरकीटवद्विष्णुर्भवेत् वेदप्रमाणात् ब्रह्म वेद ब्रह्मैव भवतीति प्रमाणात् ॥ ९ ॥

विज्ञाननावं परिगृह्य कश्चित्
तरेदज्ञानमयं भवाब्धिम् ।
ज्ञानासिना यो हि विच्छिद्य तृष्णां
विष्णोः पदं याति स एव धन्यः ॥ १० ॥

इति श्रीमुकुन्दनाम्ना परिव्राजकेन कृता विज्ञाननौकापदव्याख्या समाप्ता ॥

ॐ तत्सत् ।

